Hari Om

# ŚRĪMAD

# BHĀGAVATA

# MAHĀPURĀṆAM

## *of Maharṣi Vedavyāsa*

## SKANDHA-IX

***With the Commentaries :***
Bhavarthadipika of Sri Sridharaswami, Bhagavatachandrachandrika
of Sri Vira Raghavacharya, Padaratnavali of Sri Vijayadhvaja Tirtha

**Edited by**


Panditaraja, Sahitya Visarada, Vachaspati, Siromani, Vidwan,
Recipient of President's Certificate of Honour
**Dr. N.C.V. Narasimhacharya,** M A B O L,
SPECIAL OFFICER
**SRI BHAGAVATA PROJECT,**
T T Devasthanams, Tirupati






Published by
**Executive Officer,**
Tirumala Tirupati Devasthanams,
2005

**Srimad Bhagavatamahapuranam - Skandha-IX**
Edited by
**Dr. N.C.V. Narasimhacharya**

T.T D. Religious Publications Series No. 654

First Edition - 2005

Price Rs

Copies . 1000

*Published by*
**Sri A.P.V.N. Sarma,** I A S
Executive Officer,
T T Devasthanams,
Tirupati

*Cover Design*
**P. Siva Prasad, T.T.D.**

*DTP Work by*
**Vinayaka Graphics,**
Tirupati, Ph . 0877-5572402

*Printed at*
Adisri Screens, Tirupati

ओ नमो वेङ्कटेशाय

श्रीवेदव्यासमहर्षिप्रणीतम्

# श्रीमद्भागवतमहापुराणम्

## नवमः स्कन्धः

श्रीश्रीधरस्वामिविरचिताभावार्थदीपिका, श्रीवीरराघवनिर्मिता श्रीभागवतचन्द्रचन्द्रिका,
श्रीविजयध्वजविलिखिता पदरत्नावली चेति त्रिभिः व्याख्यानैः भूषितम्

पण्डितराजः, साहित्यविशारदः, वाचस्पतिः, शिरोमणिः, विद्वान् इति बिरुदभाजा
**राष्ट्रपतिपुरस्कारग्रहीत्रा**
**डॉ. यन्. सि. वि. नरसिंहाचार्येण** यम्.ए., बि. ओ. यल्.,
(विशिष्टाधिकारी, श्रीमद्भागवतशोधपूर्णपरिष्करणपरिषत्)
**परिष्कृतम्**




तिरुमल तिरुपति देवस्थान
**कार्यनिर्वहणाधिकारिभिः**
**प्रकाशितम्**
२००५

हरिः ओम्

ईशानां जगतोऽस्य वेङ्कटपतेर्विष्णोः परां प्रेयसीं
तद्वक्षःस्थलनित्यवासरसिकां तत्क्षान्तिसंवर्धनीम् ।
पद्मालङ्कृतपाणिपल्लवयुगां पद्मासनस्थां श्रियं
वात्सल्यादिगुणोज्ज्वलां भगवतीं वन्दे जगन्मातरम् ।



श्रीमद्वेङ्कटनायकस्य हृदये द्वेधा विधायाऽऽत्मनो
मूर्तिं शश्वदियं कृपामृतझरीस्रोतस्विनी भार्गवी ।
उद्धर्तुं निखिलानगण्यविषमांहोवह्निदग्धात्मनो
जन्तून् सन्निदधाति विश्वजननी पद्मावती रक्षतात् ॥

हरिः ओम्

लोकोद्धारैकदीक्षापरनिगममहाहर्म्यमार्गप्रदीपः
स्वाङ्घ्रिद्वन्द्वप्रपन्नाखिलदुरिततमोध्वंसिपुण्यप्रदीपः ।
दिङ्मूढेभ्यो नरेभ्यः प्रकटितसरणिः स्नेहदीप्रः प्रदीपः
युष्मानस्मान्समस्तानवतु वृषगिरिस्थास्नुमङ्गल्यदीपः ॥



श्रीमद्भागवतं पुराणमखिलाम्नायैकसारः क्व वा ?
प्रज्ञादुर्विधकिम्पचानधिषणाः शैक्षाः क्व वा मादृशाः ?
भक्त्या चापलतस्तथाऽपि च परिष्कर्तुं वयं व्यापृताः,
एतत् प्राभृतयाम वेङ्कटपतेः पादाब्जयोः, स्वीक्रियात् ॥

## The Critical Edition of Srimad Bhagavata

# The Editorial Board

# CONTENTS

# Foreword

Ancient Indian literature is very vast. Vedas, Vedangas, Darshanas and Puranas etc. form part of it.

Puranas play a very prominent role in explaining the meaning of the holy Vedas. They contain beautiful stories, through which the purport of the Vedas is amply brought out.

There are 18 Puranas, authored by Sri Vedavyasa, who also wrote Mahabharata to spread Dharma. Even after writing Mahabharata and other puranas, he could gain no mental peace. Therefore, as per the advice of sage Narada, he composed Srimad Bhagavata, which has become highly popular throughout the country.

There are many commentaries on Bhagavata, amongst which, the commentaries explaining the Advaita, Visistadvaita and Dwaita traditions are very famous. They were written by Sridharacharya, Sri Veera Raghavacharya and Sri Vijayadhwaja Teertha, respectively.

T.T.D. established Sri Bhagavatha Project with the intention of publishing the edited text and the above commentaries Editing of the whole work has been completed and the printing is now under progress.

This is the ninth skandha of Srimad Bhagavata. Late Sriman N C.V. Narasimhacharya, the well known Sanskrit Scholar and recipient of President's award, prepared this critical edition, with meticulous care. He deserves our gratitude.

We hope the readers as well as educational institutions would utilise this book, thereby making the efforts of the TTD fruitful.

**(AJEYA KALLAM)**

**TIRUPATI**

**EXECUTIVE OFFICER**

**T.T.DEVASTHANAMS**

# Introduction

This is the ninth Skandha of Srimad Bhagavata, which explains vividly the account of both the Solar and Lunar dynasties. Ikshvaku, Ambarisha, Mandhata, Khatwanga, Janaka etc. belong to the Solar dynasty, in which Lord Sri Rama, who is considered to be Poornavatara of Maha Vishnu, was also born.

Similarly, Nahusha, Yayati, Gadhi, Dushyanta, Bharata, Ranti Deva etc. were born in the Lunar dynasty in which, Lord Sri Krishna, considered to be paripurnavatara, was also born.

An account of Parasurama one of the other Avataras is also given in this Skandha.

Vamsa and Vamsanucharita are part of the five characteristics of the Puranas. These two are explained elaborately in this skandha. There are many kings, endowed with special virtues like worshipping the Lord, knowledge of Vedas and truthfulness whose history is described in this skandha.

Srimad Bhagavata contains ten characteristics like Sarga and Visarga. Isanukatha is one of them, which is described prominently by way of narrating the events related to Avataras of the Lord.

The stories of Ambarisha, Soubhari and Yayati etc. are beautifully described in this book.

Ambarisha was the son of Nabhaga. His devotion towards Maha - Vishnu knew no bounds, by which the ego and pride of the sage Durwasa were curtailed. Vyasa describes the deep devotion of Ambarisha in the verses 18 to 20 of the 4th chapter of this skandha. He says that Ambarisha utilised every part of his body constantly in the service of the Lord.

That's why Lord Maha Vishnu protected Ambarisha from the fury of sage Durwasa. When Durwasa approached Lord Vishnu for protection, Maha Vishnu said, "I am in the hands of my devotees, My heart is entirely occupied by them. I am fond of my devotees, they are my very heart, and I am their's. They know nothing except Me. I know nothing except them". (Bhagavatam 9-4-63,68)

In this way the greatness of the devotees and the affection of the Lord towards them were described aptly.

The story of Soubhari also is very interesting. After witnessing the amorous play of the male fish in the river Yamuna, he wishes to marry and lead similar happy life of a house holder. After becoming a hourse-holder and a father of many children, he gets disillusioned with his life and declares that one should not be attached to samsara; and should have control over his senses and has to resort to meditate solitarily. (Bhagavatam 9-6-51)

The story of Yayati is also similar. He enjoys material pleasures for a long time and gets vexed in the end. He says "Carnal desires cannot be wiped out by enjoying them. They increase like fire with the ghee". (Bhagavatam 9-19-14)

In this manner, in the 9th Skandha of Srimad Bhagavata, the transiency of the sense pleasures, the value of non-attachment and devotion are brought out effectively.

The other details about the text and the three commentaries included in it, are already given, in the introduction of the first Skandha itself.

This Skandha was edited by well-known Sanskrit Scholar, recipient of President's award, and Our Guru, Sriman Dr. N.C.V. Narasimhacharya Swami. He reached Lotus feet of the Lord, even before the publication of this book.

The scholars who assisted in preparing this edition are : 1. Sriman K.C. Jayachandra Sastri, 2. Sriman U Venkatramaiah and 3. Sriman Varada Rajan, who deserve the gratitude of the readers.

The research assistants, namely Sri S.B.S. Bhattacharya, Dr. S.Poornavalli and Dr. S. Dasaratha also deserve our commendation. Sri I. Venkateswara Rao and others who helped immensely in proof reading of the work also deserve our gratitude.

Sri Ajeya Kallam, IAS, the revered Executive Officer of the Tirumala Tirupati Devasthanams and Dr. Medasani Mohan, the Director of Annamacharya project and other members of the Advisory committee of the Bhagavata project are offered our deep gratitude for their keen interest and co-operation in bringing out this edition.

**Samudrala Lakshmanaiah,**
Special Officer,
Sri Bhagavata Project,
T.T.Devasthanams

Tirupati.

# निवेदनम्

श्रीमद्भागवतस्य नवमः स्कन्धोऽयम् । अस्मिन् स्कन्धे सूर्यस्य चन्द्रस्य च वंशौ अतिविस्तृततया वर्णितौ ।

सूर्यवंशे इक्ष्वाकुः, अम्बरीषः, मान्धाता, खट्वाङ्गः, जनकः इत्यादयो नृपाः सम्बभूवुः। पूर्णावतारः श्रीरामचन्द्रोऽपि अस्मिन्नेव वंशे उद्बभूव ।

एवं चन्द्रवंशे नहुषः, ययातिः, गाधिः, दुष्यन्तः, भरतः, रन्तिदेवः, धृतराष्ट्रः इत्यादयः अनेके राजानः जन्म लेभिरे। अपि च परिपूर्णावतारः श्रीकृष्णोऽपि अत्रैव जातो बभूव। अवतारेष्वन्यतमस्य परशुरामस्यापि चरित्रमस्मिन् स्कन्धे पठ्यते ।

वंशस्य वंशानुचरितस्य च वर्णनं पुराणलक्षणेषु अन्यतमं भवति। तच्चास्मिन् स्कन्धे बहुधा निरूपितमस्ति। अत्र अभिहितेषु राजसु बहवः विशिष्टलक्षणलक्षिताः श्रूयन्ते। भगवतः अर्चनया, वेदविज्ञानेन, सत्यनिष्ठया चेत्येवं तत्तद्गुणैः प्रसिद्धाः भूपाला अनेके अत्र परिकीर्त्यन्ते।

सर्गविसर्गादिदशलक्षणलक्षितं महापुराणं भागवतमिति प्रसिद्धम्। तत्र ईशानुकथाप्रतिपादनात्मकं लक्षणं परशुरामस्य श्रीरामस्य श्रीकृष्णस्य च चरित्राणां प्रस्तावेन व्यक्तीकृतं भवति।

अम्बरीष - सौभरि - ययात्यादीनां परमरमणीयानि चरित्राणि पाठकानां हृदयानि रञ्जयन्ति।

नाभागस्य पुत्रः अम्बरीषः भगवद्भक्तिधुरन्धरो बभूव। तस्य भक्त्यतिशयः दुर्वाससः अहङ्कारस्य भञ्जक आसीत्। अम्बरीषस्य भगवद्भक्तिः भगवता व्यासेन एवं वर्णिता दृश्यते -

*स वै मनः कृष्णपदारविन्दयोर्वचांसि वैकुण्ठगुणानुवर्णने ।*
*करौ हरेर्मन्दिरमार्जनादिषु श्रुतिं चकाराच्युतसत्कथोदये ॥*
*मुकुन्दलिङ्गालयदर्शने दृशौ तद्भृत्यगात्रस्पर्शेऽङ्गसङ्गमम् ।*
*घ्राणञ्च तत्पादसरोजसौरभे श्रीमत्तुलस्या रसनां तदर्पिते ॥*
*पादौ हरेः क्षेत्रपदानुसर्पणे शिरो हृषीकेशपदाभिवन्दने ।*
*कामञ्च दास्ये न तु कामकाम्यया यथोत्तमश्लोकजनाश्रया रतिः ॥* (भाग - 9-4-18,19,20)

भक्तपालनतत्परो भगवान् दुर्वाससः आग्रहात् अम्बरीषस्य परिरक्षणे जागरूको बभूव। उक्तं च भगवता -

*अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विज।*
*साधुभिर्ग्रस्तहृदयो भक्तैर्भक्तजनप्रियः ॥* (भाग॰9-4-63)
*साधवो हृदयं मह्यं साधूनां हृदयन्त्वहम्।*
*मदन्यं ते न जानन्ति नाहं तेभ्यो मनागपि ॥* (भाग॰9-4-68)

एवमत्र भगवद्भक्तानां महिमा भगवतः भक्तरक्षणसमुद्यमश्च सुष्ठु प्रतिपादितौ ।

यमुनाजले मैथुनसुखमनुभवतो मीनराजस्य निर्वृतिं विलोक्य संसारसुखे जातस्पृह· सौभरि· ब्रह्मचर्यं परित्यज्य गृहस्थो भवति। बहुकालं संसारसुखमनुभूय अन्ते विरक्तस्सन् एवं ब्रवीति -

*सङ्गं त्यजेत मिथुनव्रतिनां मुमुक्षुः सर्वात्मना न विसृजेद्बहिरिन्द्रियाणि।*

*एकश्चरन् रहसि चित्तमनन्त ईशे युञ्जीत तद्व्रतिषु साधुषु चेत्प्रसङ्गः ॥* (भाग - 9-6-51)इति।

ययातिरपि एवमेव चिरकालं लौकिकसुखान्यनुभूय विरक्तस्सन् एवं प्रकटयति ।

*न जातु कामः कामानामुपभोगेन शाम्यति ।*

*हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥१४॥* (भाग - 9-19-14) इति।

एवं भागवतस्य नवमस्कन्धे सौभरिययातिचरित्रद्वारा विषयसुखानां अशाश्वतत्वं, अल्पत्वं, वैराग्यस्य भगवद्भक्तेश्च महत्त्वं बन्धविमोचकत्वञ्च मनोज्ञतया निरूपितानि ।

यदुवंशवर्णनसन्दर्भे भगवत श्रीकृष्णस्य अवतारसूचनेन स्कन्धोऽयं समाप्तिमुपगच्छति।

पण्डितपरिष्कृतेऽस्मिन् ग्रन्थे मूलभागस्य एवं व्याख्यानानां च विषयेऽवधेया अंशाः प्रथमस्कन्धस्थपीठिकात· अवगन्तुं शक्यन्ते ।

विद्वद्वर्यै· राष्ट्रपतिपुरस्कारेण सम्मानितै , बहुभाषानिपुणै· अस्मद्गुरुभि श्रीमद्भि डा.यन्.सि.वि. नरसिंहाचार्यस्वामिभि व्याख्यानत्रयसमलङ्कृतोऽयं ग्रन्थ महता श्रमेण परिष्कृत । ग्रन्थप्रकाशनात्पूर्वमेव ते महाभागा यशश्शरीरा बभूवु ।

अस्य ग्रन्थस्य परिष्करणे सम्पादने च बहुधा उपकृतवन्त श्रीमन्त· के. सि. जयचन्द्रशास्त्रिण , यु. वेङ्कटरामय्यनामान , आ. वारदराजन्नाह्वयाश्च कृतज्ञताऽञ्जलिमर्हन्ति, एवं श्रीमान् यस्.बि.यस्. भट्टाचार्यः, डा. यस्. पूर्णवल्ली, डा. यस्. दशरथश्च कृतज्ञतामर्हन्ति।

मुद्रणसमये अक्षरशोधनकर्मणि सहकार प्रदत्तवन्त श्रीमन्त श्री.ऐ. वेङ्कटेश्वररावु महोदया , एवं अन्ये च धन्यवादान् अर्हन्ति।

किञ्च अस्य ग्रन्थस्य मुद्रणे नितरां श्रद्धा प्रदर्शितवद्भ्य ति.ति.दे श्रीकार्यनिर्वहणाधिकारिभ्य श्री. अजेय कल्लु IAS महाशयेभ्यः, अन्नमाचार्य प्राजेक्ट्, निदेशकेभ्य डा. मेडसानि मोहन् महाशयेभ्य एवं अन्येभ्यश्च भागवतपरिष्करणमार्गदर्शक-मण्डलीसदस्येभ्य सादरं कृतज्ञाताऽञ्जलय· समर्प्यन्ते ।

'लोकास्समस्तास्सुखिनो भवन्तु'

तिरुपति

**समुद्राल लक्ष्मणय्य**

विशिष्टाधिकारी

श्रीभागवतपरिष्करणपरिषत्

ति.ति. देवस्थानम्

# LIST OF ABBREVIATIONS

(of the Edition of of Srimad Bhagavata Mahapuranam being referred to)

1.A. Edited by Sri Krishna Sankara Sastri-contains about 30 commentaries - Printed in Devanagari Script at Ahmedabad, Gujarat.

2.B. Printed in Devanagari Script at Brindavan-contains 9 commentaries.

3.G. Contains text only-Printed at Gita Press, Ghorakhpur-in Devanagari Script.

4.H. Contains Sridhara's Commentary-Edited by Sri Hayagriva Sastri. Printed in Telugu Script at Madras.

5.J. Contains Sridharacharya's Commentary-Edited by Prof. J.L. Sastri. Printed in Devanagari Script.

6.M. Contains the commentary of Sri Vijaya Dhvaja Tirtha-Printed in Devanagari Script- Another Madhva Edition.

7.Ma. Contains the commentary of Sri Vijaya Dhvaja Tirtha-Printed in Devanagari Script- Another Madhva Edition.

8. Contains the commentary of Sri Vira Raghavacharya- Printed in Telugu Script - Published by Sri Tridandi Srimannarayana Ramanuja Jeer Swami.

9.V. Contains the commentary of Sri Sridharacharya-Printed at Vavilla press, Madras in Telugu Script.

10.W. Contains the Commentary of Sri Viraraghavacharya - Printed in Telugu Script - Published by the Maharaja of Vanaparti Samsthan, Andhra Pradesh

## LIST OF ABBREVIATIONS

Commentaries

१. श्रीध० - श्रीधरस्वामिविरचिता भावार्थदीपिका

२. वीर० - श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

३. विज० - श्रीविजयध्वजतीर्थकृता पदरत्नावली

# Texts cited in commentaries and their Abbreviation

| Abbreviation | Name of the Book | Abbreviation | Name of the Book |
|---|---|---|---|
| अथ. शिखा. उ. | अथर्वशिखोपनिषत् | तैत्ति.सं. | तैत्तिरीयसंहिता |
| अद्वै.उ. | अद्वैतोपनिषत् | - | दत्त |
| - | अध्यात्मे | - | नारदीये |
| - | अभिधानम् | निरा.उ. | निरालम्बोपनिषत् |
| अम.को. | अमरकोश | - | निरुक्तम् |
| अष्टा. | अष्टाध्यायी | निरा.उ. | नृसिंह उत्तरतापिन्युपनिषत् |
| | अहिर्बुध्न्यसंहिता | - | पञ्चतन्त्रम् |
| आगम.प्रा. | आगमप्रामाण्यम् | - | परमसंहिता |
| आप.श्रौ.सू. | आपस्तम्बश्रौतसूत्रम् | - | पाञ्चरात्रम् |
| - | आग्नेय | - | पाद्मपुराणम् |
| ईशा.उ. | ईशावास्योपनिषत् | पु.सू. | पुरुषसूक्तम् |
| उणा.सू. | उणादिसूत्राणि | - | प्रकाशिकायाम् |
| | उत्पलमाला | प्रश्न.उ. | प्रश्नोपनिषत् |
| ऋक्.सं. | ऋक् सहिता | बृह.उ. | बृहदारण्यकोपनिषत् |
| ऐत.उ. | ऐतरेयोपनिषत् | | ब्रह्मतर्के |
| कठ.उ. | कठोपनिषत् | | ब्रह्मवैवर्ते |
| | कापिलेये | ब्र.सू. | ब्रह्मसूत्राणि |
| कुमार.स. | कुमारसम्भवम् | | ब्राह्मे |
| कौषी.उ. | कौषीतक्युपनिषत् | | भद्रिकायाम् |
| | क्रियायोगे | भ.गी. | भगवद्गीता |
| | गारुडे | भर.सं. | भरद्वाजसंहिता |
| | गोपाल | | भागवततन्त्रम् |
| | चाक्रायणश्रुति | भाग. | भागवतम् |
| छान्दो.उ. | छान्दोग्योपनिषत् | - | भविष्यत्पुराणे |
| जित.स्तो. | जितन्तास्तोत्रम् | भारते आनु. | भारते आनुशासनिकपर्व |
| - | तत्त्वनिर्णये | भारते. आरण्य | भारते आरण्यपर्व |
| | तन्त्रभागवते | भारते. उद्योग | भारते उद्योगपर्व |
| तैत्ति.आ. | तैत्तिरीय आरण्यकम् | भारते. शान्ति | भारते शान्तिपर्व |
| तैत्ति.उ. | तैत्तिरीयोपनिषत् | मनु.स्मृ. | मनुस्मृति |

| Abbreviations | Name of the Book | Abbreviation | Name of the Book |
|---|---|---|---|
| - | महाकौर्मे | विष्णु ध.पु. | विष्णुधर्मोत्तरपुराणम् |
| - | माहात्म्ये | विष्णु.पु. | विष्णुपुराणम् |
| म.ना.उ. | महानारायणोपनिषत् | - | विष्वक्सेनसंहिता |
| महा.उ. | महोपनिषत् | वे.नि | वेदनिघण्टु |
| माण्डू उ. | माण्डूक्योपनिषत् | | शब्दनिर्णये |
| - | माध्यन्दिनश्रुति | शार्ङ्ग.पद्ध. | शार्ङ्गधरपद्धति |
| मुण्ड उ. | मुण्डकोपनिषत् | | शि[illegible]पाल[illegible]म् |
| मैत्रा.उ | मैत्रायण्युपनिषत् | श्वेता.उ | श्वेताश्वतरोपनिषत् |
| याज्ञ.स्मृ | याज्ञवल्क्यस्मृति | [illegible] | सुबालोपनिषत् |
| रामा | रामायणम् | [illegible] | सुभाषितरत्नभाण्डागारम् |
| - | रुद्र | [illegible] | सूर्योपनिषत् |
| - | लक्ष्मीतन्त्रे | - | स्कान्दे |
| वर.स्तव | वरदराजस्त[illegible] | - | षाड्गुण्ये |
| - | वाम[illegible] | - | हरिवंशे |
| - | वाराहे | हला. को. | हलायुधकोश |
| - | व[illegible]चि | | हेमचन्द्र |

## श्रीमद्भागवतनवमस्कन्धीयानां अध्यायानां

# विषयानुक्रमणी

नवमस्कन्धस्थाना चतु।  ।त्यध्याया।

# अध्यायार्थसङ्ग्रहश्लोकाः

त्रयोदशभिरध्यायै· सूर्यवंशोऽनुवर्ण्यते ।
एकादशभिरध्यायैस्सोमवंशस्ततः परैः ॥
तत्र तु प्रथमेऽध्याये वैवस्वतसुतान्वये ।
सोमवंशप्रवेशोक्त्यै सुद्युम्नस्त्रीत्वमुच्यते ॥१॥

द्वितीये मनुपुत्राणां द्वावपुत्रौ विरागत ।
करूश कादि पञ्चानां वंशानाह लघुक्रमात् ॥२॥

तृतीये मनुपुत्रस्य शर्याते कीर्त्यतेऽन्वय ।
यत्र सौकन्यमाख्यान रैवतश्च महाद्भुतम् ॥३॥

चतुर्थे मनुपुत्रस्य नभगस्य कथोच्यते ।
तत्सूनोश्चाम्बरीषस्य कृत्या प्रतिहता यत ॥४॥

पञ्चमे विष्णुचक्रं तु प्रसाद्य प्राणसङ्कटात् ।
दुर्वासा रक्षितस्तेन तथा तद्वृत्तमीर्यते ॥५॥

षष्ठारम्भेऽम्बरीषस्य वंशमुक्त्वा तत परम् ।
षष्ठाद्यष्टभिरध्यायैरिक्ष्वाकोर्वंश उच्यते ॥
तत्र षष्ठे शशादादिर्मान्धात्रन्तो निरूप्यते ।
प्रसङ्गात्सौभरेराख्या मान्धातृतनयापते ॥६॥

मान्धातुरन्वय प्रोक्त सप्तमे यत्र गीयते ।
पुरुकुत्सस्य चाऽऽख्यानं हरिश्चन्द्रस्य चोत्तमम् ॥७॥

अष्टमे रोहितस्योक्तो वंशो यत्राऽभवन्नृप ।
सगर कपिलाक्षेपान्निर्दग्धा यस्य सूनव ॥८॥

अष्टमे रोहितस्योक्तो वंशो यत्राऽभवन्नृप· ।
सगरः कपिलाक्षेपान्निर्दग्धा यस्य सूनवः ॥९॥

दशमे प्राह खट्वाङ्गवंशे श्रीरामसम्भवम् ।
तच्चरित्रञ्च लङ्केशं हत्वाऽयोध्यागमावधि ।
यद्वा - दशमे रामचरितमाविर्भावपुरस्सरम् ।
शुकेन वर्ण्यते पुण्यमभिषेकोत्सवावधि ॥ ॥१०॥

ततश्चैकादशेऽयोध्यामावसन्ननुजैः सह ।
यज्ञादि यच्चकारेशो रामस्तदनुवर्ण्यते ॥
यद्वा - राम एकादशे यज्ञैरीजे राष्ट्रेष्ववासयत् ।
कुशादीन् वृत्तिरुदिता प्रजानां राघवस्य च ॥११॥

द्वादशे रामपुत्रस्य कुशस्यान्वय उच्यते ।
एवमिक्ष्वाकुपुत्रस्य शशादस्येरितोऽन्वय· ॥
यद्वा - आरभ्योक्त्वा कुशं भूपान् ऐक्ष्वाकान्द्वादशे गतान् ।
भविष्यतस्सुमित्रान्तान् बृहद्रणमुखान्वदत् ॥१२॥

इक्ष्वाकोरेव पुत्रस्य निमेर्वंशस्त्रयोदशे ।
वर्ण्यते जज्ञिरे यत्र ब्रह्मज्ञा जनकादयः ॥
यद्वा - त्रयोदशेऽरिषड्वर्गजयी राजान्ववायकृत् ।
ऐक्ष्वाकस्य निमेर्देहान्मथिताज्जनकोऽभवत् ॥१३॥

चतुर्दशादिभि सोमवंशमाहाऽऽसमाप्ति· ।
यस्मिन्नैलादयो भूपा· कीर्त्यन्ते पुण्यकीर्तय· ॥
चतुर्दशे गुरो पत्न्यां तारायां सोमजाद् बुधात् ।
जातश्चैल षडुर्वश्यामायुमुख्यानजीजनत् ॥
यद्वा - चतुर्दशेऽत्रिजात्सोमात् गुरो पत्न्यां बुधोऽजनि ।
सोपास्तोर्वशीं तज्जस्ससङ्केतं गुरूरवाः ॥१४॥

ततः पञ्चदशे गाधिरैलपुत्रान्वयेऽजनि।
यद्गौहित्रसुतो रामः कार्तवीर्यमहन् रुषा ॥
यद्वा - उक्ताः पञ्चदशे वंशा श्रुतायाः प्रमुखोत्थिताः।
अर्जुनं गाधिजा पौत्रो रामो हन्तेति चेरितम्॥१५॥

षोडशेऽ थार्जुनसुतैर्जमदग्नौ हते मुहुः।
रामात्क्षत्रवधः प्रोक्तो विश्वामित्रस्य चान्वयः॥
यद्वा -तीर्थान्यटन् प्रसूभ्रातॄन् रामोऽहन् षोडशे नृपान्।
गाधेः पुत्रोऽभवद्विप्रः तद्वंशोऽभूदनेकश. ॥१६॥

आयो. सप्तदशे त्वैलज्येष्टपुत्रस्य पञ्चसु।
सुतेषु क्षत्रवृद्धादिचतुर्णां वंशवर्णनम्।
यद्वा - वंशान् सप्तदशेऽवादीत् ऐलज्येष्ठसुतोद्युष·।
पुत्रैरम्भरजिक्षत्र वृद्धानेनोभिराहितान् ॥१७॥

अष्टादशे ययातेस्तु नाहुषस्य कथोच्यते।
यस्य पञ्चसु पुत्रेषु कनीयानग्रहीज्जराम्॥
यद्वा - आयुषो ज्येष्ठपुत्रस्य नहुषस्याग्रजस्सुत :
ययाति पूरुमकृताष्टदशे नृपमात्मजम्॥१८॥

ऊनविंशे ययातिः स्वं चेष्टितं नन्वजोपमम्।
देवयानीं समाश्राव्य विरक्तो मुक्तिमाप्तवान् ॥
भुक्तभोगामजां हास्यन्नजवद्वृत्तिमात्मन ।
विडम्बयन्प्रियामाह निर्वेदयितुमात्मवान् ॥१९॥

विंशे पितृप्रसादाप्तराजासनमहोन्नते· ।
पूरोर्वंशे तु दौष्यन्तेर्भरतस्येर्यते यश· ॥२०॥

एकविंशे तु दौष्यन्ते सुतस्याऽन्वय उच्यते ।
रन्तिदेवाजमीढादेर्यत्र कीर्ति प्रतन्यते ॥
यद्वा - एकविंशे भरद्वाजपुत्रमन्युसुतान्वय.।
वर्ण्यते रन्तिदेवाऽजमीढाद्या यत्र वंशिन· ॥२१॥

द्वाविंशे तु दिवोदासवंशमुक्त्वाऽथ वर्णिता. ।
ऋक्षवंशे जरासन्ध पार्थदुर्योधनादय ॥
यद्वा -दिवोदासात्तु पाञ्चालवशो द्वाविंश उच्यते ।
वशान्तरादाजमीढचैद्यमागधकौरवा ॥२२॥

त्रयोविंशेत्वनो र्द्रुह्योस्तुर्वसोश्चान्वय· क्रमात् ।
यदोश्च वंशोऽनुक्रांतो यावज्ज्यामघसम्भव ॥
यद्वा - त्रयोविंशेऽन्वयानुक्त्वा शुकोनुप्रमुखै कृतान् ।
ज्यामखावधिमाचख्यौ यदोर्वंशं महत्तरम् ॥२३॥

चतुर्विंशे विदर्भस्य पुत्रत्रयसमुद्भवा ।
वंशा नानामुखा प्रोक्ता रामकृष्णोद्भवावधि ॥
यद्वा - चतुर्विंशे विदर्भादि वर्ण्यते यदुजान्वय ।
यत्रासीद्भगवान् ख्याते वृष्यन्धकमुखैर्नृपै ॥२४॥

# श्रीमद्भागवतपाठविधिः

स्नातः शुचिर्भूत्वा प्राणानायम्य त्रिराचम्य च मङ्गलपाठपूर्वकं भगवन्तं प्रणमेत्। तदनु सन्निहितैः षोडशोपचारैर्मानसोपचारैर्वा व्यासं शुकं वासुदेवं श्रीमद्भागवतग्रन्थं च सादरं सविनयं सभक्तिभावं सम्पूजयेत्। ततः पाठारम्भात् प्राक् 'ओं नमो भगवते वासुदेवाय' इति द्वादशाक्षरमन्त्रम् 'ओं क्लीं कृष्णाय गोविन्दाय गोपीजनवल्लभाय स्वाहा' इति गोपालमन्त्रं वाऽष्टोत्तरशतवारं जपेत्। पश्चादेवं विनियुञ्जीत-

## विनियोगः

ओं अस्य श्रीमद्भागवताख्यस्तोत्रमन्त्रस्य नारद ऋषिः, बृहती छन्दः, श्रीकृष्णः परमात्मा देवता, ब्रह्म बीजम्, भक्तिः शक्तिः, ज्ञानवैराग्ये कीलकम्, मम श्रीमद्भगवत्प्रसादसिद्ध्यर्थं पाठे विनियोगः।

## ऋष्यादिन्यासः

'नारदर्षये नमः' शिरसि। 'बृहतीच्छन्दसे नमः' मुखे। 'श्रीकृष्णपारमात्मदेवतायै नमः' हृदि। 'ब्रह्मबीजाय नमः' गुह्ये। 'भक्तिशक्तये नमः' पादयोः। 'ज्ञानवैराग्यकीलकाय नमः' नाभौ। श्रीमद्भगवत्प्रसादसिद्ध्यर्थकपाठविनियोगाय नमः सर्वाङ्गे। द्वादशाक्षरमन्त्रेण हृदयाद्यङ्गन्यासं करन्यासं च कुर्यात्। अथवाऽधोऽङ्कितरीत्याऽङ्गन्यासकरन्यासौ विदध्यात्-

## अङ्गन्यासः

ओं क्लां हृदयाय नमः। ओं क्लीं शिरसे स्वाहा। ओं क्लूं शिखायै वषट्। ओं क्लैं कवचाय हुम्। ओं क्लौं नेत्रत्रयाय वौषट्। ओं क्लः अस्त्राय फट्।

## करन्यासः

ओं क्लां हृदयाय नमः। ओं क्लीं तर्जनीभ्यां नमः। ओं क्लूं मध्यमाभ्यां नमः। ओं क्लैं अनामिकाभ्यां नमः। ओं क्लौं कनिष्ठिकाभ्यां नमः। ओं क्लः करतलकरपृष्ठाभ्यां नमः।

## अथ ध्यानम्

कस्तूरीतिलकं ललाटफलके वक्षःस्थले कौस्तुभं नासाग्रे नवमौक्तिकं करतले वेणुं करे कङ्कणम्।
सर्वाङ्गे हरिचन्दनं च कलयन् कण्ठे च मुक्तावलिं गोपस्त्रीपरिवेष्टितो विजयते गोपालचूडामणिः॥
अस्ति स्वस्तरुणीकराग्रविगलत्कल्पप्रसूनाप्लुतं वस्तु प्रस्तुतवेणुनादलहरीनिर्वाणनिर्व्याकुलम्।
स्रस्तस्रस्तनिबद्धनीविविलसद्गोपीसहस्रावृतं हस्तन्यस्तनतापवर्गमखिलोदारं किशोराकृति॥

इत्येवं ध्यात्वा पाठमारभेत।

### श्रीमद्भागवतसप्ताहपारायणस्य दैनन्दिनविश्रामस्थलानि निम्नाङ्कितपद्येषु निरूपितानि

मनुकर्दमसंवादपर्यन्तं प्रथमेऽहनि। भरताख्यानपर्यन्तं द्वितीयेऽहनि वाचयेत्।
तृतीये दिवसे कुर्यात् सप्तमस्कन्धपूरणम्। कृष्णाविर्भावपर्यन्तं चतुर्थे दिवसे वदेत्॥
रुक्मिण्युद्वाहपर्यन्तं पञ्चमेऽहनि शस्यते। श्रीहंसाख्यानपर्यन्तं षष्ठेऽहनि वदेत्सुधीः।
सप्तमे तु दिने कुर्यात् पूर्तिं भागवतस्य वै। एवं निर्विघ्नतासिद्धिर्विपर्यय इतोऽन्यथा॥

# श्रीमद्भागवतम्

## नवमस्कन्धः

## प्रथमोऽध्यायः

[1]विष्णुरात उवाच[-1]

**मन्वन्तराणि सर्वाणि त्वयोक्तानि श्रुतानि मे।**
**वीर्याण्यनन्तवीर्यस्य हरेस्तत्र कृतानि च ॥१॥**

**योऽसौ सत्यव्रतो नाम राजर्षिर्द्र[2]विडेश्वरः।**
**ज्ञानं योऽतीतकल्पान्ते लेभे पुरुषसेवया ॥२॥**

**स वै विवस्वतः पुत्रो मनुरासीदिति श्रुतम्।**
**[3]ततः तस्य सुताः [4]प्रोक्ता इक्ष्वाकुप्रमुखा नृपाः ॥३॥**

**तेषां वंशं पृथक् ब्रह्मन्! [5]वंशानुचरितानि च।**
**कीर्तयस्व महाभाग! नित्यं शुश्रूषतां हि नः ॥४॥**

### श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

गुणा य गुणतावाप्त्यै वृणुते करुणानिधिम्। तमहं शरणं यामि परमानन्दमाधवम् ॥
त्रिगुणाष्टभिरध्यायै वैवस्वतसुतान्वय। नवमे कृष्णसत्कीर्तिप्रसङ्गाय वितन्यते ॥
एवमुक्तोऽष्टमस्कन्धे सद्धर्मस्सत्वशोधक। कर्तृपालकवक्त्रादिमन्वादीना निरूपणै ॥
सद्धर्मशुद्धसत्त्वानामन्तरङ्गेशसत्कथा। सोमसूर्यान्वयाऽऽख्यानैरधुना सङ्गतोच्यते ॥

तत्र तु -

त्रयोदशभिरध्यायै सूर्यवंशोऽनुवर्ण्यते। एकादशभिरध्यायै स्सोमवंशस्तत परै ॥
तत्र तु प्रथमेऽध्याये वैवस्वतसुतान्वये। सोमवंशप्रवेशोक्त्यै सुद्युम्नस्त्रीत्वमुच्यते ॥
उक्तानुवादपूर्वक वैवस्वतमनोर्वंशं पृच्छति - **मन्वन्तराणीति** पञ्चभि ॥२-४॥

---

**1- -1** ABGJMMaT **राजोवाच** 2 HV विले, W मिडे 3 ABGJT, त्वत्त M Ma त्वया 4 ABGJT ताश्चोक्ता 5 ABJT श्या

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचान्द्रिका

[1-] पूर्वस्कन्धान्ते [-1] "स तु सत्यव्रतो राजा ज्ञानविज्ञानसंयुतः। विष्णोः प्रसादात्कल्पेऽस्मिन्नासीद्वैवस्वतो मनुः" ॥ (भाग.8-24-58) इति प्रकृतस्य भगवत्पूर्णानुग्रह विषयस्य महाभागवतस्य वर्तमानस्य सप्तमस्य वैवस्वतमनोर्वंशं "सप्तमो वर्तमानो य स्तदपत्यानि मे श्रृणु। इक्ष्वाकुश्च नृगश्चैव" (भाग. 8-13-1,2) इत्यादिना सङ्ग्रहेणोक्ता विस्तरतो बुभुत्सुरुक्तानुवादपूर्वकं पृच्छति राजा - **मन्वन्तराणीत्यादिभि**. पञ्चभि·। यान्यष्टमादौ मया पृष्टानि मन्वन्तराणि तेष्ववतीर्णेन भागवता कृतानि वीर्याणि च तानि सर्वाणि त्वया वर्णितानि मे मया श्रुतानि च ॥१॥

तथा योऽसावतीतकल्पे [2] द्रमिडदेशाधिप· सत्यव्रताख्यो राजर्षिरतीतकल्पावसाने परमपुरुषस्य सेवया हेतुभूतया स्वपर-याथात्म्यज्ञानं लेभे प्राप्तवान् ॥२॥

स एव सत्यव्रतोऽस्मिन् कल्पे विवस्वत पुत्रो भूत्वा मनुर्वैवस्वताख्य· सप्तमो मनुरासीदिति च त्वत्तो मया श्रुतमित्युक्तानुवाद·। अथ प्रष्टव्यं पृच्छति - तस्य वैवस्वतस्य मनोर्ये सुता इक्ष्वाकुप्रभृतयः त्वया कथिताः मया श्रुताश्च तेषामिक्ष्वाकादीनां पृथक्पृथग्वंशं, तद्वंशजानां चरितानि चाऽधुना , हे ब्रह्मन्। महाभाग। सर्वज्ञ। श्रोतुमिच्छतां नोऽस्माकं कथय ॥३,४॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

कमलाकान्तं कमलाक्षं विमलानन्दं प्रणम्य च।
नृपवंशस्कन्धविलासं नवमस्कन्धं विवृणोमि॥

अस्मिन् स्कन्धे राजवंशवर्णनेन श्रीनारायणे भक्तिविधानार्थं भागवन्माहात्म्यमेव प्रपञ्च्यते। तत्र वृत्तवर्तिष्यमाणस्कन्धयोस्सङ्गतिप्रदर्शनाय वृत्तानुवादपूर्वकं वैवस्वतमनोः पुत्राणां तद्वशानां अनुवंशं तच्चरितानि च राजा शुकं पृच्छति। **मन्वन्तराणी त्यादिना**- 'वद्र विक्रमानित्यन्तेन' ॥१-४॥

**ये भूता ये भविष्याश्च भवन्त्यद्यतनाश्च ये ।**
**तेषां नः पुण्यकीर्तीनां [3] पूर्वेषां वद विक्रमान् ॥५॥**

1- -1 AB omit 2 AB द्रवि 3 ABGT MMaJ स

**सूत उवाच**

**एवं परीक्षिता राज्ञा सदसि ब्रह्मवादिनाम् ।**
**पृष्टः प्रोवाच भगवान् शुकः परमधर्मवित् ।। ६ ।।**

**श्रीशुक उवाच**

**श्रूयतां मानवो वंशः प्राचुर्येण[1] परन्तप !**
**न शक्यते विस्तरेण[2] वक्तुं वर्षशतैरपि ।। ७ ।।**

**परावरे[3]षां भूतनामात्मा यः प्रकृतेः[4] परः ।**
**स एवाऽऽसीदिदं विश्वं कल्पान्तेऽन्यन्न किञ्चन ।।८।।**

**तस्य नाभेस्[5]समभवत्पद्मकोशो हिरण्मयः ।**
**तस्मिञ्जज्ञे महाराज । स्वयम्भू[6]र्भूतभावनः ।।९।।**

**मरीचि[7]र्मनसस्तस्य जज्ञे तस्याऽपि कश्यपः ।**
**दाक्षायण्यां ततोऽदित्यां विवस्वानभवत्सुतः ।। १० ।।**

**ततो मनुः श्राद्धदेवः संज्ञायामास भारत ।**
**श्रद्धायां जनयामास दशपुत्रान् स आत्मवान् ।।११।।**

**इक्ष्वाकुनृगशर्यातिदिष्टधृष्टकरूषकान् ।**
**नरिष्यन्तं पृषध्रञ्च [8]नभागञ्च कविं वि[9]भुम् ।।१२।।**

**श्रीध०** अनुक्तं वशं वक्तुं पूर्वेक्तमेव तावद्वंशं तत्प्रवर्तकं श्रीनारायणमाराध्यानुस्मारयति **परावरेषामिति** पञ्चभि· ।। ५-११ ।।

**इक्ष्वाक्विति** । नाभागश्चेति पाठेऽपि नभाग एव नाभाग । [10]कविः इत्यस्य वसुमानित्यपि नामान्तरसद्भावात् । अष्टमस्कन्धीय त्रयोदशाध्यायप्रतिपादितनामानुक्रमणिकाया· न कोऽपि विरोध । विष्णुपुराणे हरिवंशे च वैवस्वतस्य इक्ष्वाकुप्रभृतिपुत्र नवकमेव

1 M Ma सक्षेपेण 2 ABGJMMaT स्तरतो 3 HMMaV °प° 4 ABGJMMaT पुरुष 4 M Ma रुदस्तात्स प 6 ABGJMMaT म्भूश्चतुरानन 7 MMa र्मा 8 M Ma °ना° 9 ABGJMMaT भु । 10-10 ABJ Omit

अभिहितम् । न दशमस्य कवे· बाल्य एव मृतत्वात्, एवमेव अत्र द्वितीये अध्याये विवेश कैशोरवयाः **पराङ्गतिम् (भाग. 9-2-15)** इति वक्ष्यमाणत्वात्[10] ॥१२॥

**वीर०** तस्य वैवस्वतस्य मनोर्वंशे ये भूता अतीता ये च भविष्या भाविनो ये चाऽद्यतना वर्तमानाश्च भवन्ति, तेषां सर्वेषां पुण्या पुण्यावहा कीर्तिर्येषां पूर्वेषां सर्वेषां विक्रमान्वद चरित्राणि कथय। पुण्यकीर्तीनामित्यनेन तद्विक्रमाणामश्रोतव्यत्वशङ्का निरस्ता ॥५॥

एवं रज्ञा पृष्टो भगवान् बादरायणि वैवस्वतमनुवंशं[1] तद्वश्यचरित्राणि च यथावद्वक्तुमुपचक्रमे इत्याह सूत· - **एवमिति।** इत्थं ब्रह्मवादिनामृषीणां सदसि राज्ञा परीक्षिता पृष्ट परमधर्मवित् भागवतगुणवर्णनस्य उत्कृष्टधर्मत्वाभिज्ञो भगवान् शुक प्रोवाच॥ ६॥

तदेवाह श्रूयतामित्यादिना तावद्वैवस्वतमनुवंशमाचिख्यासुस्तंद्वंश्यानां तच्चरित्राणाश्च आनन्त्यात्कास्र्न्येन वक्तुं श्रोतुश्चाशक्यत्वात् प्राधान्येन काश्चित्तद्वंशपरम्परा कथयामीत्यभिप्रयन्नाह - **श्रूयता**मित्यादिना। हे परन्तप। मानव मनो[2] वैवस्वतमनोस्सम्बन्धी वंश प्राचुर्येण कथयतो मत्त श्रूयताम् । प्राचुर्येणेत्यनेन साकल्येन वक्तुं श्रोतुश्चाशक्य इत्यभिप्रेतम् - तदेवाह - न शक्यत इति, स्फुटार्थ ॥ ७ ॥

मनोरर्वाचीना तद्वशपरम्परा विवक्षुस्तावत्तत पूर्वपरम्परामाह - **परावरेषामिति** चतुर्भि । इदं परिदृश्यमानं स्थूलचिदचिदात्मक ब्रह्मादिस्तम्बपर्यन्तं कृत्स्नं जगत् - अतीतकल्पान्ते स एवाऽऽसीत् । कोऽसौ? यदात्मकं जगदासी दित्यत्राऽऽह - य परावरेषामुच्चावचानां भूतानामात्मा अन्त प्रविश्य धारक परमपुरुष स्थूलचिदचिच्छरीरक परमात्मा प्रलयदशाया नामरूपविभागानर्हसूक्ष्मचिदचिच्छरीरकत्वेन कारणतयाऽवस्थितो बभूवेत्यर्थ.। अन्यत्स्वसमानं कारणं वस्तु नाऽऽसीदित्यर्थ । "स एवाऽऽसीदिदं विश्वं कल्पान्ते" इत्यनेन "सदेव सौम्येदमग्र आसीत्" (छान्दो उ.6-2-1) इति श्रुत्यर्थ· प्रत्यभिज्ञापित । अन्यन्न किञ्चन इत्यनेन "एकमेवाऽद्वितीयम्" (छान्दो उ.6-2-1) इत्यस्यार्थ । मनो वंशस्य पूर्वावधिद्योतनाय पञ्चपुरुषान्तरितत्वेऽपि साक्षाद्भगवद्वंशप्रसूतत्वख्यापनाय च परावरेषामित्यादि श्लोकत्रय प्रवृत्तम् ॥८॥

तस्य प्रलयदशायां सूक्ष्मचिदचिच्छरीरकत्वेनावस्थितस्य कारणभूतस्य "बहु स्यां प्रजायेय" (तैत्ति उ.2-1) इत्युक्तविधसिसृक्षानन्तरं महदादिपृथिव्यन्ततत्त्वोत्पत्तिद्वारा तैरारब्धे ब्रह्माण्डे गर्भोदकेषु शयानस्य अनिरुद्धरूपिणो भगवतो नाभे हिरण्मय प्रकाशबहुल पद्मकोश त्रिभुवनात्मक पद्मकोश समभवदित्यर्थ । हे महाराज। तस्मिन्नाभिपद्मे चतर्मखो ब्रह्मा सम्बभूव॥९॥

---

1 A तद्वश 2 TW Omit मनो

तस्य चतुर्मुखस्य मनस· मरीचिर्जज्ञे। 'मानस ' इति पाठे तस्य मरीचिर्मानसः पुत्रो जज्ञे इत्यर्थ । तस्यापि मरीचे· कश्यप· पुत्र सम्बभूव। तस्य कश्यपस्य भार्यायां दक्षदुहितरि अदित्यां विवस्वान् सुत· समभवत् ॥ १० ॥

ततस्तस्य विवस्वत संज्ञाख्यायां भार्यायां श्राद्धदेवो मनुर्वैवस्वत· समभत्। तत प्रशस्तमनस्को वैवस्वतो मनु· श्रद्धायां भार्यायां दश पुत्रान् जनयामास ॥ ११ ॥

तानाह - **इक्ष्वाक्विति**। इक्ष्वाक्वादीन्[1] दश पुत्रान्[1] जनयामासेति पूर्वेणान्वय ॥ १२ ॥

**विज०** विक्रमान् वशे जातानां पुरुषाणा चरितानि ॥ ५ ॥

राज्ञाऽभिषिक्तानां प्रजापालनादिलक्षण परमो धर्मस्तं वेत्तीति ॥ ६,७ ॥

आत्माऽप्यन्तर्यामी इदं विश्वं स एवाऽऽसीत्, तदधीनमेवाऽभूत्, न तु स्वतन्त्रं किञ्चन, प्रधानादिकमपि "तस्माद्धान्यं न पर· किञ्चनाऽऽस" इति श्रुते ॥८॥

उदस्तात् उदभूत्। स्वयम्भूरित्यस्य विष्णावपि च वृत्तेरित्यतश्चतुरानन इत्युक्तम् । "विष्णु. स्वयम्भू रथभुक् स्वभूर्विश्वपति· पति "इत्यभिधानम् ॥९॥

मानसो मनोर्जात तत कश्यपात् ॥१०॥

ततो विवस्वतो मनो पुत्रानाह - श्रद्धायामित्यादिना। आत्मवान् वशीकृतमना ॥११,१२॥

**अप्रजस्य मनोः पूर्वं वसिष्ठो भगवान् किल ।**
**मित्रावरुणयोरिष्टिं प्रजार्थमकरो[2]द्विभुः ॥१३॥**

**[3]ततः श्रद्धा मनोः पत्नी होतारं समयाचत।**
**दुहित्रर्थमुपागम्य प्रणिपत्य पयोव्रता ॥१४॥**

**प्रेषितोऽध्वर्युणा होता ध्या[4]यंस्त[5]त्सुसमाहितः।**
**[6-]हविषि व्यचरत्ते[6]न वषट्कारं गृणन्द्विजः ॥१५॥**

**होतुस्तद्व्यभिचारेण कन्येला नाम साऽभवत्।**
**तां विलोक्य मनुः प्राह नाऽतिहृष्टमना गुरुम् ॥१६॥**

---

1--1 TW Omit 2 ABGJT 'त्र' 3 ABGJMMaT तत्र 4 MMa दध्यौ त' 5 HV व्यचत्तदा 6--6 H M Ma V गृहीते तेन हविषि, W वाचा तेन गृहीतेन

**भगवन् किमिदं जातं कर्म वो ब्रह्मवादिनाम् ।**
**वि[1]परीतमहो कष्टं मैवं स्याद्ब्रह्मविक्रिया ॥१७॥**

**यूयं मन्त्रविदो युक्तास्तपसा दग्धकिल्बिषाः ।**
**कुतस्सङ्कल्पवैषम्यमनृतं विबुधे[2]ष्विव ॥१८॥**

**तन्निशम्य वचस्तस्य भगवान्प्रपितामहः ।**
**होतुर्व्यतिक्रमं ज्ञात्वा बभाषे रविनन्दनम् ॥१९॥**

**एतत्सङ्कल्पवैषम्यं होतुस्ते व्यभिचारतः ।**
**तथाऽपि साधयिष्ये[3]ऽहं सुप्रजास्त्वं स्वतेजसा ॥२०॥**

**श्रीध०** सूर्यपौ[4]त्रस्य सुद्युम्नस्य स्त्रीत्वे सति बुधात्पुरूरव प्रभृतिसोमवंशसञ्चारं वक्तुं सप्रस्तावमिलोपाख्यानमाह - अप्रजस्य मनो· पूर्वमित्यादिना यावदध्यायसमाप्ति **अप्रजस्येति** । पूर्वमिक्ष्वाकुप्रभृतीनामुत्पत्ते· प्राक् ॥१३॥

**तत** इति । दुहित्रर्थं मम कन्या यथा भवेत् तथा यजेति होतारं सम्यगयाचत। पय एव व्रतमाहारो नि[5]यतो यस्या· ॥१४॥

**प्रेषित** इति। अध्वर्युणा हे होत । यजेति प्रेषितो होता तेन गृहीते हविषि सति तत्तया प्रार्थितं ध्यायन् व्यचरत् अयजत्। [6]तदध्यायत्समाहित[-6] इति पाठान्तरे आ[7]ध्यायत् वाचा वषट्कारं गृणन् वौषडित्युच्चारयन् ॥१५, १६॥

**भगवन्निति** । ब्रह्मविक्रिया मन्त्रान्यथात्वम् ॥१७, १८॥

**तदिति** । प्रपितामहो वसिष्ठः ॥१९॥

[8]**एतदिति** । व्यभिचारत अन्यवृत्ति मनस्कत्वात् , सुप्रजास्त्वं सुपुत्रवत्त्वम्[-8] ॥२०॥

**वीर०** सूर्यपौत्रस्य सुद्युम्नस्य स्त्रीत्वे सति बुधात्पुरूरवःप्रभृति सोमवंशप्रवृत्तिं वक्तुं सप्रस्तावमिलोपाख्यानमाह - **अप्रजस्येति** । पूर्वम् इक्ष्वाकुप्रभृतीनामुत्पत्ते· प्राक् अपुत्रस्य मनोः प्रजार्थं पुत्रार्थं मित्रावरुणदेवताकामिष्टिं मनोराचार्यो भगवान् वसिष्ठ अकरोत् अयाजयदित्यर्थ ॥१३॥

---

1 ABGJT °पर्यय 2 HV °ष्वपि 3 ABGJT ते 4 H V त्रसुत 5 H V यमो 6- -6 ABJ Omit 7 A B ,omitt आध्यायत्; H V अ० 8 - - 8 ABJ Omit

ततस्तत्र यागे क्रियमाणे सति मनो· पत्नी श्रद्धा पयोव्रता पयः क्षीरमेव व्रतमाहारो नियतो[1] यस्यास्सा, होतारमुपागम्य होतुस्समीपमागत्य प्रणिपत्य नमस्कृत्य च दुहित्रर्थमयाचत। कन्या मम यथा भवेत् तथा यजेति प्रार्थितवतीत्यर्थ· ॥१४॥

ततोऽध्वर्युणा प्रेषित· 'होत र्यजेति' प्रेषितो होता सुष्ठु समाहितचित्त तत्तथा प्रार्थितं ध्यायन् वाचा वषट्कारं गृणन् वषडित्युच्चरन् गृहीतेन तेन हविषा, अयजदिति शेष ॥१५॥

ततो होतुस्तद्व्यभिचारेण यजमानसङ्कल्पविपरीतसङ्कल्परूपेण व्यभिचारेण इलेति प्रसिद्धा सा कन्या बभूव[2]या श्रद्धया याचिता सैव कन्या सम्बभूव, न तु मनुना याचित पुत्र इत्यर्थ·। तां सम्भूतां कन्यां विलोक्य नातीव हृष्टं मनो यस्य तादृश· गुरुं वसिष्ठमाह ॥१६॥

उक्तिमेवाह **भगवन्निति** द्वाभ्याम्। हे भगवन्! ब्रह्मवादिनां वो युष्माकं इदं कर्म युष्माभिरनुष्ठितमिदं कर्म विपरीतं जातं किम् सङ्कल्पितफलविपरीतफलदं खल्वित्यर्थः। अस्तु को दोष.? इत्यत[3] आह अहो कष्टमिति। किं तत्कष्टम् ?तत्राऽऽह मैवमिति। ब्रह्मविक्रिया मन्त्रविकार·। मन्त्रशक्तिविपर्यास· मैवं स्यात् एवं भवितुं नार्हतीत्यर्थ·। मन्त्रशक्तिविपर्यय एव महत्कष्टमित्यर्थः ॥१७॥

ब्रह्मवादिनां वः इत्यनेनाऽभिप्रेतं विवृणोति **यूयमिति**। यूयं मन्त्रविद मन्त्रस्वरूपतद्विनियोगतदर्थविदः युक्तास्समाहितचित्ता· तपसा दग्धं किल्बिषं चिन्तितविपरीतफलदं येषां ते, तदेवम्भूतानां युष्माकं कुत. कस्माद्धेतो सङ्कल्पवैषम्यं चिन्तितवैषम्यमभूत्, तत्र विबुधेष्वनृतमिवेति दृष्टान्त। यथा विबुधेष्वनृतं भवितुं नार्हति तथा भवत्सु भवितुमनर्हं सङ्कल्प वैषम्यं कस्माद्धेतोर्बभूवेत्यर्थ. ॥१८॥

एवमुक्तस्तमाह वसिष्ठ इत्याह मुनि तदेव मुक्तं मनोर्वचो निशम्य श्रुत्वा नोऽस्माकं पितामहः, अस्य प्रेत्यादिः प्रपितामह. भगवान् वसिष्ठ· होतुर्व्यतिक्रमं सङ्कल्पविपर्यासं ज्ञात्वा रविनन्दनं मनुं बभाषे उवाच ॥१९॥

[4]तदेवाऽह **एतदिति**। होतुर्व्यभिचारात् विपरीतसङ्कल्परूपाद्धेतो·तवैतत्सङ्कल्पवैषम्यं चिन्तितवैषम्यं यद्यप्यभूत्, तथाऽप्यहं स्वतेजसा स्वतपोबलेन सुप्रजास्त्वं साधयिष्ये कन्याया एव पुंस्त्वं साधयिष्ये इत्यर्थ ॥ २०॥

**विज०** अप्रजस्य अपुत्रस्य इक्ष्वाकुप्रभृतिपुत्रोत्पत्ते· पूर्वं मित्रावरुणयोरिष्टिं मित्रावरुणदैवत्याम् ॥१३, १४॥

सुसमाहित एकाग्रचित्त· तच्छ्रद्धयोक्तं दध्यौ वषट्कारं मन्त्रविशेषं वा गृणन्, स्वकर्माऽकरोदिति शेषः ॥१५॥

तस्य कर्मणो व्यभिचारेण विपक्षवर्तिना हेतुना वाङ्निमित्तत्वादिला - "वाणी सरस्वती भाषा वागिडेला प्रकीर्तिता" इति ॥१६॥

---

1 A,B ०मो 2 TW omit श्रद्धया 3 A B त्राऽऽह 4 TW Omit तदेवाह

इदं जातं किमिति तत्राऽऽह - कर्मेति। ब्रह्मवादिनां वः कर्म विपरीतं पुत्रार्थिनः कन्या फलमभूत्। अतः किमिदमिति कुतूहलयामि। अत्रैवम्भूतेऽप्यन्यत्र मा भूदित्याह मैवमिति। ब्रह्मविदां वः क्रिया मैवम्भूदित्यर्थः ॥१७॥

क्वचित् स्खलने अन्यत्रापि नियमो न स्यादित्याशकङ्क्य क्वचिदप्यन्यथात्वं न युक्तं युष्माकमित्याह - **यूयमिति**। "मैत्रावरुणीमिष्टिं कुर्यात्पुत्रकामः" इत्यादि मन्त्रहृदयज्ञाः यस्यै देवतायै हविर्गृहीतं स्यात् तां ध्यायेद्वषट् करिष्यन् इति वचनात् मनोयोगयुक्ताः, न च दोषादन्यथात्वं मनस इत्याह तपसेति। यूयमेवंविधास्तेषु युष्मासु सङ्कल्पवैषम्यं चिन्तितस्याऽन्यथात्वं कुतो न कुतोऽपि सम्भाव्यते कुत इति तत्राह - अनृतमिति। न हि देवेष्वनृतं[1] दुष्टचरं "तस्मा दनृतं न वदेत्" इति श्रुतेः ॥१८, १९॥

होतुर्व्यभिचारतः ध्यानस्याऽन्यथात्वलक्षणात् ॥ २०॥

**एवं व्यवसितो राजन् ! भगवान् स महायशाः।**
**अस्तौषीदादिपुरुषमिलायाः पुंस्त्वकाम्यया ॥२१॥**

**तस्मै कामवरं तुष्टो भगवान् हरिरीश्वरः।**
ददाविलाऽभवत्तेन सुद्युम्नः पुरुषर्षभः ॥२२॥

स एकदा महाराज! विचरन्मृगयां वने ।
वृतः कतिपयामात्यैरश्वमारुह्य सैन्धवम् ॥२३॥

प्रगृह्य रुचिरं चापं शरांश्च परमाद्भुतान् ।
दंशितोऽनुमृगं वीरः जगाम दिशमुत्तराम् ॥२४॥

[2]स कुमारो वनं मेरोरधस्तात्प्रविवेश ह।
यत्राऽऽस्ते भगवाञ्छर्वो[3] रममाणस्सहोमया ॥२५॥

तस्मिन्प्रविष्ट एवाऽसौ सुद्युम्नः परवीरहा।
अपश्यत् स्त्रियमात्मानमश्वश्च बडबां नृप! ॥२६॥

[4]तदा तदनुगास्सर्वे आत्मलिङ्गविपर्ययम् ।
दृष्ट्वा विमनसोऽभवन् वीक्षमाणाः परस्परम् ॥२७॥

---

1 AB Omit दुष्टचर 2 MMa सुकु० 3 MMa ॰च्छम्भू० 4 ABGJMMaT तथा

## राजोवाच

**कथमेवं[1]विधो देशः केन वा भगवान् कृतः।**
**प्रश्न[2]मेनं समाचक्ष्व परं कौतूहलं हि नः ॥२८॥**

**श्रीध०** [3]**एवमिति**। आदिपुरुषं श्रीहरिं, स भगवान् वसिष्ठः अस्तौषीत्, तत्तन्मन्त्राणां यथोक्तप्रायश्चित्ताद्यनुष्ठानेन यथाविध्यनुष्ठितकर्मणामिव फलप्रदातारं हरिं प्रार्थयामासेत्यर्थः[3]॥२१-२८॥

**वीर०** एवं प्रतिज्ञाय भगवान् वसिष्ठः तथैव साधितवानित्याह मुनिः - **एवमिति**। हे राजन्! इत्थं व्यवसितः निश्चययुक्तः स महायशाः एवं विपुलकीर्तिर्भगवान् वसिष्ठः आदिपुरुषं भगवन्तम् इलायाः कन्यायाः पुंस्त्वकाम्यया पुंस्त्वसम्पादनेच्छया अस्तौषीत् ॥२१॥

तत ईश्वरो भगवान् हरिः तत्कृतेन स्तोत्रेण तुष्टः प्रसन्नः तस्मै वसिष्ठाय कामं वरमिष्टमिलायाः पुंस्त्वरूपं वरं ददौ। ततः तेन वरेण हेतुना सा इला सुद्युम्नाख्यः पुरुषश्रेष्ठो बभूव ॥२२॥

स वीरः सुद्युम्नः कदाचित् हे महाराज! वने मृगयां चरन्[4] मृगयां कर्तुमित्यर्थः। कतिपयैरमात्यैर्मन्त्रिभिः परिवृतः सैन्धवं सिन्धुदेशोद्भवमश्वमारुह्य रुचिरं सुन्दरं दृढञ्च चापं धनुः, तथाऽद्भुतान् निशितान् शरांश्च प्रगृह्य दंशितः कवचिनः उत्तरां दिशं प्रति अनुमृगं प्रतिमृगं जगाम विचचार ॥२३, २४॥

एवं विचरन् स कुमारः सुद्युम्नो मेरोः पर्वतस्याऽधस्तात्स्थितं वनं प्रविवेश। हेत्याश्चर्ये खेदे च। तत्प्रदेशस्य पुनः स्त्रीत्वापत्तिहेतुत्वात् खेदः, पराक्रमातिशयादाश्चर्यञ्च। वनं विशिनष्टि - यत्रेति। यत्र वने भगवान् शर्वो रुद्रः उमया सह रममाणः आस्ते तद्वनं प्रविवेश इलावृतवर्षस्थवनं प्रविवेशेत्यर्थः ॥२५॥

परान् शत्रून् वीरान् हन्तीति तथा। असौ सुद्युम्नस्तत्र वने प्रविष्ट एव प्रवेशमात्रेणैवेत्यर्थः। हे नृप! आत्मानं स्त्रियमश्वं बडबाञ्चाऽपश्यत् ॥२६॥

तदा तस्य सुद्युम्नस्य अनुगास्सर्वे आत्मलिङ्गं पुंस्त्वं तद्विपर्ययं, स्त्रीत्वमित्यर्थः। तद्दृष्ट्वा परस्परं वीक्षमाणाः विमनसः अहो किमेतदस्माकं प्राप्तमिति खिन्नचित्ता बभूवुः ॥२७॥

पञ्चमस्कन्धे, यत्प्रविष्टस्य स्त्रीभाव आपद्यते तन्निमित्तं पश्चाद्वक्ष्ये इति प्रतिज्ञातस्य स्त्रीत्वापत्तिनिमित्तोपपादनस्य अवसरप्राप्ततामालोक्य, तद्विस्तरतो बुभुत्सुः पृच्छति राजा - **कथमेवमिति**। हे भगवन्! एवंविधो देशः [illegible] प्रवेशमात्रेण

---

1 ABGJMMaT गुणो० 2 H V ०तं 3 -3 ABJ Omit 4 TW add वि

स्त्रीत्वापत्तिनिमित्तभूतो देश· कथमेवंविधं देशं न सम्भावयामीति भाव·। यदि कथञ्चित्सम्भवेत्तर्हि केनैवंविधः कृतः ? इति प्रश्नप्रकारः। एवं मया कृतं प्रश्नं समाचक्ष्व। प्रश्नशब्दः उपचारात्तदुत्तरे वर्तते प्रश्नस्योत्तरं वदेत्यर्थः। यद्वा प्रश्नशब्देन तन्निमित्तमुक्त देशनिष्ठं स्त्रीत्वापादकत्वं लक्ष्यते तदुपपादयेत्यर्थः।[1] तच्छ्रवणेऽस्माकमतीव कौतूहलमुत्साहो वर्तते, अतः समाचक्ष्वेति भावः ॥२८॥

**विज०** तेन वरेण हेतुना सैन्धवं सिन्धुदेशजातम् ॥२१-२४॥

नाम्ना सुकुमारवनम्, अधस्तात् स्थितम् ॥२५॥

बडबामश्वस्त्रीलिङ्ग्याम्, आत्मनो देहस्य लिङ्गविपर्ययं पुरुषचिह्नविपरितं स्त्रीचिह्नम् ॥२६, २७॥

एवङ्गुणः पुरुषस्य स्त्रीत्वापादकगुणयुक्तः ॥२८॥

## श्रीशुक उवाच

एकदा गिरिशं द्रष्टुमृषयस्तत्र सुव्रताः।
दिशो वितिमिरा भासाः कुर्वन्तस्[2]समुपागमन् ॥२९॥

तान्विलोक्याम्बिका देवी वि[3]वस्त्रा व्रीडिता भृशम्।
भर्तुरङ्कात्समुत्थाय नीवीमाश्वथ पर्यधात् ॥३०॥

ऋषयोऽपि तयोर्वीक्ष्यप्रसङ्गं रममाणयोः।
निवृत्ताः प्रययुस्तस्मान्नरनारायणाश्रमम् ॥३१॥

[4]तदिदं भगवानाह प्रियायाः प्रिय[5]काम्यया।
स्थानं यः प्रविशेदेतत् स वै योषिद्भवेदति ॥३२॥

तत ऊर्ध्वं वनं तद्वै पुरुषा वर्जयन्ति हि।
[6]सा चाऽनुचरसं[7]युक्ता विचचार वनाद्वनम् ॥३३॥

अथ तामाश्रमाभ्याशे चरन्तीं प्रमदोत्तमाम्।
स्त्रीभिः परिवृतां वीक्ष्य चकमे भगवान्बुधः ॥३४॥

---

1 TW एत० 2 M Ma 'स्त' 3 ABGJT विवासा 4 H M Ma V तदैवं; W तदैतत् 5 H V ०कृद्विभु 6 M Ma स० 7 M Ma क्त·

**साऽपि तं चकमे सुभ्रूः सोमराजसुतं पतिम् ।**
**स तस्यां जनयामास पुरूरवसमात्मजम् ॥३५॥**

**एवं स्त्रीत्वमनुप्राप्तः सुद्युम्नो मानवो नृपः ।**
**सस्मार स्वकुलाचार्यं वसिष्ठमिति शुश्रुम[1] ॥३६॥**

**श्रीध० एकदेति**। विगतं तिमिरमाभासः प्राकाशश्चाऽन्यस्य यासु तथाभूता. दिशः कुर्वन्तः ॥२९,३०॥

**ऋषय** इति। प्रसङ्गं रत्यभिनिवेशं, स्त्रीप्रसङ्गदर्शनकलुषितमनसस्सन्तः [2-]तत्कलुषनिवृत्त्यर्थमेव[-2] तत्प्रसङ्गशून्यं नरनारायणाश्रमं प्रययु· ॥३१, ३२॥

प्रासङ्गिकमुक्त्वा प्रस्तुतमनुवर्णयति **तत** इति। अनुचरीसंयुक्तेति वक्तव्ये भूतपूर्वगत्या पुंस्त्वनिर्देशः ॥३३-३६॥

**वीर०** एवमापृष्टो यथावदुपपादयितुं तत्प्रस्तावमाह मुनिः - **एकदेति** त्रिभिः। कदाचिदृषयस्तपोनिष्ठाः हरं रुद्रं द्रष्टुं तत्रेलावृतस्थे वने समुपागमन् जग्मुः। कथम्भूता· सन्त·? भासा स्वदीप्त्या दिशो वितिमिरा· कुर्वन्तस्सन्तः, विगतं तिमिरं आसमन्तात् भासः प्रकाशश्च यासु तथाभूताः कुर्वन्त इति वा ॥२९॥

अथ तान् तत्र समुपागतानृषीन्विलोक्य अम्बिका देवी विवस्त्रा नग्ना सती अत एव नितरां लज्जिता भर्तुः **शर्वस्य** अङ्कादाशु समुत्थाय नीवीं नीवीयुक्तं वस्त्रं पर्यधात् धृतवती ॥३०॥

तथा ऋषयोऽपि रममाणयोस्तयोर्भवभवान्यो· प्रसङ्गं रत्यभिनिवेशप्रसङ्गं वीक्ष्याऽऽलोच्य तस्माद्वनान्निवृत्तास्तत्**प्रसङ्गरहितं** नरनारायणाश्रमं जग्मुः ॥३१॥

तदा भगवान् रुद्रः प्रियाया आम्बिकायाः प्रियं कर्तुमिच्छया एतदाह। कथम्? यः कश्चित्पुमान् एतत्स्थानं **प्रविशेत्** स योषिद्भवेदिति ॥३२॥

ततो रुद्रशापानन्तरं तत् स्थानं सर्वे पुरुषा वर्जयन्ति, तत्र न प्रविशन्तीत्यर्थ·। हीति प्रसिद्धिं द्योतयति। एवं **तद्देशस्य** स्त्रीत्वापादकत्वनिमित्तमभिधाय अथ सुद्युम्नस्य स्त्रीत्वापत्त्यनन्तरं वृत्तान्तमाह - सा चेति। सा च पूर्वमपि योषित्**, मध्ये पुंस्त्वं** प्राप्ताऽपि पुनः स्त्रीत्वमापन्ना योषित् अनुचरसंयुक्ता अनुचरीभि· संयुक्ता, अनुचरी संयुक्तेति वक्तव्ये भूतपूर्वगत्या पुंस्त्व**निर्देशः**। वनाद्वनं, वनान्तरात्पुनः पुनर्वनान्तरं विचचार॥३३॥

---

1 H M Ma V ०म 2- -2 ABJ Omit

ततः स्वाश्रमसमीपे चरन्तीं तां स्त्रीभि· परिवृतां प्रमदोत्तमामवलोक्य भगवान्बुध· सोमपुत्रश्चकमे ॥३४॥

तथा सा च सुभ्रू· सोमराजसुतम्प्रति चकमे परस्परकामतया मिथुनीबभूवतु· । स बुधस्तस्यां योषिति पुरूरवस्संज्ञकमात्मज मुत्पादयामास ॥३५॥

एवं स्त्रीत्वमापन्नो मनो पुत्रो नृप सुद्युम्न स्वकुलाचार्यं वसिष्ठं सस्मार दध्यौ इति शुश्रुम इत्यनेनोक्तवृत्तान्त - स्याऽसत्यत्वशङ्कां निवारयति ॥ ३६ ॥

**विज०** भासा स्वतेजसा वितिमिरा निरस्तान्धकारा· ॥२९॥

नीवीं वस्त्रं, पर्यधाद्वेष्टितं कृतवती ॥३०-३१॥

भगवानाहेत्यन्वय· । कथम् ? य एतत् स्थानं प्रविशेत्स योषिद्भवेदिति, वा इत्यनेन आत्मवर्जमिति सूचयति ॥३२॥

तद्वै तदेव नाऽन्यत् । हि शब्दो हेतौ, यत· स्त्रीत्वं स्यादत इति ॥ ३३, ३४॥

स बुधस्तस्यां स्त्रीत्वमापन्नायां सुद्युम्नाख्यायाम् ॥३५, ३६॥

**स [1]तस्य ता दशां दृष्ट्वा कृपया भृशपीडितः ।**
**सुद्युम्नस्याऽऽशयन् पुंस्त्वमुपाधावत शङ्करम् ॥३७॥**

**तुष्टस्तस्मै स भगवानृषये [2]प्रीतिमावहन् ।**
**स्वाञ्च वाचमृतां कुर्वन्निदमाह विशाम्पते ॥३८॥**

**मासं पुमान् स भविता मासं स्त्री [3]तपसा तव[3] ।**
**[4]इत्थं व्यवस्थया कामं सुद्युम्नोऽवतु मेदिनीम् ॥३९॥**

**आचार्यानुग्रहात्कामं लब्ध्वा पुंस्त्वं व्यवस्थया ।**
**पालयामास जगतीं नाभ्यनन्दन् स्म तं प्रजाः ॥४०॥**

**तस्योत्कलो गयो [5]राज्ञो विमलश्च सुतास्त्रयः ।**
**[6]उत्तरापथराजानो बभूवुः धर्मवत्सलाः ॥४१॥**

**ततः [7]परिणते काले प्रतिष्ठानपतिः प्रभुः ।**
**पुरूरवस उत्सृज्य गां पुत्राय गतो वनम् ॥४२॥**

---

1 M Ma तस्या 2 ABGJT प्रिय 3- -3 ABGJT तव गोत्रज 4 M Ma इति 5 ABGMMaT राजन् 6 ABGJMMaT दक्षिणा 7 MMA ०त

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
नवमस्कन्धे प्रथमोऽध्याय ॥१॥

**श्रीध०** [1-] **स** इति। आशयन् इच्छन्[1]॥३७-३९॥

**आचार्येति**। नाभ्यनन्दन् स्त्रीत्वे [2]तस्य लज्जया मासं[3]मासं निलीयावस्थानात् ॥४०-४२॥

इति श्रीमद्भागवते महापुराणे
श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां नवमस्कन्धे प्रथमोऽध्यायः ॥१॥

**वीर०** संस्मृतो वसिष्ठस्तस्य दशामवस्थान्तरापत्तिं दृष्ट्वा कृपया नितरां पीडित पुन सुद्युम्नस्य पुंस्त्वमाशयन् इच्छन्। अर्दयन्निति पाठान्तरम् । तदाऽप्ययमेवाऽर्थ· शङ्करमुपाधावत अस्तावीदित्यर्थः ॥३७॥

स भगवान् शङ्करः तदुपधावनेन तुष्ट· तस्मै वसिष्ठाय प्रीतिमावहन् कुर्वन् स्वां स्वकीयां वाचं "स्थानं यः प्रविशे देतत् स वै योषिद्भवेत्" (भाग. 9-1-32 ) इत्युक्तां वाचं ऋतां सत्यां च कुर्वन् हे विशाम्पते! इदं वक्ष्यमाणमाह तव तपसा तपः प्रभावेनाऽयं सुद्युम्नो मासं पुमान्भविष्यति, मद्वाचा तु मासं योषिद्भविष्यति।, एवं सत्यावयो र्न तपो वचसोः असत्यतेति भाव. ॥३८॥

इत्येवंविधया व्यवस्थयाऽयं सुद्युम्न· कामं यथेच्छं मेदिनीं पालयतु इति ॥३९॥

तत एवमाचार्यस्य वसिष्ठस्यानुग्रहात् काममिष्टं पुंस्त्वं व्यवस्थया एकैकमासान्तरितत्वरूपया व्यवस्थया लब्ध्वा जगतीं पालयामास तथाऽपि तं सुद्युम्नं प्रजा नाऽभ्यनन्दन् स्म नाऽभिनन्दितवत्य खलु। मासं मासं स्त्रीत्वेन लज्जया संलीयाऽवस्थानादिति भाव· ॥४०॥

तस्य राज्ञस्सुद्युम्नस्य उत्कलादय त्रयस्सुता बभूवुः, ते च दक्षिणापथराजान· दक्षिणदेशाधीश्वरा·। समासान्तविधेरनित्यत्वात् 'राजाऽहः' इति टजभावः। धर्मवत्सलाः धर्मानुकूलवात्सल्ययुक्ताश्च बभूवुः ॥४१॥

तत· काले परिणते सति कालवशात् जरायां प्राप्तायामित्यर्थ । प्रतिष्ठानपतिः प्रतितिष्ठत्यस्मिन्निति प्रतिष्ठानं भूमण्डलं अधिकरणे ल्युट्। तस्याऽधिपतिः सुद्युम्नः। [4-]यद्वा प्रतिष्ठानं प्रयागनगरं तस्याधिपति[4]· प्रभुर्जितेन्द्रियो भूत्वा पुरूरवसे बुधा - - दुत्पन्नाय स्वपुत्राय गां पृथ्वीमुत्सृज्य दत्वा वनङ्गतः, तपः कर्तु मिति शेषः ॥४२॥

---

1- -1 H V omit 2 A B J omit तस्य 3 H V omit मास 4- -4 TW omit

श्रीवत्सान्वयपयःपारावार राकासुधाकरस्य सर्वविद्यानिधेः चक्रवर्तिनः श्रीशैलगुरोः सुतेन
तच्चरणकमलपरिचर्या प्रसादित तत्सूक्ति समधिगतश्रीमद्भागवतार्थहृदयेन श्रीवैष्णवदासेन
श्रीवीरराघवविदुषा लिखितायां श्रीमद्भागवतचन्द्रचन्द्रिकायां
व्याख्यायां नवमस्कन्धे प्रथमोऽध्यायः ॥१॥

**विजः** दशां स्त्रीत्वलक्षणाम् । आशयन् कामयन् , उपाधावत असेवत ॥३७,३८॥

मासमिति द्वितीया। त्रिंशद्दिनेषु एकस्मिन् दिनेऽपि अनन्यथात्वं सूचयति "कालाध्वनोरत्यन्तसंयोगे" (अष्टा 1-3-5) इति सूत्रात् ॥३९॥

पुंस्त्वलक्षणं कामम् , जगतीं राजप्रधानभूमिम् ॥ ४०॥

दक्षिणापथस्य देशस्य राजानः ॥४१॥

परिणतो वृद्धः प्रतिष्ठानाख्यपुरपतिः, गां भूमिम् ॥४२॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
नवमस्कन्धे प्रथमोऽध्याय· ॥१॥

# द्वितीयोऽध्यायः

## श्रीशुक उवाच

एवं गतेऽथ सुद्युम्ने मनुर्वैवस्वतः सुते।
पुत्रकामस्तपस्तेपे यमुनायां शतं समाः ॥१॥

ततोऽयजन्मनुर्देवमपत्यार्थे[1] हरिं प्रभुम् ।
इक्ष्वाकुपूर्वजान् पुत्रान् लेभे स्वसदृशान् दश ॥२॥

[2]पृषध्रस्तु मनोः पुत्तो गोपालो गुरुणा[3] कृतः।
पालयामास गा[4] यत्तो रात्र्यां वीरासनव्रतः ॥३॥

एकदा प्राविशद्गोष्ठं शार्दूलो निशि वर्षति।
शयाना गाव उत्थाय भीतास्ता बभ्रमुर्व्रजे ॥४॥

एकां जग्राह बलवान्[5] सा चुक्रोश[6] भृशातुरा ।
[7]तस्यास्तत्क्रन्दितं श्रुत्वा[8] पृषध्रोऽभिससार ह ॥५॥

खड्गमादाय[9] तरसा प्रलीनोडुगणे निशि।
अजानन्[10]न्नच्छिनद्बभ्रोः शिरश्शार्दूलशङ्कया ॥६॥

व्याघ्रो[11]ऽपि वृक्णश्रवणो निस्त्रिंशाग्र[12]हतस्ततः ।
निश्चक्राम[13] दृढं भीतो रक्तं पथि समुत्सृजन् ॥७॥

मन्यमानो[14] हतं व्याघ्रं[15] पृषध्रः परवीरहा।
अद्राक्षीत् स्वहतां[16] बभ्रुं व्युष्टायां निशि दुःखितः ॥८॥

### श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

द्वितीये मनुपुत्राणां द्वावपुत्रौ विरागतः।
[17]करूशकादि पञ्चानां वंशानाह लघुक्रमात् ॥ **एवमिति**। वैवस्वतो मनुः श्राद्धदेवः ॥१॥

**तत इति**। इक्ष्वाकुः पूर्वजो येषां तान् [18-]दशपुत्रान् लेभे[-18] ॥२॥

---

1 A B G J M MaT त्यार्थं 2 M Ma वृ० 3 H V णान्वित 4 H V गा यत्तो; W गा यत्ता 5 M Ma साऽनु० 6 A,B,G J T भयातुरा, M Ma भयातुरा 7 M Ma स्यास्तु क्र 8 M Ma वृ० 9 H V सहसा 10 A,B,G,J,M Ma,T ०न्नह० 11 M Ma ०विवृ० 12 A,B,G J T ग्रा० 13 A,B G J M Ma,T भृशं 14 H V हतं 15 M Ma ०वृ० 16 M Ma ०हृ० 17 A B J ०ष० 18--18 H V omit

तत्र पृषध्रस्य वंशो नाऽभवदिति सहेतुकमाह - पृषध्रस्त्वित्यारभ्य[1] कविः कनीयानित्यतः प्राक्तनेन ग्रन्थेन। **पृषध्र इति**। खड्गपाणेस्सतः तिष्ठतः जागरणं वीरासनं तदेव व्रतं यस्य। यत्तः अवहितस्सन् गाः पालयामास ॥३॥

**एकदेति**। शार्दूलो व्याघ्र·[2] वर्षति सति पर्जन्य इति शेषः[2] ॥४,५॥

**खड्गमिति**। प्रलीना उडुगणा यस्मिन् तस्मिन् समय इति शेषः। बभ्रोः कपिलायाः गोः ॥६॥

**व्याघ्र** इति। गां कामत. न जघान इति ख्यापयितुं [3-]वृक्णश्रवणः इत्याद्युक्तम्। वृक्णश्रवणः खण्डितश्रोत्रः[-3] ॥७॥

**मन्यमान** इति। व्युष्टायां प्रभातायाम् ॥८॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

एवं सोमवंशप्रवृत्तिमभिधाय अथ सुद्युम्ने वनं गते[4] सति पुनर्मनोः पुत्रार्थं तपश्चर्यां भगवदाराधनं ततः इक्ष्वाक्वादि पुत्रलाभं तत्पुत्रपौत्रादिपरम्परां तच्चरित्राणि च आह-**एवमिति**। इत्थं सुते सुद्युम्ने वनङ्गते सति अथ मनुः वैवस्वत· पुत्रान् कामयमानः यमुनायां नद्यां तत्तटे शतं समा तपस्तेपे चकार ॥१॥

ततोऽपत्यार्थे पुत्रार्थं देवं हरिं प्रभुं स्वतन्त्रं भगवन्तं अयजत् आराधितवान्, तत·[5] तस्य भगवत प्रसादात् स्वतुल्यान् इक्ष्वाकुप्रभृतीन् दश पुत्रान् प्राप। इक्ष्वाक्वादय पूर्वमेव निर्दिष्टा· ॥२॥

तत्र पृषध्रकव्यो सन्तत्यभावज्ञापनाय तच्चरित्रं तावदाह - 'पृषध्रस्तु' इत्यादिना 'करूषान् मानवा' दित्यत· प्राक्तनेन ग्रन्थेन। मनोर्वैवस्वतस्य पुत्र· पृषध्रस्तु। तु शब्दोऽस्य इक्ष्वाक्वादिभ्य. सन्तत्यभावकृतवैलक्षण्यद्योतनार्थः। गुरुणा वसिष्ठेन पित्रा वा, गोपाल कृत· गा पालयेति नियुक्त , यत्त अवहितस्सन् वीरासनमेव व्रतं यस्य तथाभूतो रात्र्यां खड्गपाणि· गा· पालयामास। व्याघ्रादिभ्यो ररक्ष ॥३॥

एवं सति एकदा निशि रात्र्यां वर्षति सति पर्जन्ये, शार्दूलो व्याघ्र गोष्ठं प्राविशात्। तदा तं दृष्ट्वा ताश्शायाना गावो भीता· उत्थाय व्रजे गोष्ठे बभ्रमु ॥४॥

तदा बलवान् शार्दूल एकां गां जग्राह। सा गृहीता गौ आतुरा सती चुक्रोश, आक्रन्दितवती, तस्या गो. तत्क्रन्दितं निशम्य पृषध्र· समीपमियाय ॥५॥

निशि प्रलीना उडुगणा नक्षत्रगणा यस्मिन् तस्मिन् समये मेघावृतत्वात् अम्बरस्य नक्षत्रप्रकाशेनापि वर्जिते समये। अत एव अजानन् शार्दूलशङ्कया बभ्रो कपिलाया गो[6] शिर· खड्गमादाय तरसा बलेन अच्छिनत् चिच्छेद ॥६॥

---

1 A B J त्यादिना 2--2 A,B,J omit 3--3 A,B J omit 4 A,B,T प्रविष्टे 5 A,B,T omit तत 6 A,B,T omit गो

तदा निस्त्रिंशः खड्गः तस्याग्रतः प्रहरणवेगात् समीपस्थो व्याघ्रः छिन्नकर्णो भूत्वा नितरां भीतः पथि रक्तं समुत्सृजन्, ततो गोष्ठात् निष्क्रान्तः ॥७॥

ततः परवीरहा पृषध्रो व्याघ्रं हतं मन्यमानो निशि व्युष्टायां अतीतायां सत्यां प्रभाते स्वेन हतां बभ्रुम् अद्राक्षीत् ततो नितरां दुःखितो बभूव ॥८॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

सुद्युम्ने सुते वैवस्वतः श्राद्धदेवो मनुः ॥१॥

इक्ष्वाकुः पूर्वजो ज्येष्ठो येषां ते तथा तान् ॥२॥

मनोःपुत्राणां अष्टमः पुत्रः[1] वृषध्रः गाः पालयामास। कीदृशः ? गुरुणा वसिष्ठेन गोपाल कृतः। तुशब्देन वृषान् धारयितुं योग्य इति निरुक्त्येति सूचयति गोरक्षैकनिष्ठया नेत्रे उन्मील्य जाग्रदेव गोसन्निधाने प्रतिष्ठानाद्वीरासनव्रत ॥३॥

निशि मेघे वर्षति सति ॥४॥

सा गौः ॥५॥

बभ्रोर्गोः शिरोऽहनत्। "बभ्रूर्गौः सौरभेयी च माहेयी गोमतल्लिका" इति। गो शिरश्छेदने को हेतु ? इति तत्राऽऽह निशीति। निश्यपि नक्षत्रादिप्रकाशनेन विवेकज्ञानं सुलभमित्यत्राऽऽह[2] - प्रलीनेति। मेघच्छायाच्छादितनक्षत्रादिप्रकाशे च सति ॥६॥

विवृक्णश्रवण छिन्नकर्णमूल निस्त्रिंशस्य खड्गस्य अग्रेण हत प्रहत ॥७॥

निशि व्युष्टायां प्रभातायाम् ॥८॥

**तं शशाप कुलाचार्यः कृतागसमकामतः।**
**न क्षत्रबन्धुः शूद्रस्त्वं कर्मणा भविताऽमुना ॥९॥**

**एवं शप्तस्[3]स्वगुरुणा प्रत्यगृह्णत्कृताञ्जलिः।**
**अधारयद्व्रतं वीर ऊर्ध्वरेता मुनिप्रियम् ॥१०॥**

**वासुदेवे भगवति सर्वात्मनि[4] परेऽमले।**
**एकान्तित्वं गतो भक्त्या सर्वभूतसुहृत्[5]समः ॥११॥**

---

1 A पु० 2 Ma ०त्याह 3 A,B G J M Ma,T ०स्तु० 4 M Ma 5 B J त्तम

विमुक्तसङ्गश्शान्तात्मा संयताक्षोऽपरिग्रहः ।
यदृच्छयोपपन्नेन कल्पयन् वृत्तिमात्मनः ॥१२॥

आत्मन्यात्मानमाधाय ज्ञानतृप्तस्समाहितः ।
विचचार महीमेतां जडान्धबधिराकृतिः ॥१३॥

एवंवृत्तो[1] वनं गत्वा दृष्ट्वा दावाग्निमुत्थितम् ।
तेनोपभुक्तकरणो[2] ब्रह्माऽवाप[3] परं मुनिः ॥१४॥

[4]कविः कनीयान्विषयेषु निःस्पृहो विसृज्य राज्यं सह बन्धुभिर्गृहान्[5] ।
निवेश्य चित्ते पुरुषं स्वरोचिषं विवेश कैशोरवयाः पराङ्गतिम्[6] ॥१५॥

करूषान्मानवादासन्[7] कारुषाः[8] क्षत्रजातयः ।
उत्तरापथगोप्तारो ब्रह्मण्या धर्मवत्सलाः ॥१६॥

**श्रीध०** तमिति। क्षत्रबन्धुरपि त्वं न भविता, अपि तु शूद्रो भवेति[9] ॥९-१३॥

एवमिति। उपयुक्तकरणो दग्धदेहः ॥१४॥

कवेरपि वंशो नाऽभवदित्याह - **कविरिति**। बन्धुभिस्सह राज्यं विसृज्य ॥१५-१६॥

**वीर०** तमकामतः प्रमादात्कृतागसमपि पृषध्रं कुलाचार्यो वसिष्ठश्शशाप। शापमेवाऽऽह नेति। त्वं क्षत्रबन्धुरपि न भविताऽसि किन्तु अमुना पापेन कर्मणा केवलं शूद्रो भवेति ॥ ९ ॥

इत्थं स्वगुरुणा वसिष्ठेन शप्तः पृषध्रः कृताञ्जलिः शापं प्रत्यगृह्णत् प्रतिजग्राह । ततो वीरः पृषध्रो जितेन्द्रियो भूत्वा मुनीनां प्रियं व्रतं भगवदुपासनात्मकमधारयत् भगवन्तमुपासाञ्चक्र इत्यर्थः ॥१०॥

ततः कतिपयैर्दिनैः सर्वभूतान्तरात्मनि निरस्तनिखिलदोषे परस्मिन्ब्रह्मणि एकान्तित्वं "प्रियोऽहि ज्ञानिनोऽत्यर्थमहं सच मम प्रियः" (भ : गी 7-17 ) "ज्ञानी त्वात्मैव मे मतम्" (भ.गी. 7-18 ) इत्यादिस्थानोक्तानन्यप्रयोजनसाक्षात्कारपर्यन्त भक्त्यात्मकज्ञाननिष्ठत्वं प्राप्तः सर्वभूतसुहृत् समः, सुखदुःखयोरिति शेषः ॥११॥

विमुक्त ऐहिकेषु आमुष्मिकेषु च भोगेषु सङ्गो येन सः शान्तः रागादिभिरकलुषित आत्मा मनो यस्य, संयतानि नियमितानि

---

1 M Ma व्रतो 2 A B,G,H,J,M Ma,T V ०यु० 3 A,B,G,J,M Ma,T ब्रह्म प्राप 4 M,Ma कविस्तदाय वि० 5 A,B,G,J,M Ma,T ०र्वनम्
6 A,B,G,H,J,M Ma,T परगत । 7 H M Ma V ०शा० 8 H M Ma V ०शा० 9 A B J भवितेति

अक्षाणि इन्द्रियाणि येन, न विद्यते परिग्रहः देहातिरिक्त तदनुबन्धो[1] यस्य सः, यदृच्छयोपपन्नेन दैवाल्लब्धेनाऽन्नादिना आत्मनो देहस्य वृत्तिं कल्पयन् धारणां[2] कुर्वन् ॥१२॥

आत्मनि परमात्मनि आत्मानं मन आधाय निवेश्य यद्वा, आत्मानं प्रत्यगात्मानमाधाय "ओमित्यात्मानं युञ्जीत" (म.ना. उ. 17-15) इति श्रुत्युक्तप्रकारेण तच्छेषतया तदायत्तसत्तादिमत्वेन चाऽनुसन्धायेत्यर्थः। ज्ञानतृप्तः निरतिशयानन्दरूप-भागवदुपासनात्मकज्ञानेनैव तृप्तः तदन्यविषयनिस्पृहः समाहितः अप्रकम्प्यः भगवद्भक्तियोगनिष्ठजडादीनामाकृतिरिवाकृतिः आकारो यस्य सः, एतां महीं विचचार ॥१३॥

यावत्प्रारब्धमेवंविधं वृत्तं वृत्तिर्यस्य सः, तदवसाने कदाचिद्वनं प्रविश्य तत्रोत्थितं दावाग्निं दृष्ट्वा तं प्रविश्य तेन दवाग्निनोपभुक्तानि दग्धानि करणानि करचरणादीनि यस्य तादृशो मुनिः पृषध्रः परं ब्रह्म प्राप प्राप्तवान् ॥१४॥

अथ कवेर्वृत्तमाह - **कविरित्येकेन**। कनीयानिक्ष्वाकादीनां सर्वेषामवरजः कविः विषयेषु शब्दादिषु निःस्पृहः अत एव राज्यं बन्धुभिस्सह गृहांश्च त्यक्त्वा स्वरोचिषं स्वाभाविक दीप्तियुक्तम् "आदित्यवर्णं तमसः परस्तात्" (श्वेत. उ. 3-8) इति हि श्रुतिः। यद्वा स्वप्रकाशं ज्ञानस्वरूपं परमपुरुषं स्वचित्ते निवेश्य चित्तं तस्मिन् स्थिरीकृत्येत्यर्थः। कैशोरवयस्क एव परां गतिमवाप ॥१५॥

अथ करूषस्य वंशमाह - करूषादिति। कारुषसंज्ञास्त्रयः क्षत्रियाः उत्तरदेशस्य गोप्तारः, ब्रह्मण्याः ब्राह्मणेषु साधवः, धर्मानुकूलवात्सल्ययुक्ताश्चाऽभवन् ॥१६॥

**विज०** अकामतः बभ्रुहननेच्छाऽभावतोऽपि कृतागसं कृतापराधम् अमुना क्रूरकर्मणा शूद्रो भविता न क्षत्रबन्धुरिति शशापेत्यन्वयः ॥९॥

तुशब्देन गुरावनसूयावानित्याह - कुतोऽवगतमेतदित्यत उक्तं - प्रत्यगृह्णदिति। भयात्प्रतिग्रहः किं न स्यादित्यत उक्तं कृताञ्जलिरिति। मुनिप्रियम् ऊर्ध्वरेतस्त्वम् ॥१०॥

किं तन्मुनिप्रियं व्रतम्। इत्यत आह वासुदेव इति। एकान्तित्वादिकं व्रतम् ॥११॥

संयताक्षः नियमितेन्द्रियः यदृच्छया असम्प्रार्थितागतेन ॥१२, १२॥

तेन दावाग्निना उपयुक्तकरणः, स्वीकृतदेहः दग्धदेह इत्यर्थः। "करणं साधकतमे शरीरेन्द्रिययोरपि" इति ॥१४॥

उक्तमेव विवृणोति - कविरिति। यदा शापं प्राप तदा विषयेषु निःस्पृहः कविः ज्ञानी अयं वृषध्रः[3] बन्धुभिस्सह सङ्गं विसृज्य वनं विवेश। स्वरोचिषं स्वयंप्रकाशं पुरुषं चित्ते निवेश्य कैशोरवया अल्पवयाः तत्प्रसादेन परङ्गत इत्यन्वयः ॥१५॥

---

1 BW बन्धो 2 A,B T ०णं 3 A,B पृ०

मानवात् मनुपुत्रात् करूशात्[1] कारूशा[2] इत्येवं प्रसिद्धाः आसन्नित्यन्वय.। क्षत्रजातय इत्यनेन गोपालत्वादिजात्यन्तरं नाऽऽप्ता , किन्तु तज्जातय एव इति सूचयति ॥१६॥

**धृष्टाद्धार्ष्टमभूत्क्षत्रं ब्रह्मभूयं[3] गतं क्षितौ ।**
**[4-]नृगस्य वंशस्सुमतिर्भूतज्योतिस्ततो वसुः[-4] ॥१७॥**

**वसोः प्रतीकस्तत्पुत्र ओघवानोघवत्पिता ।**
**कन्या चौघवती नाम सुदर्शन उवाह ताम् ॥१८॥**

**चित्रसेनो नरिष्यन्ताद्दक्षस्तस्य[5] सुतोऽभवत् ।**
**तस्य मीढ्वांस्ततः[6] कूर्च इन्द्रसेनस्तु तत्सुतः ॥१९॥**

**वीतिहोत्रस्त्विन्द्रसेनात् तस्य सत्यश्रवास्सुतः[7] ।**
**उरुश्रवास्सुतस्तस्य देवदत्तस्ततोऽभवत् ॥२०॥**

**[8]ततोग्निवेश्यो भगवानग्निः[9] स्वयमभूत्स्वतः।**
**कानीन इति विख्यातो जातूकर्ण्यो[10] महानृषिः॥ २१॥**

**ततो ब्रह्मकुलं जातमग्निवेश्यायनं नृप।**
**नरिष्यन्तान्वयः[11] प्रोक्तो दिष्टवंशमथो[12] शृणु ॥२२॥**

**नाभागो दिष्टपुत्रोऽन्यः कर्मणा वैश्यताङ्गतः ।**
**[13]हलन्दनस्सुतस्तस्य वत्सप्रीतिर्हलन्दनात्[14] ॥२३॥**

**वत्सप्रीतेस्सुतः प्रांशु[15-]स्तत्सुतः प्रमितिर्विभो[-15] ।**
**स्वमित्रः प्रमिते[16]स्तस्मात् चाक्षुषो[-17]ऽथ विविंशतिः ॥२४॥**

**श्रीध० धृष्टादिति**। ब्रह्मभूयं ब्राह्मणत्वम् । नृगस्य वंश्य पुत्रस्सुमतिस्ततो भूतज्योतिस्ततो वसु ॥१७॥

**वसोरिति**। ओघवत पिता, तत्पुत्रोऽप्योघवानेवेत्यर्थ ॥१९॥

---

1 A,B ०षात् 2 A B J ०षा 3 M Ma भूत 4- -4 M,Ma नभपुत्रोऽभिबलवान् स्वातिमूलोऽभवद्वसु । 5 A,G,J T ०दृ० 6 H V स्ततश्शर्व 7 A,B,G J M Ma,T ०वा अभूत् । 8 H M Ma V देवदत्तस्य भ० 9- -9 H V नग्निवेशस्सुतोऽभवत् 10 H V तु कर्णो , W तु कर्ण्यो 11 W दय प्रोक्ता 12 A B G J M Ma T ०मतश्शृ० 13 A B G J M Ma T भ० 14 A B G J M Ma T भे० 15- -15 A B G T ०त्सुत्र प्रमतिं विदु ; M Ma ०त्सुत प्रमितिर्निभु 16- -16 A B G J M Ma T खनित्र प्रमते 17 W च०

**तदेवं त्रिभिः श्लोकैः करूशधृष्ट**[1] नृगाणां वंशा उक्ताः। नरिष्यन्तस्य वंशमाह चित्रसेन[2]इत्यादि सार्धैस्त्रिभिः। तत इत्यादेः यत्राऽधिक्यं स्यात्तत्राऽऽनन्तर्ये तत इत्यादि पदं व्याख्येयम् । यत्र तु न्यूनत्वं तत्र पूर्वस्य परस्य वाऽनुषङ्गादिभि व्याख्येयम् । ।।१९,२०।।

**तत** इति। अग्निवेश्य एव कानीन इति[3]जातुकर्ण इति च विख्यातः ।। २१, २२।।

**नाभाग** इति। दिष्टस्य पुत्रो नाभागो वक्ष्यम[4]णात् नाभागादन्य इति भ्रान्तिव्युदासार्थम् अनुवादमात्रम् ।।२३, २४।।

**वीर०** अथ धृष्टस्य वंशं, तद्वृत्तञ्चाऽह-**धृष्टादित्यर्धेन**। धृष्टान्मानवात् धार्ष्टिसंज्ञं क्षत्रं क्षत्रजात्याश्रयाणि कानिचिदपत्यानि अभूवन्नित्यर्थः। तच्च क्षत्रं क्षितौ ब्रह्म भूयं गतं ब्रह्मणो भावो ब्रह्मभूयम्, अपहतपाप्मत्वादिगुणाष्टकसम्पत्ति "ब्राह्मेण जैमिनि रुपन्यासादिभ्यः" (ब्र.सू 4-4-5) इति हि शारीरक सूत्रं तद्गतमस्मिन् लोके परब्रह्मोपासनया तद्भावं प्रापेत्यर्थः। अथ नृगस्य वंशमाह नृगस्येति। नृगस्य मानवस्य वंश्य वंशे भवस्तावत्सुमति , तत सुमते भूतज्योति , ततश्च वसु ।।१७।।

वसो प्रतीक , तस्य प्रतीकस्य पुत्र ओघवान्, ओघवान् पिता यस्य सोऽप्योघवानेव, ओघवत कन्या दुहिता ओघवतीति प्रसिद्धा, तां ओघवतीं सुदर्शन उवाह उपयेमे ।।१८।।

अथ नरिष्यन्तस्य वशमाह - **चित्रसेन** इति। नरिष्यन्तान्मानवात् चित्रसेनस्तस्य चित्रसेनस्य ऋक्षसंज्ञ सुतोऽभवत्, तस्य ऋक्षस्य मीढ्वान् ततो मीढुष कूर्च तत्सुत कूर्चस्य सुत इन्द्रसेन ।।१९।।

इन्द्रसेनाद्वीतिहोत्रोऽभवत् तस्य वीतिहोत्रस्य सुत सत्यश्रवा अभवत्। तस्य सत्यश्रवस सुत उरुश्रवा , तत उरुश्रवसो देवदत्त सुतोऽभवत् ।।२०।।

देवदत्तस्य तु भगवानग्नि स्वयमेव पुत्रतां प्राप्त , स च कानीन इति प्रसिद्ध महानृषिरभूत्। तस्यैव नामान्तरं[5]जातूकर्ण्य इति, अग्निवेश्य इति च ।।२१।।

ततोऽग्निवेश्यजातूकर्ण्यापरनामधेयात् [6]कानीनात्, हे नृप! अग्निवेश्यायनमाग्निवेश्यगोत्रम् एतत्कुलमित्येवंविध व्यवहारविषयं ब्राह्मणकुलं जातम् । वृत्तानुवादपूर्वकं वर्तिष्यमाणकथनं प्रतिजानीते, एवं नरिष्यन्त आदिर्येषां तत्पुत्रादीनां ते प्रोक्ताः। अथ दिष्टस्य मानवस्य वंशं शृणु, कथयतो मत्त इति शेष ।।२२।।

दिष्टस्य पुत्रो नाभाग , स चाऽयं नाभागः कर्मणा कृषिगोरक्षवाणिज्यादिकर्मणा वैश्यतां प्राप्त । कर्मणा वैश्यतां गत इत्यनेन पूर्वकाले शमदमादिकर्मणैव विप्रत्वादिजात्याश्रयत्वमिति सूचितम्। मनुपौत्रान्नाभागदयमन्यो नाभागः, तस्य वशश्चतुर्थे अध्याये वक्ष्यते, तस्य नाभागस्य सुतो हल[7]न्धन , हल[8]न्धनाद्वत्सप्रीति सुतोऽभवत् ।।२३।।

---

1 ABJ ०ष 2 ABJ इति 3 ABJ जातूकर्ण्य, 4 ABJ ०णा ना० 5 B जातुकर्ण्य 6 A,omits कानीनात् 7 AB ०न्दन 8 AB न्द

वत्सप्रीतेस्सुतः प्रांशुः, तत्सुतः प्रांशोस्सुतः [1]प्रमितिः। हे विभो! [2]प्रमितेः स्वमित्रः, तस्मात् स्वमित्रा[3]च्चाक्षुषः अथ [4]चाक्षुषाद्विंशतिः अभूत् ॥२४॥

**विज०** धृष्टान्मनुपुत्रान्नाम्ना धार्ष्टं क्षत्रमभूत्, तद्वृत्तमाह- ब्रह्मभूयमिति। ब्रह्मत्वं श्रोत्रियत्वं गतमित्यर्थः। नभस्य मनुपुत्रस्य पुत्रः स्वातिमूलः, तस्य पुत्रः नाम्ना वसुरभवत् ॥१७॥

तत्पुत्रः प्रतीकपुत्र. ओघवान्, आघवतस्तस्य सहोदर्योघवती कन्या चाऽभवत्, सुदर्शनो नाम राजा ॥१८॥

नरिष्यन्तान्मनुपुत्राच्चित्रसेननामा सुतोऽभूत्, तस्य चित्रसेनस्य दक्षः॥१९, २०॥

अग्नेर्जातूकर्ण्य इति नाम ॥२१॥

ततो जातूकर्ण्याद्ब्रह्मकुलं जातम्, तदेवाग्निवेश्यायनमिति नामान्तरेण प्रसिद्धं इक्ष्वाकुप्रभृतीनां चतुर्थं दिष्टवंशम् ॥२२॥

अन्यः अन्यजातीयः कथं वाणिज्यादिकर्मणा वैश्यत्वं गतः, 'दिष्टपुत्रो य' इति केचित्पठन्ति। वक्ष्यमाणादन्य इति वा॥२३, २४॥

**विविंशतिसुतो रम्भः खनिनेत्रोऽस्य धार्मिकः।**
**कर[5]न्धमो म[6]हाराजः तस्यासीदात्मजो नृ[7]प ॥२५॥**

**तस्या[8]विक्षत् सुतो यस्य मरुत्तश्चक्रवर्त्यभूत्।**
**संवर्तोऽयाजय[9]द्यं वै महायोग्यङ्गिरस्सुतः ॥२६॥**

**मरुत्तस्य यथा यज्ञो न तथा[10]ऽन्योऽस्ति कश्चन।**
**सर्वं हिरण्मय[11]श्चासीत् य[12]त्किञ्चिच्चास्य शोभनम् ॥२७॥**

**अमाद्यदिन्द्रस्सोमेन दक्षिणाभिर्द्विजातयः।**
**मरुतः परिवेष्टारो विश्वे देवास्सभासदः ॥२८॥**

**मरुत्तस्य दमः पुत्रस्तस्याऽऽसीद्रा[13]जवर्धनः।**
**[14]सुधृतिस्तत्सुतो जज्ञे सौधृतेयो नरस्सुतः ॥२९॥**

**तत्सुतः केवलस्तस्मा[15]द्बन्धुमान् [16]वेगवांस्ततः।**
**[17]बन्धुस्तस्याऽभवद्यस्य तृणबिन्दुर्महीपतिः ॥३०॥**

---

1 A ०म० 2 A ०म० 3 W ० च्च० 4 W च० 5 HV ०न्धनो। 6 ABGJMMaT ०ज। 7 MMa ०प 8 ABGJMMaT ०स्य वीक्षित् 9 HV ०द्येन 10 ABGJT ०ऽन्यस्य 11 ABGJMMaT ०न्वा 12 MMa किश्चात्स्यतिशो० ; W किश्चि त्तस्यशो० 13 ABGJMMaT ०ज्य० 14 MMaT सो धृे० 15 W द्विन्दु 16 HV ०द० 17 W बिन्दु०

**तं भेजेऽलम्बु[1]सा देवी भजनीयगुणालयम् ।**

**वराप्सरा यतः पुत्राः कन्या चे[2]लबिलाऽभवत् ॥३१॥**

**[3]तस्यामुत्पादयामास विश्रवा धनदं सुतम् ।**

**[4]सोऽवाप विद्यां परमा [5]मृषेर्यो[6]गेश्वरात्पितुः ॥३२॥**

**श्रीध० तस्येति** । अङ्गिरसस्सुतो महायोगी संवर्तो यं अयाजयत् स मरुत्त ॥२५, २६॥

**मरुत्तस्येति** । अस्य यत्कि ञ्चित्पात्रादिक[7]मासीत् तत्तु सर्वं हिरण्मयं शोभन[8]मासीत् ॥२७॥

**आमाद्यदिति** । अमाद्यत् [9]मुदं प्राप ॥ २८ - ३०॥

**तमिति** । यतो यस्यां तृणबिन्दो पुत्रा अभवन् ॥३१, ३२॥

**वीर०** विविंशतेः पुत्रो [10]रम्भ· अस्य [11]रम्भस्य पुत्रः खनिनेत्र , सच धार्मिकः, तस्य दम्भ ,तस्य दम्भस्य आत्मजः करन्धमाख्यो महाराज आसीत्। हे नृप' ॥२५॥

तस्य करन्धमस्य सुतोऽ [12]विक्षत् तत् पुत्रं वदन् तं विशिनष्टि - यस्य अ[13]विक्षतः पुत्रो मरुत्ताख्य· चक्रवर्ती कृत्स्न - भूमण्डलरूपं चक्रं यस्य वशे वर्तते स चक्रवर्ती, तादृशो बभूव। मरुत्तं विशिषन् सङ्ग्रहेण तद्वृत्तमाह - संवर्त इति। यं मरुत्तं अङ्गि रसस्सुतो महायोगी संवर्तः अयाजयत् ॥२६॥

मरुत्तस्य यज्ञो यथा यादृश· तथा तादृश कश्चिदप्यन्यो यज्ञो भुवि न केनचित्कृत इत्यर्थ· । मरुत्तस्य यज्ञमेव विशिनष्टि - यत्किञ्चिद्यज्ञोपकरणादिकं तत्सर्वं तत्कृतयज्ञे हि शोभनं हिरण्म[14]यं सुवर्णम[14]यमेवाऽऽसीत् ॥२७॥

तथा तस्मिन् यज्ञे इन्द्र· सोमेन रसेन अमाद्यत् अहृष्यत्। तथा द्विजातयो ब्राह्मणाश्च दक्षिणाभिरमाद्यन्। किञ्च तत्र यज्ञे मरुतः परिवेष्टार· भोजनपात्रेष्वन्नादीनां प्रदातार· सभायां सीदन्त्युपविशन्तीति सभासद· सभ्या· विश्वेदेवा· ॥२८॥

मरुत्तस्य पुत्रो दम तस्य पुत्रो राजवर्धनाख्य समभवत्। तस्य राजवर्धनस्य सुत· सुधृति· जज्ञे बभूव। तस्य नर इति प्रसिद्ध· सुत तस्यैव नामान्तरं सौधृतेय इति। तत्सुत सौधृतेयसुत· केवल· । तस्मात्केवलाद्बिन्दुमान् जज्ञे इत्यनुषङ्गः। ततो बिन्दुमतो वेगवान्। तस्य वेगवतः बिन्दु पुत्रोऽभवत्। तत्पुत्रं दर्शयन् तं विशिनष्टि, यस्य बिन्दो· तृणबिन्दुरिति प्रसिद्धो महीपतिः पुत्रो बभूव ॥ २९-३०॥

---

1 ABGJMMaT ०षा 2 ABGJT ०डबडा० 3 BMMa य० 4 ABGJMMaT प्रादाय 5 ABGJMMaT मृषि० 6 MMa ०र पितु 7 ABJ ०मस्ति 8 HV ०मभवत् 9 ABJ अहृष्यत् 10 ABT द० 11 ABT द० 12 AT ०तोवीक्षित्, B ०तोविक्षित् 13 AT ०वीक्षित ; B विक्षित 14--14 W यमेव

भजनीया समाश्रयणोपयुक्ता गुणा यस्य तं तृणबिन्दुं अश्रेष्ठा देवस्येन्द्रस्य सम्बन्धिनी अलम्बुसा[1] भेजे अन्ववर्तत। यत· यस्यामलम्बुसायां[2] तृणबिन्दोः पुत्रा अभवन् इलबिलाख्या कन्या चाऽभवत् ॥३१॥

कन्यां विशिंषन् तस्यास्सुतमाह - यस्यामिलबिलायां विश्रवा धनदं कुबेरं सुतमुत्पादयामास। स धनद. तृणीबन्दुर्वा योगेश्वरात्पितु. विश्रवसो बिन्दो. वा ऋषे. सकाशात्परमां विद्याम् अवाप, अन्तर्धानविद्यां [3]ब्रह्मविद्यां[3] वाऽवापेत्यर्थः ॥३२॥

**विज०** तस्य करन्धमस्य पुत्र. अवीक्षित्, यस्याऽवीक्षितो मरुत्त सुतः। मरुत्तं विशिनष्टि - संवर्त इति। कोऽसौ संवर्तः? इति तत्राऽऽह - महायोगीति ॥२६॥

संवर्तो नाम ऋषि· कीदृशं यज्ञमकारयत् ? येन महायोगित्वं सम्भाव्यते, इत्यतस्तं यज्ञं विशिनष्टि - मरुत्तस्येति। अनेन मरुत्तस्याऽपि महायोगित्वं श्रीनारायणानुग्रहपात्रत्वं सूचितम् ॥२७॥

द्विजातयो दक्षिणाभिरमाद्यन् संहृष्टा इत्यन्वय । मरुतो देवा । "ऋभवोऽमराश्च मरुतो बृन्दारकविनिर्जरा " (हला.को. 1-4 ) इत्यभिधानम्। विश्वेदेवा इति विशेषणाद्वायवो वा। परिवेष्टार· भोक्तृणामपेक्षितान्धसादिनिक्षेप्तारः। सभायां सीदन्त्युपविशन्तीति सभासद , प्रत्यक्षं सभायां उपविश्य सर्वं विचारयन्त इत्यर्थ ॥२८-३०॥

अलम्बुषा नाम वराप्सरा तं तृणबिन्दुं भेजे ॥३१॥

कीदृशी इलबिलेति तां विशिनष्टि यस्यामिति। योगीश्वरो विश्रवा ऋषिश्च इलबिलाया पितुस्तृणबिन्दो परमां विद्यां प्रदाय तां उद्वाह्य यस्यामिलबिलायां धनाधिपं वैश्रवणमुत्पादयामासेत्यन्वय ॥३२॥

**विशालश्शून्यबन्धुश्च धूम्रकेतुश्च[4] तत्सुताः।**
**विशालो वंशकृद्राजा वैशालीं निर्ममे पुरीम् ॥३३॥**

**हेमचन्द्रस्सुतस्तस्य धूम्राक्षस्तस्य चाऽऽत्मजः।**
**[5]तत्पुत्रस्सहदेवस्तु[5] कृशाश्व[6]स्तस्य चाऽऽत्मज[6] ॥ ३४॥**

**कृशाश्वात् सोमदत्तोऽभूत् योऽश्वमेधैरिडस्पतिम् ।**
**इष्ट्वा पुरुषमेवाग्र्यां[7] गतिं योगेश्वराद्[8]गताम् ॥३५॥**

**[9]सोमदत्तातु सुमतिस्तत्सुतो जनमेजयः।**
**एते वैशालभूपालास्तृणबिन्दोर्यशोधराः ॥३६॥**

---

1 A B T ०षा 2 A B T ०षा० 3- -3 W omits 4 M Ma धूम० 5- -5 A B G J T तत्पुत्रात् सयमादासीत् 6- -6 A B G J M Ma T ०स्सहदेवज
7 A B G J M Ma ०मापा० 8 A B G J T ०श्रित , M Ma T श्रिताम् । 9 A B G J M Ma T सौमदत्तिस्तु

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
नवमस्कन्धे द्वितीयोऽध्याय· ॥२॥

**श्रीध०** [1]तानेवाह - **विशाल** इति। तस्य तृणबिन्दोस्सुता[1]· ॥३३॥

**हेमेति**। [2-]तत्पुत्रः सहदेवः[-2]। पाठान्तरे नामान्यत्वमात्रम्, अर्थस्तु स एव ॥३४, ३५॥

**सोमेति**। वैशालभूपाला· विशालस्यान्वये जाता· ॥३६॥

इति श्रीमद्भागवते महापुराणे
श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्यख्यायां नवमस्कन्धे द्वितीयोऽध्याय ॥२॥

**वीर०** तृणबिन्दोस्सुतान्निर्दिशति - **विशाल** इति। तत्र विशालाख्यो राजा वंशवर्धनो वैशालीं पुरीं निर्ममे ॥३३॥

तस्य विशालस्य सुतो हेमचन्द्र·, तस्य हेमचन्द्रस्याऽऽत्मजो धूम्राक्ष·, तत्सुतो धूम्राक्षस्य सुतस्तु सहदेव , सहदेवस्य पुत्रस्तु कृशाश्व· ॥३४॥

कृशाश्वात् सेमदत्त पुत्रोऽभवत्, तस्य वृत्तमाह - यस्सोमदत्तोऽश्वमेधैरिडस्पतिं इडाहोमाराध्यं परमपुरुषम् इडा पृथिवी, तदुपलक्षितजगत्पतिमिति वा। पारस्करादित्वात्साधु। आराध्य योगेश्वरै प्रार्थनीयां गतिंमवाप मुक्तोऽभवदित्यर्थ ॥३५॥

सोमदत्तात्सुमति [3]उद्बभूव, तत्सुत सुमतिसुतो जनमेजय। य एते उक्ता वैशालभूपाला विशालान्वये जाता तृणबिन्दो कूटस्थस्य यशोधरा· कीर्तिवर्धना। एते वैशालभूपाला इत्यनेन तद्वंशजा अन्येऽपि अगण्यास्सन्तीत्यभिप्रेतम् ॥३६॥

इति श्रीमद्भागवते नवमस्कन्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां द्वितीयोऽध्याय ॥२॥

**विज०** इडस्पतिं अन्नपतिं वाक्पतिं वा। ॥३३-३५॥

वैशालभूपाला विशालवशे जाता भूपाला ॥३६॥

इति श्रीमद्भागवते महापुराणे पारमहंस्या संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
नवमस्कन्धे द्वितीयोऽध्याय ॥२॥

---

1--1 H V omit 2-2 A B J सहदेवज देवजेनसहित 3 W omits उद्बभूव

# तृतीयोऽध्यायः

## श्रीशुक उवाच

शर्यातिर्मानवो[1] राजा ब्रह्मिष्ठस्[2]स बभूव ह ।
यो वा ह्य[3]ङ्गिरसां सत्रे द्वितीय[4]महरूचिवान् ॥१॥

सुकन्या नाम तस्याऽऽसीत्कन्या कमललोचना ।
तया सार्धं वनगतो ह्यगमच्च्यवनाश्रमम् ॥२॥

सा सखीभिः परिवृता विचिन्वन्[5]त्यङ्घ्रिपान्वने ।
वल्मीकरन्ध्रे ददृशे खद्योते इव ज्योतिषी ॥३॥

[6]ते दैवचोदिता बाला ज्योतिषी कण्टकेन [7]वै ।
अविध्यन्मुग्धभावेन ; सुस्रावाऽसृक् ततो बहु ॥४॥

शकृन्मूत्रनिरोधोऽभूत्सैनिकानाञ्च तत्क्षणात् ।
राजर्षि[8]स्तानुपालक्ष्य [9]पुरुषान्विस्मितोऽब्रवीत् ॥५॥

अप्यभद्रं न युष्माभिर्भार्गवस्य विचेष्टितम् ।
व्यक्तं केनापि नस्तस्य कृतमाश्रमदूषणम् ॥६॥

सुकन्या प्राह पितरं भीता किञ्चित्कृतं मया ।
[10]द्वे ज्योतिषी अजानन्त्या निर्भिन्ने कण्टकेन [11]ते॥७॥

दुहितुस्तद्वचः श्रुत्वा शर्यातिर्जातसाध्वसः ।
मुनिं प्रसादयामास वल्मीकान्तर्हितं शनैः । ॥८॥

### श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

तृतीये मनुपुत्रस्य शर्यातेः कीर्त्यतेऽन्वयः । यत्र सौकन्यमाख्यानं रैवतश्च महाद्भुतम् ॥

**शर्यातिरिति** । ब्रह्मिष्ठो वेदार्थतत्त्वज्ञ । तदेवाह - यो वा इति । द्वितीयमह द्वितीयेऽह्नि क्रियमाणं कर्म ऊचिवानुवाच तस्य वंशं "उत्तानबर्हिरानर्त" (भाग. 9-3-27 ) इत्यादिना वक्ष्यति ॥१॥

---

1 M Ma राजन् 2 M Ma स्सम्ब० 3 A B G J M Ma T अ० 4 A.B G J T ० ह ऊ० , M Ma ०हरध्वगात् 5 A B G J T ०त्य० 6 M Ma दैवेन 7 M Ma सा 8 A B G J M Ma T ०स्तमु० 9 M Ma ०भ्य 10 H V द्विज्यो० 11 A B G J T वै

आदौ तावत्तत्कन्यावृत्तान्तमाह - **सुकन्या नामेत्यदिना** ॥२-५॥

**अपीति**। भार्गवस्य च्यवनस्य। अभद्रमपराध· ॥६,८॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

दिष्टवंशस्यऽतिविपुलत्वात् साकल्येन वक्तुमशक्यतामभिप्रेत्य अथ शर्यातिर्मानवस्य चरित्रं वंशञ्चाह तृतीयेन। मनो· पुत्रः शर्यातिसंज्ञको राजा ब्रह्मिष्ठः वेदार्थनिष्ठो बभूव। तदेवाह - यो वै शर्यातिरङ्गिरसां सत्रे आङ्गिरसकर्तृके [1]सत्रे द्वितीयेऽह्नि क्रियमाणं कर्म ऊचिवान्, श्रौतेऽतीव कुशल इति भावः ॥१॥

तस्य शर्याते· कमले इव लोचने यस्यास्सा कन्या **सुकन्येति** प्रसिद्धा सम्बभूव। उत्तानबर्हिरादय पुत्रा वक्ष्यन्ते, तावत्कन्यावृत्तान्तमाह स कदाचित्तया सह वनङ्गतः। तत्र च्यवनस्य ऋषेराश्रममगमत् ॥२॥

सा सुकन्या सखीभि· परिवृता वने अङ्घ्रिपान् द्रुमा न्विचिन्वन्ती वल्मीकबिले खद्योते इव स्थिते ज्योतिषी ददर्श ॥३॥

बाला सुकन्या चोदिता, सखीभिरिति शेषः। मुग्धभावेन मौग्ध्येन च ते ज्योतिषी कण्टकेनाऽविध्यत् अताडयत्। ततो वल्मीकबिलयोस्सकाशात् बहु रुधिरं सुस्राव ॥४॥

तस्मिन्नेव क्षणे सैनिकानां मलमूत्रयोर्निरोधो बभूव, तदा तान् निरुद्धशकृन्मूत्रान् सैनिकानालक्ष्य ज्ञात्वा राजर्षि· शर्यातिः विस्मितः स्वपुरुषानब्रवीत्॥ ५॥

उक्तिमेवाह - **अपीति**। युष्माभिर्भार्गवस्य च्यवनस्य अभद्रमपराध· विचेष्टितमपि। अपिशब्दः प्रश्नद्योतकः, अपराध· कृत· किमित्यर्थ·। नोऽस्माकं सम्बन्धिना केनाऽपि प्राणिना आश्रमदूषणं व्यक्तं कृतं नूनं कृतं, अन्यथैवमुपद्रवो न स्यादिति भाव· ॥६॥

एवं शर्यातौ पृच्छति सति भीता सती सुकन्या पितरं प्राह - किं किञ्चिन्मया अभद्रं कृतमिति। किं तदभद्रम् ?. इत्य[2]त्राऽऽह द्वे इति। ते वल्मीकरन्ध्रयोर्दृष्टे द्वे ज्योतिषी अजानन्त्या इमे वल्मीकान्तर्हितस्य ऋषे· शरीरैकभूते इत्येवमजानन्त्या मया कर्त्र्या कण्टकेन करणेन निर्भिन्ने ॥७॥

इतीदं दुहितुर्वचः श्रुत्वा शर्याति जातं साध्वसं भयं यस्य स वल्मीकान्तर्हितं मुनिं च्यवनं शनै· प्रसादयामास स्तोत्रादिभिः प्रसन्नमकरोत् ॥७॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

ब्रह्मिष्ट· ब्राह्मणनिष्ठ· वेदनिष्ठो वा। तत्फलमाह-**यो वा इति**। द्वितीयेऽह्नि यो मन्त्रोऽध्येतव्य सत्रकल्पोक्तफलसिद्धये तं मन्त्रमध्यगादित्ययमर्थो द्वितीयमहरध्यगादित्युच्यते ॥१॥

---

1 A B T omit सत्रे 2 ABT ०त आह

तस्य शर्यातेः ॥२॥

विचिन्वन्ती मृगयन्ती वल्मीकरन्ध्रे वल्मीकबिले खद्योते खद्योतरूपे, खे एव द्योतत इति खद्योतः ॥३॥

सा सुकन्या मुग्धभावेन अज्ञातवस्तुस्वरूपतया बालभावत्वेन वा कण्टकेन कण्टकाग्रेण ज्योतिषी ज्योतिराश्रये द्रव्ये चक्षुषी इति यावत् । असृक् रुधिरं ततः विद्धचक्षुषोः ॥४॥

सैनिकानां राजसेवकानां, निरोध स्तम्भनम् ॥५॥

युष्माभिर्भार्गवस्य अभद्रममङ्गल विचेष्टित किमपि कृतमेव, न तत्र संशय इत्याह व्यक्तमिति। नो मध्ये केनाऽपि पुरुषेण तस्य भार्गवस्याऽऽश्रमदूषणं व्यक्तम् कृतम्, अत इदं सेनाशकृन्मूत्रस्तम्भनं भार्गवस्य विचेष्टितमिति व्यक्तमभूदिति पुनरावृत्त्या योजनीयम् ॥६॥

ते द्वे ज्योतिषी तत्त्वमजानन्त्या मया कण्टकेन निर्भिन्ने इत्यन्वय ॥७,८॥

तदभिप्रायमाज्ञाय प्रादाद्दुहितरं मुनेः ।
कृच्छ्रान्मुक्त[1]स्तमामन्त्र्य पुरं[2] प्रायात्सहानुगः ॥९॥

सुकन्या च्यवनं प्राप्य पतिं परमकोपनम् ।
प्रीणयामास चित्तज्ञा ह्य[3]प्रमत्तानुवृत्तिभिः ॥१०॥

कस्यचित्त्वथ कालस्य नासत्यावाश्रमं[4] गतौ ।
[5]स पूजयित्वा प्रोवाच वयो मे दत्तमीश्वरौ ॥११॥

ग्रहं ग्रहीष्ये सोमस्य यज्ञे वामप्यसोमपो[6]ः ।
क्रियतां मे वयो रूपं प्रमदानां यथे[7]प्सितम् ॥१२॥

बाढमित्यूचतुर्विप्रमभिनन्द्य भिषक्तमौ ।
निमज्जतां भवानस्मिन् ह्रदे सिद्धविनिर्मिते ॥१३॥

इत्यु[8]क्तो जरया ग्रस्तदे[9]हो धमनिसन्ततः ।
ह्रदं प्रवेशितोऽश्विभ्या [10]वलीपलितविक्रि[10]यः ॥१४॥

पुरुषास्त्रय उत्तस्थुरपीच्या वनिताप्रियाः ।
[11]पद्मस्रजः कुण्डलिनस्तुल्यरूपास्सुवाससः ॥१५॥

1 HV ०न्मुग्धेयमा० 2 ABGJT ०माहित ।, 3 A B G J T अ० 4 A B G J T ०मागतौ 5 A B G J M Ma T तौ 6 M Ma ०यो 7 A B G J M Ma ०दी०
8 A B G J T ०क्त्वा० 9 H V देहोऽथमुनिसत्तम । 10--10 A B G J T वलीपलित विप्रिय , M Ma स्वयश्चामद्यता ह्रदे 11 M Ma रुक्म०

**तान्निरीक्ष्य वरारोहा सरूपान्सूर्यवर्चसः।**
**अजानती पतिं साध्वी अश्विनौ[1] शरणं ययौ ॥१६॥**

**श्रीध० तदिति।** मुग्धेयं मम कन्या क्षन्तव्यं त्वयेत्युच्यमाने कति वर्षाण्यस्या , विवाह कृतो न वा इत्यादिवाक्यै स्तदभिप्रायं[2] तस्याभिप्रायं[2] ज्ञात्वा[3] मुनेः मुनये[3] तां दुहितरं प्रादात् ॥९,१०॥

**कस्येति।** हे ईश्वरौ सद्वैद्यौ युवां मह्यं वयस्तारुण्यं दत्तं सम्पादयतम् ॥११॥

**ग्रहमिति।** असोमपो· सोमपानरहितयोरपि वां युवयो सोमस्य ग्रहं सोमपूर्णं पात्रं ग्रहीष्ये दास्यामीति। युवां सोमेन यक्ष्ये इत्यर्थ । "ऐन्द्रवायवं गृह्णाति" इत्यादिषु द्र०[4]यस्य देवतासम्बन्धानुपपत्त्या गृह्णतेर्यागपर्यवसायित्वात् ॥१२॥

**बाढमिति।** बाढ मित्यभिनन्द्य भवानस्मिन्निमज्जताम् इत्यूचतु ॥१३॥

**इतीति।** ह्रदं प्रवेशित । तावपि तमपि वृद्धं गृहीत्वा प्रविष्टावित्यर्थ ॥१४.१५॥

**तानिति।** अश्विनौ शरण ययौ, युवां पृथक् स्थित्वा मत्पतिं दर्शयतमिति प्रार्थयमासेत्यर्थ ॥१६॥

**वीर०** ततस्तस्य च्यवनस्याभिप्रायं मुग्धेयं मम[5] कन्या, त्वया क्षन्तव्यमित्युक्ते सति कति वर्षाण्यस्या ? विवाह कृतो न वा? इत्यादितद्वाक्यै तदभिप्रायं ज्ञात्वा दुहितरं मुने च्यवनस्य प्रादात्। तत कृच्छात् भविष्यद्दुहितृविश्लेष निमित्तात् क्लेशान्मुक्त· "अर्थो हि कन्या परकीय एव" इत्यादिन्यायानुसन्धानेन मुक्त , तं च्यवनमामन्त्र्य पृष्ट्वा सानुग· पुरीं ययौ ॥९॥

तत· सुकन्या परममधिकं कुप्यतीति परमकोपनस्तम् । "नन्द्यादित्वात्" (अष्टा. 3-1-134 ) कर्तरि ल्यु । **च्यवनं** पतिं प्राप्य तदभिप्रायज्ञा सावधानचित्ता सती अनुवृत्तिभि· प्रीणयामास प्रीतिमकरोत् ॥१०॥

अथ तत कस्यचित्कालस्य कस्मिंश्चित्काले नासत्यावश्विनौ स्वाश्रमं प्रति गतौ सम्यक्पूजयित्वा च्यवन प्राह। तदेवाऽऽह 'वय' इत्यादिना 'बाढ' मित्यत· प्राक्तनेन ग्रन्थेन हे ईश्वरौ। युवां मे जरया ग्रस्ताय मह्यं वयस्तारुण्यं दत्तं यच्छताम् "डुदाञ् दाने" इत्यस्य लोण्म·· पपुरुषद्विवचनम् । यच्छादेशस्तु णित एव तद्विधौ दाणिति णितो निर्देशात् ॥११॥

तव वय.प्रदानेन आवयो कस्त्वत्कृत उपकार·? इत्याशङ्कां निराकुर्वन्नाऽऽह - **ग्रहमिति।** यज्ञे असोमपो सोमपानरहितयो· अनेन "आश्विनौ वै दैवानामसोमपावास्ताम्" इति श्रुत्यर्थ उक्त । वां युवयो सोमस्य ग्रहं ग्रहीष्ये सोमपूर्णं पात्र दास्यामि, युवां सोमेन यक्ष्यामीत्यर्थः। "ऐन्द्रवायवं गृह्णाति" इत्यादिषु द्रव्यद्रव्यदेवता सम्बन्धानुपपत्त्या

---

1 H V ह्य० 2--2 ABJ omit 3--3 ABT तस्मै 4 A B J ०व्यदे० 5 A B T omit मम

गृह्णाते र्यागपर्यवसायित्वात्। अतो मम वयस्तारुण्यं स्त्रीणां यदीप्सितं तादृशं रूपं सौन्दर्यञ्च क्रियताम् युवाभ्यां सम्पाद्यताम् ॥१२॥

इत्थं तद्वच आकर्ण्य स्ववैद्यावश्वनौ अभिनन्द्य विप्रं च्यवनं बाढमित्यूचतुः अङ्गीकृत्योचतुरित्यर्थः। उक्तिमेवाऽऽह निमज्जतामिति। सिद्धैर्विनिर्मितेऽस्मिन् ह्रदे भवान्[1] निमज्जतां निमग्नो भवतु ॥१३॥

इतीत्थमुक्तश्च्यवनो जरया ग्रस्तदेहः अत एव धमनीसन्तत धमनीभिर्नाडीभि· देहोपरिदृश्यमानाभिः व्याप्तः, वलिभि **पलितेन** च उपलक्ष्यमाणो देहो यस्य स·, अश्विभ्यां [2]ह्रदं प्रवेशित·। तावपि तमतिवृद्धं गृहीत्वा प्रविष्टावित्यर्थ· ॥१४॥

ततस्ततो ह्रदात् त्रय· पुरुष अपीच्या· कमनीया प्रमदानां स्त्रीणां प्रिया , पद्मानां स्रक् येषां, कुण्डलानि येषां सन्तीति तथा शोभनानि वासांसि येषां ते [3]तुल्यरूपा· [4]समानरूपा· परस्परमविभजनीयरूपा· उत्तस्थु· ॥१५॥

सूर्यस्येव वर्चो येषां तान् समानरूपानुत्थितान् त्रीन् पुरुषानवलोक्य तेषां मध्ये स्वपतिमजानती सुकन्या साध्वी, हेतुगर्भमिदम् पतिव्रतत्वादित्यर्थ·। अश्विनौ शरणं ययौ। युवां पृथक् स्थित्वा मम पतिं दर्शयतमिति प्रार्थयामासेत्यर्थः ॥१६॥

**विज०** तस्य मुने सुकन्यादानलक्षणमभिप्रायं ज्ञात्वा कृच्छ्रान्मुक्त· सुकन्यामुनिभ्यामिति शेष· ॥९॥

परमकोपनं अत्यन्तकोपशीलं भोजनसमयमन्तरेण अन्यसमयं वृथा न मुञ्चतीत्यभिप्रायेण 'चित्तज्ञा अप्रमत्तेति' सन्ध्यभाव इति ज्ञायते ॥१०॥

कस्यचित्कालस्य समागमे । दत्तं, युवामिति शेष ॥११॥

तव वयोदानेनाऽऽवयो किं फलमिति तत्राऽऽह - ग्रहमिति। ग्रहमाहुतिविशेषभाग्मसो[5]मयो· सोमपानशून्ययो रपि ॥१२॥

भिषक्तमौ वैद्यश्रेष्ठौ ॥१३॥

धमनीभिस्सिराभि· व्याप्तो, देह इति शेष·। स्वयमश्विनौ च ॥१४॥

अपीच्या· षोडशवर्षप्राया ॥१५॥

वरारोहा योषित्, सरूपान् योग्यरूपान् ॥१६॥

**दर्शयित्वा पतिं तस्यै पातिव्रत्येन तोषितौ।**
**ऋषिमामन्त्र्य ययतुः [6]स्तूयमानौ त्रिविष्टपम् ॥१७॥**

---

1 AT omits निमज्जता 2 A B T हृदे 3 ABT omit तुल्यरूपा 4 W omits समानरूपा 5 AB पो 6 ABGJMMaT विमानेन

**यक्ष्यमाणोऽथशर्यातिश्च्यवनस्याऽऽश्रमं गतः ।**
**ददर्श दुहितुः पार्श्वे पुरुषं सूर्यवर्चसम् ॥१८॥**

**राजा दुहितरं प्राह कृतपादाभिवन्दनाम् ।**
**आशिषो[1] न प्रयुञ्जानो नातिहृष्ट[2]मना इव ॥१९॥**

**[3-]शर्यातिरुवाच[-3]**

**चिकीर्षितं ते किमिदं पतिस्त्वया प्र[4]लम्भितो लोकनमस्कृतो मुनिः ।**
**[5]या त्वं जराग्रस्तमसत्यसम्मतं विहाय जारं भजसेऽमुमध्वगम् ॥२०॥**

**कथं मतिस्तेऽवगताऽन्यथा सतां [6]कुलप्रसूते कुलदूषणन्त्विदम् ।**
**बिभर्षि जारं यदपत्रपाकुलं पितुश्च भर्तुश्च नयस्यधस्तमः । ॥२१॥**

**एवं ब्रुवाणं पितरं स्मयमाना शुचिस्मिता ।**
**उवाच तात जामाता तवै[7]व भृगुनन्दनः ॥२२॥**

**शशंस पित्रे तत्सर्वं वयोरूपाभिलम्भनम् ।**
**विस्मितः परम[8]प्रीतस्तनयां परिषस्वजे ॥२३॥**

**सोमेना[9-]याजयद्वीरं[-9] ग्रहं सोमस्य चाऽग्रहीत् ।**
**[10]असामपोरप्यश्विनोश्च्यवनः स्वेन तेजसा ॥२४॥**

**श्रीध० चिकीर्षितमिति** । प्रलम्भितो वञ्चितः । हे असति असम्मतं अनभीष्टम् ॥१८-२०॥

**कथमिति** । हे सतां कुलप्रसूते[11] तव मतिरन्यथा तद्विपर्ययेण कथमवगताऽवसन्नाऽध्यवसितेति वा। तदेवाह - कुलदूषणन्त्विदमित्यादि ॥२१-२३॥

[12]**सोमेनेति** । वीरं शर्यातिं "ग्रहं ग्रहीष्ये सोमस्य" (भाग.9-3-12)इत्युक्तप्रकारेण सोमस्य ग्रहं अग्रहीत्[-12]॥२४॥

**वीर०** ततोऽश्विनौ तत्पातिव्रत्येन तोषितौ तस्यै सुकन्यायै पतिं दर्शयित्वा ऋषिमापृच्छ्य तेन स्तूयमानौ त्रिविष्टपं दिवं ययतुः ॥१७॥

---

1 A B G J M Ma T ०षश्चाऽप्र० 2 ABGJMMaT प्रीत 3--3 ABGJMMaT omits 4 W प्रलोभित 5 A B G J T यत् त्व 6 M Ma मार्गन्त्वियमेत्कृ
7 ABGJMMaT ०ष 8 M Ma ०म 9--9 ABGJMMaT ०न भाजयन्वीर 10 M Ma ०यो० 11 H V omit तव 12--12 A B T omit

अथ तत कदाचित् , यक्ष्यमाणो यागं करिष्यमाण शर्याति च्यवनस्य जामातुराश्रमं गतः तत्र दुहितुः पार्श्वे सूर्य वर्चस पुरुषं ददर्श ॥१८॥

तदा कृतं पादयोरभिवन्दनं यया तां दुहितरं राजा शर्याति प्राह - कथम्भूत·? आशिषः अकुर्वन्नेव नातीव प्रीतं मनो यस्य तादृशः तद्वत्स्थितः[1] ॥१९॥

उक्तिमेवाऽऽह - **चिकीर्षितमित्यादिना**। ते त्वया किमिदं चिकीर्षितं किमिदं कृतमित्यर्थ । सन्नर्थस्त्वविवक्षितः। न किञ्चिदकृत्यं मया कृतमित्यत आह लोकनमस्कृतो मुनि च्यवन· तव पतिस्त्वया प्रलम्भित·[2] वञ्चित , इदमेवाऽकृत्यं कृतमिति भाव·। प्रलोभनं कथं ज्ञातमित्यत्राऽऽह - हे असति ! या त्वं जराग्रस्तं अत एवाऽसम्मतं अनभीष्टं पतिं विहाय कश्चिदमुं पार्श्ववर्तिनमध्वग पान्थं जारं भजसे अनुवर्तसे[3] असौ न तव भर्ता, जराग्रस्तस्यैव त्वद्भर्तुर्मया दृष्टत्वादिति भावः ॥२०॥

हे सतां कुलप्रसूते । ते तव मति· अन्यथा तद्विपर्ययेण कथमवगता अवसन्ना अध्यवसितेति वा। तदेवाऽऽह कुलदूषणन्त्विदमित्यादि। अपत्रपा निर्लज्जा सती जारं बिभर्षि अनुवर्तसे इति इदं कुलदूषणं कृतम्। किञ्च पितु पत्यु भर्तुश्च कुल अधस्तमो नयसि [4]अधस्तन तम प्रायं नरकं नयसि[-4] ॥२१॥

इत्येवं ब्रुवाणं पितर शुचिस्मिता सुकन्या स्मयमाना सत्युवाच । उक्तिमेवाऽऽह हे तात! एष मत्पार्श्ववर्ती तव जामाता भृगुनन्दन च्यवन एव ॥२२॥

कथं तर्हि तेन प्रवयस्केन एवंविधवयोरूपाधिक प्राप्तमिति पृच्छते पित्रे तद्वयोरूपादिप्राप्त्यादिकं सर्वं शशंस कथयामास। ततो विस्मित शर्यातिर्नितरा प्रीतस्तनयां परिषस्वजे ॥२३॥

ततश्च्यवनो वीरं शर्यातिं सोमेन द्रव्येणाऽयाजयत्, सोमयागं कारितवानित्यर्थः। तस्मिन् यागे च्यवन स्वतेजसा स्वतपो बलरूपेण[5] सोमपानरहितयोरप्यश्विनो सोमस्य ग्रहमग्रहीत् सोमग्रहेण अश्विनौ राज्ञा याजयामासेत्यर्थ· ॥२४॥

**विज०** हे असति! दुर्वृत्ते ! जरया ग्रस्तत्वादसम्मत अध्वगं पान्थम् ॥१७-२०॥

अम्ब! पुत्रिके! इयं मतिरन्यथा गता। अन्यथोक्तं विवृणोति असतामिति असतां मार्गं गतेत्कत्यर्थः। इदं त्वत्कर्म मत्कुलदूषणन्त्वेव। किं तत्कर्मेति तत्राऽऽह बिभर्षीति। निर्लज्जा भूत्वा जारं जरयत्युभयकुलमित्युपपतिं बिभर्षि यत्तस्मात् तदेव स्पष्टयति कुलमिति। नयसि प्रापयसि ॥२१-२३॥

सोमेन हविषा असोमप्रो[6] सेमपानरहितयो ॥२४॥

---

1 W स्व स्थित 2 W प्रलोभित 3 ABT omit अनुवर्तसे 4--4 A omits ०म 5 ABT बलेन 6 M Ma ०यो०

हन्तुं तमाददे[1] वज्रं[2] शतमन्यु रमर्षितः ।
सवज्रं स्तम्भयामास भुजमिन्द्रस्य भार्गवः ॥२५॥

अन्वजानंस्ततस्सर्वे ग्रहं सोमस्य चाश्विनो ।:
भिषजाविति यत्पूर्वं सोमाहुत्यां[3] बहिष्कृतौ ॥२६॥

उत्तानबर्हिरानर्तो भूरिषेण इति त्रयः ।
शर्यातेरभवन्पुत्रा आनर्ताद्रेवतोऽभवत् ॥२७॥

सोऽन्तः समुद्रे नगरीं विनिर्माय कुशस्थलीम् ।
आस्थितोऽभुङ्क्त विषयानानर्तादीनरिन्दमः[4]॥ २८॥

तस्य पुत्रशतं जज्ञे ककुद्मि ज्येष्ठमुत्तमम् ।
[5]रैवतो रेवतीं कन्यां[6] समादाय दिवङ्गतः[-6] ॥२९॥

[7]पुत्र्या वरं परिप्रष्टुं ब्रह्मलोकमपावृतम् ।
आवर्तमाने गान्धर्वे स्थितोऽलब्धक्षणःक्षणम् ॥३०॥

तदन्त[8] आद्यमानम्य[9] स्वाभिप्रायं न्यवेदयत् ।
तच्छ्रुत्वा भगवान्ब्रह्मा प्रहस्य तमुवाच ह ॥३१॥

अहो राजन् निरुद्धास्ते कालेन हृदि ये कृताः ।
तत्पुत्रपौत्रनप्तृणां गोत्राणि च न शृण्महे ॥३२॥

**श्रीध०** [10-]हन्तुमिति। सद्य स्तत्क्षणमेव मन्यु· यस्य स इन्द्र[10] ॥२५-२७॥

**स इति**। विषयान् देशान्[11] आनर्तादीन् अभुङ्क्त अपालयत् ॥२८॥

**तस्येति**। ककुद्मी ज्येष्ठो यस्मिंस्तत्[12-] पुत्रशतम्[12] विभुं ब्रह्माणम् ॥२९॥

**पुत्र्या इति**। न लब्ध क्षणोऽवसरो येन स ॥३०॥

**तदन्त इति**। आद्यं ब्रह्माणम् ॥३१॥

**अहो इति** । ते त्वया हृदि ये कृता ते सर्वे कालेन निरुद्धा संहता. ॥३२॥

---

1 H V ०धे 2 A B G J M Ma t सद्यो० 3 A,B,G,J M Ma,T ०त्य० । 4 A B G J M Ma T ०मा 5 A B G J M Ma T ककुद्मी 6--6 A B G J M Ma T स्वामादाय विभुक्त । 7 A B G J T कन्या० 8 M Ma ०न्ते विभु 9 H V W ०र्च्य 10--10 H V omit 11 H V omit आनर्तादीन् 12--12 B H J V omit

तं सोमेन अश्विनौ यजन्तं शर्यातिं हन्तुममर्षित क्रुद्धः शतमन्युरिन्द्रो वज्रमाददे। तथा भार्गवश्च्यवनः सवज्रं वज्रेण सहितमिन्द्रस्य भुजं स्तम्भयामास प्रतिबबन्ध ॥२५॥

यावश्विनौ भिषजाविति बुद्ध्या पूर्वं सोमाहुत्यां बहिष्कृतौ सर्वैः यष्टृभिः तयोरश्विनोः सोमस्य ग्रहं ततः प्रभृति सर्वे अन्वजानन् अनुज्ञातवन्तः ॥२६॥

एवं शर्यातेः कन्याया वृत्तान्तमभिधाय, अथ पुत्रपौत्रादिपरम्परां तद्वृत्तान्तश्चाऽऽह - उत्तानबर्हिरित्यादिना। उत्तानबर्हि रादय स्त्रयः शर्यातेः पुत्रास्सम्बभूवुः। तत्र आनर्ताद्रैवतः सम्बभूव ॥२७॥

स च समुद्रमध्ये कुशस्थलीसंज्ञां नगरीं निर्माय, तस्या एवाऽधुना द्वारवतीति व्यवहारः, तस्यामधिवसन् आनर्तादीन् विषयान् देशान् अभुङ्क्त पालयामास। अरिन्दमः विरोधिनो निरस्यन् अभुङ्क्तेत्यर्थः ॥२८॥

ककुद्मीति प्रसिद्धो ज्येष्ठो यस्य तत्पुत्राणां शतं तस्य रैवतस्य सम्बभूव, एका कन्या च जज्ञे इत्यर्थतो द्रष्टव्यम्। स रैवतो रेवत्याख्यां स्वां कन्यामादाय पुत्र्याः वरं भर्तारं परिप्रष्टुं दिवं ययौ। किमिन्द्रलोकं गतः? नेत्याह, ब्रह्मलोकमपावृतं स्वस्य गतिप्रतिबन्धकरहितं सत्यलोकं ययावित्यर्थः ॥२९॥

तत्र ब्रह्मणस्सन्निधौ गान्धर्वे गाने आवर्तमाने समन्तात्प्रवर्तमाने सति अलब्धः न प्राप्तः क्षणः[1] प्रश्नावसरो येन स रैवतः क्षणमात्रं तूष्णीं स्थितः। तदन्ते गानावसाने आद्यं ब्रह्माणमानम्य स्वाभिप्रायं को वाऽस्याः पतिरित्येवंरूपं न्यवेदयत् व्यजिज्ञपत्। तद्रैवतस्य वचः श्रुत्वा प्रहस्य तं रैवतं ब्रह्मोवाच ॥३०,३१॥

तदेवाऽऽह - अहो इत्यादिना इत्यादिष्ट इत्यतः प्राक्तनेन ग्रन्थेन। **अहो** इति प्रश्नानुपपत्तिकृतविस्मयद्योतकः। आगमनवेलायां त्वया ये जना हृदि कृता हृदये कृता इष्टाः, मनसा चिन्तिताश्च ते सर्वे कालेन चिरं निरुद्धा उपसंहृताः। तदुपसंहारानन्तरमपि महान्कालो व्यतीत इत्यर्थः। तेषां त्वया हृदि कृतानां ये पुत्रादयस्तेषां गोत्राणि वंशांश्चाऽधुना न शृण्महे। मम क्षणमात्रकालेन तत्र महान्कालो व्यतीत इति भावः ॥३२॥

**विज०** तं च्यवनं सद्यो मन्यु तदानीं जातक्रोधः सवज्रं भुजम् ॥२५॥

अन्वजानन् अनुज्ञातवन्तः, पूर्वं सोमग्रहाभाव, कथं स्यात्? इति तत्राऽऽह - भिषजाविति॥ ॥२६-२७॥

कुशस्थलीं द्वारवतीम् ॥२८॥

विभुं ब्रह्माणम् ॥२९॥

अपावृतं प्रकाशितम्। गान्धर्वे गाने अलब्धक्षणः अलब्धावसरः ॥३०॥

तदन्ते गीतावसाने ॥३१॥

---

1 A B T omits क्षण

ये हृदिकृतास्ते पुरुषाः कालेन निरुद्धाः मृताः, न केवलं त एव न सन्ति, तत्पुत्रादयोऽपि न सन्तीत्याह-तत्पुत्रेति। न शृण्महे न शृणुमः ॥३२॥

**मुहूर्तं शृण्वतोऽश्राव्यं प्रतियातस्य तेऽनघ।**
**[1-]कालोऽतियातस्त्रिणव[1]चतुर्युगविकल्पितः।**
**तद्गच्छ देवदेवांशो बलदेवो महाबलः ॥३३॥**

**कन्यारत्नमिदं राजन् नररत्नाय देहि [2]भोः।**
**भुवो भारावतारार्थो[3] भगवान्भूतभावनः ॥३४॥**

**अवतीर्णो निजांशेन पुण्यश्रवणकीर्तनः।**
**इत्यादिष्टोऽभिवन्द्याऽजं नृपः स्वपुरमागतः॥**
**[4]त्यक्तां पुण्यजनत्रासाद्भ्रातृभिर्दिक्ष्[5]ववस्थितैः॥३५॥**

**सुतां दत्त्वाऽनवद्याङ्गीं बलाय बलशालिने।**
**बदर्याख्यं [6]ययौ राजा तप्तुं नारायणाश्रमम् ॥ ३६॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्या अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्याया पारमहंस्यां संहितायां
नवमस्कन्धे तृतीयोऽध्यायः ॥३॥

**श्रीध० मुहूर्तमिति।** त्रिणवसप्तविंशतिः, चतुर्युगाणि तैर्विकल्पितो विभक्त। यो देवदेवस्यांशोऽस्ति तस्मै नररत्नाय देहि ॥३॥

**कन्येति।** तदेवाऽऽह - भुव इति ॥३४॥

**त्यक्तामिति।** पुण्यजनत्रासाद्यक्षभयात् पूर्वमेव [7]चिरं [8]पुरं तद्भ्रातृभिः [9]त्यक्ताम् [10-]दिवि अवस्थितैः स्वर्गं गतैः[-10] ॥३५,३६॥

इति श्रीमद्भागवते महापुराणे
श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्यख्यायां नवमस्कन्धे तृतीयोऽध्याय ॥३॥

**वीर०** तत्र कियान् कालो व्यतीत इत्यत्राह - **काल इति।** चतुर्युगविकल्पितः चतुर्युगभेदभिन्नः कालस्त्रिनवः व्यतीयात्।

---

This extra half verse is found in B M Ma Edns only 1--1 A B G J T ०लोऽभियातस्त्रिणव, M Ma लोयातस्त्रिनवभि 2 H M Ma V भा। 3 A B G J M Ma T ०य 4 A B G J T त्यक्त 5 H V ०व्यव 6 A B G J M Ma T गतो 7 H V omit चिर 8 H V omit तत् 9 A B J ०क्तम् 10--10 A B J omit

चतुर्युगानि सप्तविंशतिवारमावृत्तानीत्यर्थः। तर्ह्यधुना कस्मै देयेत्यत आह तदिति। तत्तस्मात्त्वया दृष्टानां जनानामधुना अभावादिदानीं देवदेवस्य विष्णोः योंऽशोऽनन्तो महाबलः स एव बलदेव· बलरामरूपेण यदुष्ववतीर्णो वर्तते ॥३३॥

तस्मै नरदेवाय इदं कन्यारत्नं, हे राजन् देहि। ननु भगवतो निवासशय्यासनादि सर्वविधशेषतैकरसोऽनन्तः तां विहाय कस्माद्यदुष्ववतीर्ण इत्याशङ्कायां भगवानपि भुवो भारापहरणाय तेन सहाऽवतीर्ण इत्याह भुव इति। भगवान् षाड्गुण्यपूर्णो नारायणोऽपि भुवो भारापहाराय[1] प्रयोजनाय स्वांशेन स्वापृथक्सिद्धविशेषणभूतज्ञान[2]शक्ति बलैश्वर्यतेजोगुणजातेन ज्ञानादि गुणजातमजहदेवेत्यर्थः। अवतीर्णः। नन्वेवंविधस्य सङ्कल्पमात्रेणाऽपि भूभारापनोदनसम्भवात्किमवतारेण? इति शङ्कां निराकुर्वन् विशिनष्टि - भूतभावन पुण्यश्रवणकीर्तन इति च। भूतानि साधुभूतानि भावयति त्रायत इति भूतभावनः,[3-] साधुपरित्राणायावतीर्ण इति भावः। पुण्ये श्रवणकीर्तने यस्य स तथा[-3] [4]स्वचेष्टितं शृण्वतां कीर्तयताञ्च पुण्यसम्पादनेनान्त· स्थिरफलरूपब्रह्मानन्द साम्राज्यप्रदानार्थञ्चाऽवतीर्ण इत्यर्थ । इत्थमादिष्टो नियुक्तो नृपो रैवतोऽजं ब्रह्माणं प्रणम्य स्वपुरं कुशस्थलीं ययौ॥ ३४. ३५॥

पुण्यजनत्रासात् यक्षभयात् हेतो· दिक्ष्ववस्थितै [5-]तत्र तत्रावस्थितै[-5]· भ्रातृभिः [6-]ककुद्म्यदि[-6]भिः पूर्वमेव त्यक्तां स्वां कन्यां रेवतीमनवद्याङ्गीं शोभनाङ्गीं बलशालिने बलरामाय दत्त्वा हे राजन् रैवत तपस्तप्तुं[7] तदा बदर्याख्यं नरनारायणाश्रमं ययौ ॥३६॥

इति श्रीमद्भागवते नवमस्कन्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्याया तृतीयोऽध्याय ॥३॥

**विज०** प्रतियातस्याऽत्रागतस्य ते तवाऽश्राव्यं नरस्य श्रोतुमयोग्यं गानं मुहूर्तं मत्वा शृण्वत· कालो यात· अतिक्रान्त इत्यन्वय । कियानिति तत्राऽऽह - त्रिनवेति। त्रिनवभिश्चतुर्युगैः विशिष्टत्वेन कल्पित सप्तविंशतिचतुर्युगभेदभिन्न इत्यर्थः। तर्हि किं करोमि कन्या चावश्यं दातव्या, अत इमां कस्मै दास्यामीति तत्राऽऽह - तदिति ॥३३, ३४॥

पुण्यजनत्रासात् राक्षसभयात् दिक्ष्ववस्थितै भ्रातृभिः त्यक्तां स्वपुरं निजपुरीमागत ॥३५॥

ककुद्मी तु अनवद्याङ्गीं शोभनावयवां सुतां[8]बलशालिने बलाय दत्वा तपस्तप्तुं बदर्याख्यं नारायणाश्रमं ययावित्यन्वय ॥३६॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
नवमस्कन्धे तृतीयोऽध्याय ॥३॥

---

1 A T ०हरणाय 2 A B T omit शक्ति 3--3 W omits 4 A B t omits स्व 5--5 W omits 6--6 A B T omit 7 W omits तदा 8 B M Ma बाहुशा०

# चतुर्थोऽध्यायः

**श्रीशुक उवाच**

नाभागो [1]नभगापत्यं यन्नतद्भ्रातरः[-1] कविम् ।
यविष्ठं व्यभजन् दायं ब्रह्मचारिण[2]मागतम् ॥१॥

भ्रातरोऽभाङ्क्त किं मह्यं भजाम पितरं तव ।
[3-]नाभागस्तु पिता पुत्रं प्राह[3] तं ब्रह्मचारिणम् ।
[4-]त्वां ममार्या[-4] स्तताऽभाङ्[5]क्षुर्मा पुत्रक तदादृथाः ॥२॥

[6]इमे ह्यङ्गिरसः सत्र मासतेऽद्य सुमेधसः ।
षष्टं षष्ठमुपेत्याहः कवे मुह्यन्ति कर्मणि ॥३॥

तांस्त्वं शंसय सूक्ते द्वे वैश्वदेवे महात्मनः ।
ते स्वर्यन्तो धनं [7]सत्रे परिशेषितमात्मनः ॥४॥

[8-]दास्यन्ति तेऽथ[-8] तान्गच्छ तथा स कृतवान् यथा ।
तस्मै दत्वा ययुः स्वर्गं ते सत्र[9]परिशेषितम् ॥५॥

तं कश्चित् स्वीकरिष्यन्तं पुरुषः कृष्णदर्शनः ।
उवाचो[10]त्तरतोऽभ्येत्य ममेदं [11]वास्तुगं वसु ॥६॥

ममेदमृषिभिर्दत्तमिति तर्हि स्म मानवः ।
स्यान्नौ ते पितरि प्रश्नः [12]पृष्टवान् पितरं तथा ॥७॥

यज्ञवास्तुगतं सर्वमुच्छिष्टमृषयः क्वचित् ।
चक्रु[13]र्विभागं रुद्राय स देवः सर्वमर्हति ॥८॥

---

1--1 A B G J T नभगापत्य य तत भ्रा० , MMA न्यस्तत प्राज्ञो य मत्वा भ्रा० 2 M Ma ०माह स । 3--3 A B G J M Ma T omit 4--4 M Ma किं म आर्या , W ममत्वार्या 5 B ०क्ष 6 A B G J T इमे अङ्गि० , M Ma इम अङ्गि० 7 ABGJMMaT सत्र 8--8 B दास्यन्त्यथ ततो ,MMa दास्यन्ते तेऽथ तान् W दास्यन्त्यतोऽद्य तान् 9 H V परिवेष्टितम् , M Ma परिवेषणम् 10 H V चान्तर० 11 A B G J T वास्तुक , M Ma वास्तव 12 M Ma स गत पि 13 M Ma ०र्हिं भा०

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

चतुर्थे मनुपुत्रस्य नभगस्य कथोच्यते।

तत्सूनोश्चाम्बरीषस्य कृत्या प्रतिहता यतः।

नभगस्य वंशमाह - **नाभग** इति। नभगस्याऽपत्यं नाभागः। नाभागादम्बरीषो महाभागवतोऽभूदिति वक्ष्यंस्तद्धेतुत्वेन[1] वंशप्रवर्तकस्य नाभागस्य निष्कपटं चरितं तेन तु श्रीरुद्रप्रसादमाह[2] - ततमित्यादिना। ब्रह्मचारिणं बहुकालं गुरुकुले वसन्तं नैष्ठिकोऽसाविति मत्वा विभागसमये तस्मै भागमप्रकल्प्यैव भ्रातरस्सर्वे[3] दायं व्यभजन्[4] विभज्य गृहीत्वा पश्चात्[5] गुरुकुलादागतं यं भागार्थिनं कविं विद्वासं यविष्ठं प्रति[6] ततं तातं पितरमेव[7] दायं व्यभज न्नित्यर्थ. ॥१॥

एतदेव प्रश्नोत्तराभ्यां दर्शयति। तत्र नाभागः पृच्छति हे भ्रातरः! मह्यं किमभाङ्क्त[8] व्यभजन् कं भागं मदर्थं यूयं प्रकल्पितवन्त ? भ्रातर आहु· -तदा विस्मृतमस्माभिरिदानीं तु तव पितरं[10] भजाम, त्वं पितरं गृहाणेत्यर्थः। स च पितरं गत्वाऽऽह - त्वामिति। तत! हे तात। आर्या· ज्येष्ठा[11] मम त्वा[11] मभाक्षु भर्गं चक्रुः। मदीयो भागस्त्वमित्यर्थः। पाठान्तरे, हे तात! किमिदं[13] मम भाक्षु[14]? 'भजाम पितरं तवे' इत्युक्तवन्त आर्या स्त्वां मह्य किमर्थं ददुरित्यर्थ। पिताऽऽह - हे पुत्रक तत्तैरुक्तं मादृथा· प्रतारणमात्रं तै कृतं, तस्मिन्नाऽऽदरं मा कार्षी·। न ह्यहं दाय इव भागस्य[15] साधनमित्यर्थः ॥२॥

तथाऽपि तैर्भागत्वेन[16] कल्पितोऽहं तव जीवनोपायमुपदेक्ष्यामीत्याह - **इमे** इति सपादाभ्यां द्वाभ्याम्। "अभिप्लव· पूर्वमहर्भवति, पृष्ठ्य·षडहो[17] भवति" इति विहितेषु षडहेष्वावर्त्यमानेषु षष्ठं षष्ठमहः कर्मोपेत्य प्राप्य कर्मणि तदनुष्ठाने सुमेधसोऽपि ते सूक्तविशेषाज्ञानेन मुह्यन्ति। कवे' हे विद्वन्! ॥३॥

**तानिति**। तान्महात्मनोऽपि त्वम् "इदमित्था रौद्रम्" इत्तवित च, "ये यज्ञेन दक्षिणया" इति च वैश्वदेवे द्वे सूक्ते शंसय पाठय तत कर्मणि समाप्ते सति। स्वर्यन्त स्वर्गं गच्छन्त· स्वसत्रे परीशेषितमवशिष्टमात्मना धनं ते[18] तुभ्यं दास्यन्ति। अथ तस्मात्तान् गच्छेति। तथेत्यादि शुकवाक्यम्। यथावत्कृतवान्। सत्त्रपरिशेषितं[19] सत्त्रावाशिष्टं[20] धनम् ॥४,५॥

**तमिति**। पुरुष श्रीरुद दृश्यत इति दर्शनं शरीरं कृष्णं दर्शनं यस्य स·, वास्तुकं यज्ञभूमिगतं वसु धनं ममेत्युवाच ॥६॥

**ममेति**। तर्हि स्म तदैव ममेदमिति मानवो नाभाग उवाच पुनश्च रुद्र उवाच। नौ आवयोरस्मिन्विवादे ते पितिर प्रश्न· स्यादिति। पृष्टवानिति शुकोक्ति ॥७॥

---

1 HV ०वि० 2 HV ०दन० 3 A,B J ०र्वं० 4 A,b J omit व्यभजन् 5- -5 H,V omit 6- -6 ABJ omit 7 A B J omit एव 8 A ०भाक्त 9 A ०जत०, B ०जन्त 10 A B J add वि 11 A B J add मे 12 A B J ०भाक्षु 13 A B J omit मम 14 A B J ०क्षु 15 A,B J भोगसा 16 A,B J दत्तो 17 A b J षडहो 18 A B J omit ते 19 A त्र 20 H V वेष्टित

पृष्टस्य मनोर्वाक्यं यज्ञवास्तुगतमिति। उच्छिष्टमुर्वरितम्। क्वचिदिति दक्षाध्वरे। [1-]"उच्छेषणभागो वै रुद्रः"। भागदेयेनैव रुद्रं निरवदयत[-1] इति श्रुतेश्च। किञ्च स देव ईश्वरः सर्वमप्यर्हति किं पुनर्यज्ञावशिष्टमित्यर्थः॥७॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

अथ नभगस्य मानवस्य वंशं तद्वृतान्तश्चाऽह - **नाभाग** इति। नभगस्य मानवस्यापत्यं नाभागः। अनुशतिकादित्वा दुभयपदवृद्धिः। शिवादित्वादण्। उभयोराकृतिगणत्वादार्षत्वाद्वा। अन्यान्यपत्यानि नभगस्य बभूवुरित्यर्थतो द्रष्टव्यम्। भ्रातरो दायं व्यभजन् इत्युत्तरग्रन्थानुगुण्यात् नाभागस्य वृत्तान्तं वदन् तं विशिनष्टि - **यमित्यादिना**। यं नाभागं यविष्ठं कनीयांसं भ्रातर स्तज्ज्येष्ठः भ्रातरः बहुकालं गुरुकुले वसन्तं पश्चादागतमपि ब्रह्मचारिणं कविं ज्ञानिनं मत्वा दायं व्यभजन् विभागकाले तस्मै भागमप्रकल्प्यैव भ्रातरः[2] स्वं स्वं पित्र्यं[3] वस्तुविभागं कृतवन्त इत्यर्थः॥१॥

ततो भ्रातृन्प्रति नाभाग आह- हे! भ्रातरः मह्यं किमभाक्ष्म व्यभजत मदर्थं कं भागं यूयं प्रकल्पितवन्त इति। ततस्तं भ्रातर आहुः भजाम पितरं तवेति। तदा विस्मृतमस्माभिः। इदानीं न वयं विभागे प्रभवाः। यदि तवापेक्षा तर्हि तव पितरं "जीवन्पुत्रेभ्यो दायं विभजेत्" इत्युक्तविधं विभाजकं भजाम प्राप्नुयाम तत्सन्निधिं गच्छामेत्यर्थः। यदि पिता भागं प्रयच्छतेति वक्ष्यति तर्हि दास्याम इति भावः। 'व्रजाम'इति पाठान्तरमप्यस्ति। तथा 'भजायेमे'[4] त्यपि पाठान्तरम्। अस्मिन्पाठे भजाय भाजय पितरमेव भागत्वेन गृहाणेत्यर्थः। ह्रस्वदीर्घयोर्व्यत्यय आर्षः। निवृत्तप्रेषणात् भजेर्णिचि लोण्मध्यमैकवचनम्। ततो नाभागः पितुस्सकाशमेत्य तमुवाच - 'मम त्वार्यास्तत्राभाङ्क्षु' रिति। हे तत तात पितः, ममार्याः ज्येष्ठभ्रातरः अभाङ्क्षुः विभक्तवन्तः, मां विनेति शेषः। मम त्वामेव भागं चक्रु रिति वाऽर्थः। किं मे आर्याः तथा भाङ्क्षुरिति पाठान्तरम्। तदा आर्या ज्येष्ठभ्रातरः किं मे भागं विभक्तवन्त इत्यर्थः। 'किं ममार्यास्तताभाङ्क्षु' रिति पाठेऽप्ययमेवार्थः। ततस्तं पिता नभग आह - 'मा पुत्रक, तदादृथा' इति। हे पुत्रक! तस्मिन् दाये आदरं मा कृथा इत्यर्थः।॥२॥

कथं तर्हि मम जीविकेति पुत्रेण पृष्टः पितोवाच - **इमे** इति 'भजोद्य पितरं तवेति पाठपक्षे' मा पुत्रकेत्यादेरयमर्थः। हे पुत्रक, तत्तैरुक्तं मादृथाः। प्रतारणमात्रं तैः कृतम्। तस्मिन्नाऽदरं माकार्षीः। नह्यहं दाय इव भोगसाधनमित्यर्थः। तथाऽपि तैः र्भागत्वेन काल्पितोऽहं तव जीवनोपायमुपदेक्ष्यामीत्याह - इमे इति। इमे सन्निकृष्टा अङ्गिरसः सुमेधस स्सुबुद्धयोऽधुना सत्रमासते द्वादशाहाख्यं सत्रमनुतिष्ठन्ति। तत्र द्वादशाहे सत्रे षष्ठं षष्ठमहः कर्मप्राप्यतेऽङ्गिरसो मुह्यन्ति, प्रयोगस्य दुरवबोधत्वात् सूक्तविशेषा ज्ञानाच्च मुह्यन्ति इत्यर्थः। षष्ठं षष्ठमुपेत्याह इति द्विर्वचनेन षडहस्य पुनः पुनः प्रयोगोऽपि वैध इति प्रतीयते। अत एव हि पूर्वतन्त्रे

---

1--1 A omits 2 AB omit भ्रातर 3 TW ०त्र्यव० 4 A ०मेत्य०

- "अभ्यासे च तदभ्यासः कर्मणः पुनः प्रयोगात् , आवृत्तिस्तु व्यवाये कालभेदात् स्यात्" इत्यधिकरणद्वये षडहस्य पुनः पुनः प्रयोगमास्थाय मध्वशनस्यावृत्ति· कर्तव्या न वे त्याशङ्क्य कर्मान्तराव्यवहितषडहावृत्तौ न कर्तव्या, गवा मयनादा वभिप्लवादिभि र्व्यपेतावृत्तौ तु कर्तव्येत्युक्तम् । तत्र कर्मणि वैश्वदेवे कर्मणि विश्वदेवताप्रकाशके "इद मित्था रात्रम्" इति च, "ये यज्ञेन दक्षिणया" इति च द्वे सूक्ते तै रङ्गिरोभिरपरिज्ञाते वर्तेते ।।३।।

ते सूक्ते त्वं महात्मनोऽपि तान्प्रति शंसय स्तुवीहि ततः कर्मणि समाप्ते सति स्वर्यन्तः स्वर्गं गच्छतोऽङ्गिरसस्स्वसत्र परिशेषितमवशिष्टमात्मनो धनं तुभ्यं दास्यन्ति। अतोऽद्य तान् गच्छेति। तत· स नाभागो यथा स्वपित्रोक्तं तथैव कृतवान् । तत स्तेऽङ्गिरसः सत्रपरिशेषितं धनं तस्मै नाभागाय दत्त्वा स्वर्गं ययुः।। ४,५।।

ततस्तद्धनं स्वीकरिष्यन्तं तं नाभागं कश्चित्पुरुष आगत्य उत्तरतो दिश आगत्योवाच - पुरुषोऽत्र रुद्रः उत्तरग्रन्थानुण्यात् तं विशिनष्टि। कृष्णदर्शन· दृश्यते इति दर्शनं इति कृष्णं दर्शनं यस्य स· कृष्णदर्शन·। उक्ति मेवाह - ममेदं वास्तुकं वस्त्विति वास्तुकं, यज्ञभूमिगतं यज्ञावशेषितं वसु धनं, मम मदीयम् ।।६।।

इत्येवं रुद्रेणोक्ते सति तर्हि स्म तदैव मानवो नाभागः ऋषिभिरङ्गिरोभिः ममैवेदं धनं दत्तमित्युवाच। ततः पुना रुद्र उवाच 'स्यान्नौ ते पितरि प्रश्न' इति नौ आवयो स्तस्मिन्विवादे ते तव पितरि प्रश्नः स्यात् तव पितैव तर्ह्यस्मिन्विवादपदे प्रष्टव्य इत्यर्थः। ततो नाभाग पितरमेत्य तथा पृष्टवान् ।।७।।

तत[1] पृष्ट पिता तमाह - यज्ञेति। यज्ञभूमिगतमुच्छिष्टं यज्ञावशेषितं सर्वं वसु ऋषय क्वचिद्दक्षाध्वरे रुद्राय भागं चक्रुः । अतस्स[2] एव देवो रुद्रः सर्वं वास्तुकं वस्तु अर्हति तदीयमेव तत्सर्वमित्यर्थः। "उच्छेषणभागो वै रुद्रः" इति श्रुतेरिति भाव ।।८।।

## श्रीविजयध्वजतीर्थकृता पदरत्नावली-

बह्वृच[3]ब्राह्मणप्रसिद्धो नाभागो मनुपुत्र उच्यते। ततस्तस्मात् दिष्टपुत्रादन्यः कथान्तरसूचको वा वेदसिद्धत्वाद्यशसा ततो ०याप्तो वा नाभा नाभानेदिष्ट इत्यन्वयः। ततोन्य[4]नाम्ना ख्यातः वेद इति शेषो वा नाभानेदिष्टं शंसतीत्यादौ प्राज्ञौ मेधावी ज्येष्ठ भ्रतरो ब्रह्मचारिणं विवाहानभिमुखं यविष्ठं कनिष्ठं यं नाभागं कविम् आत्मज्ञानित्वेन अतिकान्तदर्शिनं मत्वा दायं कुलपारम्पर्येण प्राप्तविभागयोग्यं द्रव्यं व्यभजन्यदा कवेर्भागमदत्वा, तदा स कविर्नाभागोऽवगम्यैत्य भ्रातृनाह ।।१।।

हे भ्रातरो मह्यं किमभांक्तेति नाभानेदिष्ट वै मानवं ब्रह्मचर्यं वसन्तं भ्रातरो निरभजन् सोऽब्रवीदेत्य किं मह्यमभांङ्क्तेति

1 AB omit तत 2 AB तत 3 A ब्र 4 M न्न०

ब्राह्मण वाक्यसूचनायाऽभांक्तेति पदप्रयोगः, मम भागं किमर्थं विभक्तवन्तः। मम भागः को वा कल्पित इति वाऽप्राक्षीदिति त एतमब्रुवन् भजान पितरं तवेति, तव पितरं भज अन गच्छ 'अन श्लेष्टायाम्' इति धातुः। यदि तव विभागापेक्षा तर्हि गत्वा तं प्रसाद्य विचारय, वयश्चागात्य पृच्छाम इत्यर्थः। एतमेव निष्ठावन्तं वदितारमित्यब्रुवन् । तस्माद्धाप्येतर्हि पितरं पुत्रा दिष्टावो वदितेत्येवाचक्षत इति च निष्ठावन्तं व्यवस्थागमकं व्यवस्थापकम् अत एवागम्य वदितारं पितरमब्रुवन्नित्यर्थः। यतो नाभागादयो निश्चयार्थं पितरं गत्वा अब्रुवंस्तस्मादेतर्हि अद्यापि पुत्राः पितरं निर्णीय व्यवस्थापक इत्याहुरित्यर्थः। स नाभागो गत्वा भ्रतृभिस्सह पितरमपृच्छत् , किमिति तत्राह - किं म इति। हे तत तात पितः "आर्या ज्येष्ठास्तद्वस्तु अभाङ्क्षुः किमिति पृच्छामि त्वां यदाऽहं प्रोषितस्तदार्यास्त्वां व्यवस्थाप्य मे भागमदत्वा किर्थमभाङ्क्षुरिति वा त्वामन्तरेणाऽभाङ्क्षुरिति त्वां हवाव मह्यं तताऽभाङ्क्षु रिति स पिता प्रत्याह - मेति। हे पुत्रक, तन्मादृथाः, तस्मिन् दायविभागे आदरं मा कार्षीरिति तं पिताऽब्रवी 'न्मा पुत्रक तदादृथा' इति ॥२॥

तर्हि मम जीवनोपायः कः? इति नाभागेन पृष्टः पिता प्रत्याह - **इम** इति। अद्य इमे सुमेधसः शोभनप्रज्ञा अङ्गिरसः सत्र मासते बहुकर्तृके चिरकालीने यज्ञे दीक्षितास्तिष्ठन्ति हे कवे! ते ऋषयः षष्ठं षष्ठमहरुपेत्य तस्मिन्नहनि कर्तव्ये वैश्वदेवे विश्वदैवत्ये कर्मणि मुह्यन्ति । त्वं महात्मनस्तान्प्रति ज्ञातव्ये द्वे सूक्ते शंसय ब्रूहि। ते अङ्गिरस स्व स्वर्गं यन्तो गच्छन्त आत्मनः सत्रपरिशेषितं स्वसत्रे परिशिष्टं तुष्टिसाधनं द्रव्यं ते तुभ्यं दास्यन्ते। अथ कालक्षेपमन्तरेण त्वं तानृषीन् गच्छ। स नाभाग आत्मने पित्रा यथोक्तं तथा कृतवानित्यर्थः। "अङ्गिरसो वा इमे स्वर्गाय लोकाय सत्रमासते षष्ठं षष्ठमेवाऽहरागत्य मुह्यन्ति तानेते सूक्ते षष्ठेऽहनि शंसय तेषां यत्सहस्रं सत्रपरिवेषणं तत्ते स्वर्यन्तो दास्यन्तीति तथेति तानुपैत्-प्रतिगृभ्णीत मानवं सुमेधस इति तमब्रुवन् किं कामो वदसीतीदमेव वः षष्ठमह प्रज्ञापयानि इत्यब्रवीत् अथ यद्वा एतत् सहस्रं सत्रपरिवेषणं तन्मे स्वर्यन्तो दत्तेति तथेति तानेते सूक्ते षष्ठेऽहनि अशंसयत् , ततो वैते प्रयज्ञमजानन् विप्रः स्वर्गलोकं तद्यदेते सूक्ते षष्ठे"ऽहनि शंसति यज्ञस्य प्रजात्यै स्वर्गस्य लोकस्याऽनुख्यात्या इति" हे सुमेधसः! मानवं मां प्रतिगृभ्णीत स्वीकुरुतेति मन्त्रमुक्त्वा कस्मिन्धने विद्यायामथाऽस्मदपेक्षिते विद्योपदेशकामो यस्य स त्वं किं कामः युष्मदधिकविद्यावत्वात् द्वितीयेऽधुना नाऽभिमत इति तृतीयकाम इत्याह - इद मेवेति। प्रथमविकल्पकामोऽपि भवामीत्याशयेनाह - अथ यदिति। सर्वयज्ञेषूपयोगमाह तद्य इति। अनुख्यातिः प्रकाश ते अङ्गिरस. सत्रपरिवेषणं धनं तस्मै नाभागाय दत्वा स्वर्गं ययुरित्यन्वयः। "ते स्वर्यन्तोऽब्रुवन्नेतत्ते ब्राह्मण सहस्रमिति" इति हे ब्राह्मण! वेदविद्याविशारद ॥३-५॥

कृष्णेर्शनः कृष्णवर्णतया प्रतीयमानः कश्चिल्लोकविलक्षणः पुरुषः रुद्र यज्ञशालाया उत्तरदिग्भागादभ्येत्य सत्रपरिवेषणं स्वीकरिष्यन्तं नाभागमुवाच - कथमिदं वास्तवं यज्ञशालालक्षणवास्तुभवं वसु वस्तु ममेति तदेनं समीकुर्वाणं पुरुषः

कृष्णसँवास्युत्तरत उपोत्थायाऽब्रवीत् मम वा इदं ममैवाऽस्तुहमिति इति समीकुर्वाणं राशीकृत्य स्वीकूर्वाणं कृष्णशरीरवाससी वास्तुहवास्तवं मूलभद्रभाषायां हकारवकारयो· पर्यायत्वाङ्गीकारात् ॥६॥

मानव इति तर्हि यदि ममेदमिति[1] वदसि ऋषिभिरिद मम दत्तमित्याह - सोऽब्रवीन्मह्यं वा इदमदुरिति तर्हि स्म मान वेत्युत्तरत्रापि सम्बध्यते। हे मानव, यदि त्वया प्रतिगृहीतमित्युच्यते, तर्हि नौ आवयोस्ते पितरि प्रश्न· स्यात्, गत्वा तं पृष्ट्वा निम्श्चित्य मां ब्रूहीत्युक्त· स नाभाग पितरं गत तथा पृष्टवान् - भो पित·! अङ्गिरोभिर्दक्षिणार्थं वास्तवं मह्यं दत्तं, तद्ग्रहणसमये कश्चित्पुरुष आगत्य मदीयमिदं वास्तवं, ऋषिभिर्मह्यं दत्तमिति न त्वया स्वीकर्तव्यमित्याह अतो यथार्थं वदेति ॥७॥

नाभागेन पृष्ट पिता प्राह - **यज्ञेति**। क्वचित् दक्षशापप्रसङ्गे ऋषय यज्ञवास्तुगतं सर्वमुच्छिष्टमवशिष्टं रुद्राय भागं चक्रु हि यस्मात् स देव सर्वमर्हति ॥८॥

**नाभागस्तं प्रणम्याह तवेश किल वास्तुगम्[2]।**
**इत्याह मे पिता ब्रह्मन् शिरसा त्वां प्रसादये ॥९॥**

**[3]श्रीरुद्र उवाच[-3]**

**यत्ते पिताऽवदद्धर्मं त्वञ्च सत्यं प्रभाषसे।**
**ददामि ते मन्त्रदृशे[4] ज्ञानं ब्रह्म सनातनम् ॥ १०॥ ***

**गृहाण द्रविणं[5] दत्तं[6] यत्सत्रपरिशेषितम् ।**
**इत्युक्त्वा[7]न्तर्दधे रुद्रो भगवान्सत्यवत्सलः ॥११॥**

**य एतत्संस्मरेत् प्रातस्सायञ्च सुसमाहितः।**
**कविर्भवति मन्त्रज्ञो गतिञ्चैव तथाऽऽत्मनः ॥१२॥**

**नाभागादम्बरीषोऽभून्महाभागवतः कृती।**
**नास्पृशद्ब्रह्मशापोऽपि यमप्रतिहतः[8] क्वचित् ॥१३॥**

---

1 M स० 2 ABGJT °कम् 3--3 ABGJMMaT omit 4 HMMaVW वृशो * The following extra verse is found in B H V W edns तस्मादसत्य नब्रूयात् परस्याश्चापदि चित्। सत्येन परिसन्तुष्टो भवामीष्टस्सोम भवेत् ॥ 5 ABGJT मत्सत्रे, HV मत्सत्र° 6 MMa °वेषि°, HV °वोष्टि° 7 ABGTMMaT र्हितो 8 ABGJT य न प्रति°, MMa चक्र प्रति°

**[1-]विष्णुरात उवाच[1]**

**भगवञ्छ्रोतुमिच्छामि राजर्षेस्तस्य धीमतः ।**
**न प्राभूद्यत्र निर्मुक्तो ब्रह्मदण्डो दुरत्ययः ॥१४॥**

**श्रीशुक उवाच**

**अम्बरीषो महाभागः सप्तद्वीपवतीं महीम् ।**
**अव्ययाञ्च श्रियं लब्ध्वा विभवञ्चाऽतुलं [2]विभुः ॥१५॥**
**मेनेऽतिदुर्लभं पुंसां सर्वं तत्स्वप्न[3]सम्मितम् ।**
**विद्वान् विभवनिर्वाणं तमो विशति यत्पुमान् ॥१६॥**

**श्रीध०** श्रीरुद्र आह - **यन्ते** इति ॥९, १०॥

**गृहाणेति ।** इदमाख्यानं श्रुतिप्रसिद्धम् । तथाहि बह्वृचब्राह्मणम् "नाभानेदिष्ठं शंसति नाभानेदिष्टं वै मानवं ब्रह्मचर्यं वसन्तं भ्रातरो निरभजन्सोऽब्रवीत्" इत्यादि ॥११॥

अस्य आख्यानस्य स्मरणे फलमाह - **य एत** दिति । आत्मनो गतिश्च प्राप्नोतीति शेष ॥१२॥

**नाभागादिति ।** क्वचिदपि न प्रतिहतो ब्रह्मशापोऽपि ब्राह्मणेन दुर्वाससा निर्मित कृत्यानलोऽपि य नाऽस्पृशत् । अतोऽसो महाभागवत· अत एव कृती पुण्यवान् ॥१३॥

**भागवन्निति ।** तस्य श्रोतुमिच्छामि, चरितमिति शेष । ब्रह्मदण्ड कृत्यानलो न प्राभूत् न समर्थो बभूव ॥१४॥

**अम्वरीष** इति । श्रियं सम्पदम् । विभवं [4]सर्वोत्कृष्टत्वं[-4] [5]अतुलं निरुपमम्[5] ॥१५॥

**मेने इति** । पुंसामतिदुर्लभमपि तत्सर्वं स्वप्नवत्संस्तुतं निरूपितमनुपादेयं मेने । तत्र हेतु । विभवस्य निर्वाणं नाशं विद्वान् यद्येन विभवेन तन्नाशेन वा पुमांस्तमो विशति मोहे निमज्जति ॥१६॥

**वीर°** ततो नाभाग· पितुर्वच आकर्ण्य वास्तुकं वसुग्रहणार्थमुपायान्तरमपश्यन् रुद्रं प्रणम्येदमाह - किं, हे ईश, **यद्यपि** मे पिता वास्तुकं वसु तवैव त्वत्सम्बन्ध्येवेत्याह । तथाऽपि हे ब्रह्मन् शिरसा त्वां [6]प्रसादये प्रार्थये प्रणतेन शिरसा त्वां वास्तुकवसु प्रदानाय प्रसन्नं कुर्यामिति वदन् प्रणतो बभूव ॥९॥

---

1--1 ABGJMMaT राजोवाच 2 ABGJT भुवि 3 ABGJT सस्तुतम् , HV °वन् स्तुतम्° 4- -4 ABJ ऐश्वर्यम् 5- -5 A omits 6 AB omit प्रार्थये

ततो रुद्र आह - **यदिति**। यद्यस्मात्ते तव पिता धर्ममेवाह, तथा त्वमपि सत्यमेव प्रभाषसे, तत्तस्मात् मन्त्रदृशे **वैश्वदेव** - मन्त्रद्रष्ट्रे ते तुभ्यं सनातनं ब्रह्म ब्रह्मविषयकं ज्ञानं ददामि ॥१०॥

तथा यद्यज्ञपरिशेषितं द्रविणं मया दत्तं गृहाण। द्वादशाहस्य सत्रत्वाद्यागत्वाच्च यज्ञवास्तुगतं यत्सत्रपरिशेषितमिति यज्ञसत्रपदयो· प्रयोगः। इतीत्थमुक्ता भागवान् सत्यवत्सलः सत्यभाषणनिमित्तवात्सल्ययुक्तो रुद्र· तत्रैवान्तर्दधे ॥११॥

एतदाख्यानसंस्मरणफलमाह - **यः** पुमानेतदाख्यानं प्रातस्सायश्च समाहितचित्त· संस्मरेत् स कवि शास्त्रजन्यज्ञानी भवति, मन्त्रज्ञश्च भवति, तथा आत्मन स्वस्य परस्य च गतिं याथात्म्यश्च, वेदेति शेष· ॥१२॥

एवं नाभागवृत्तान्तमभिधाय अथ तत्पुत्रं तच्छरित्रञ्चाऽह[1] - **नाभागा** दित्यादिना यावत्पञ्चमाध्यायसमाप्ति। नाभागा दम्बरीष सम्बभूव। स च महाभागवत कृती सापराधेष्वप्युपकारकरणशीलः। विशेषेण तच्चरित्र प्रश्नावसरप्रदानाय **सङ्ग्रहेण** तद्वृत्तं वदन् तं विशिनष्टि नाऽस्पृशदित्यर्धेन। क्वचिदपि न प्रतिहत प्रतिहतिशून्यो विप्रशापोऽपि यमम्बरीषं नाऽस्पृशत्। यद्यपि दुर्वासा न तस्मै शापं ददौ, नाप्युत्कृत्य जटोत्पादितकृत्याया शापरूपत्वं तथाऽपि शापवत्कृत्यायास्तन्निग्रहार्थत्वात् कृत्यायां शापशाब्द औपचारिको द्रष्टव्य ॥१३॥

एवमुक्ते लब्धप्रश्नावसर पृच्छति राजा - **भगवन्निति** हे भगवन् राजर्षेर्धीमतस्तस्याऽम्बरीषस्य श्रोतुमिच्छामि, चरित्र मिति शेष । यत्राम्बरीषे विनिर्मुक्त प्रयुक्तो दुरत्ययोऽपि ब्रह्मदण्ड कृत्यारूपो न प्राभूत् न समर्थो बभूव, तं बाधितु मिति शेष ॥१४॥

एवमापृष्टो ब्रह्मदण्डस्य अप्रभुत्वमाचिख्यासु· तावत्तस्य 'महाभागवत कृती' त्युक्तं महाभागवतत्वं प्रपञ्चयति - **अम्बरीष** इत्यादिना आरिराधयिषुरित्यत प्राक्तनेन ग्रन्थेन । अम्बरीषो महाभागः धीमानत एव सप्तद्वीपयुक्तां महीमव्ययां निरुपद्रवां श्रियं सम्पदम् अतुलमसमानमनितरसाधारणं विभवं भोग्यभोगेपकरणदिसमृद्धिमैश्वर्यं वेत्येतत्सर्वमितरेषां दु खेनाऽपि लब्धु मशक्यं, लब्ध्वाऽपि विभवनिर्वाणं विभवस्य निर्वाणमवसानं नाशं, विद्वान् तत्सर्वं स्वप्नसम्मितं स्वाप्नवस्तुतुल्यं मेने, हेयममन्यते त्यर्थ । तत्र हेतु , यद्यस्मात् विभवसङ्गात् पुमान् तमो नरकं विशति ॥१५, १६॥

**विज°** मया त्वविचार्योक्तमित्युक्तो नाभागो गत्वा तं रुद्रं प्रणम्याऽह - हे ईश, वास्तुगतं तव किलेति मे पिता प्राह। तस्मा दहं शिरसा त्वां प्रसादये क्षमस्वेति वाचा स नाभाग प्रत्याह ॥९॥

स पुरुषो नाभागं प्रत्याह - **यत्त** इति। ते पिता सत्यलक्षणं धर्ममवदत् त्वञ्च सत्यं यथा तथ्यं वदसीति यत् **तस्मामन्त्रदृश·**

---

1 Tw Omit तच्चरित्र

वैश्वदेवसूक्तं दृष्टवतस्ते तव सनातनं सदातनं वेदप्रमाणकं वा ब्रह्मनिरपेक्षमन्योपदेशाकाङ्क्षारहितं ब्रह्मविषयं वा ज्ञानं ददामि ॥१०॥

किञ्च यत्सत्रपरिवेषितं द्रविणं तच्च ददामि गृहाण तमब्रवीत् तद्वै नौ तवैव पितरि प्रश्न इति स पितरमेनं, पिता अब्रवीन्ननु ते पुत्रकाऽदुरित्यदुरेव इत्यब्रवीत्तत्तु मे पुरुषः "कृष्ण शवास्युत्तरत उपोदतिष्ठन् मम वा इदं ममैवाऽस्तुहमित्यादितेति तं पिताऽब्रवीत्तस्यैव पुत्रक तत्तु स तुभ्यं दास्यतीति स पुनरेत्याऽब्रवीत्। तव हवाव किल भगव इदमिति मे पिताहति सोऽब्रतीत् तदहं तुभ्यमेव ददामि य एवं सत्यमवादीः" इति। तस्मादेवं विदुषां[1] सत्यमेव वेदितव्यमिति[2] हे पुत्रक, तेऽङ्गिरसस्तवाऽ दुर्ननु दत्तवन्तः एवं किमिति पृष्टे स नाभाग· न अदुरेव न तत्र सन्देह इत्यब्रवीत्, तर्हि किमत्र बाधकमिति तत्राह तत्तु मे इति सत्रपरिवेषितं यद्धनं तदिदं ममैवेत्युक्त्वा पिता दत्तवान् स्वीकृतावानित्यर्थः। इत्युक्ते पिता नभागं प्रत्याह तं पितेति ॥११॥

फलमाह - **य एत** दिति। कविस्तत्त्वविज्ञानी मन्त्रज्ञः ऋग्वेदतात्पर्यार्थज्ञानी आत्मनः स्वपरलक्षणस्य वस्तुनो गतिं स्थितिं ज्ञानं वा, प्राप्नोतीति शेष·। "स[3] एव सहस्रसनिर्मन्त्रोऽयं नाभानेदिष्ठमुपैनं सहस्रं नमति प्रषष्ठेनाऽह्ना स्वर्गं लोकं जानाति य एवं वेद" इत्यनेनाऽपि फलश्रुतेरर्थस्सूचिते इति। यदाह नाभानेदिष्ठः सहस्रसनिः 'वनषण सम्भक्तौ' इति धातो· सहस्रेत्युपलक्षणमनेकजनाय धनदाता 'सन लाभे' इति धातोरनेकविषयज्ञानलाभोपेतः मन्त्रो मन्त्रज्ञानी पुरुष· एवमुक्त मितिहासार्थं वेद एनं पुरुषमुद्दिश्य सहस्रं उपनमति षष्ठेनाह्ना षष्ठदिनापेक्षिसूक्तपूर्वककृतकर्मणां स्वर्गं सुखं ज्ञानात्मकं लोकं सर्वाधारं हरिं प्रजानातीति भाव· ॥१२॥

कृतं पूर्णं ब्रह्मऽस्यास्तीति कृती सुकृती वा चक्रेण सुदर्शननाम्ना प्रतिहतो निरस्त· ॥१३, १४॥

प्रथमतस्तस्य विरक्तिमाह - **अम्बरीष** इति। मह्यादिकं तत्सर्वं स्वप्नसम्मितं स्वप्नवदनित्यं मेने इत्यन्वयः। अव्ययं दीर्घकालीनां विभवं हिरण्यादिलक्षणम् अनेन अम्बरीषशब्दार्थोऽपि सूचित स आविष्करिष्यते अम्वादिकं रीषं नश्वरमिति ज्ञानमस्यास्तीति अम्बरीषः। रुष रिष हिंसायाम्, मत्वर्थे अच्प्रत्ययः। अम्बरवदीषा इच्छा यस्य स तथा आकाशवद्बहुलज्ञान इत्यर्थ·। व्यत्यासश्छान्दसः। अं ब्रह्म तस्य वरिर्वरणं तत्रेच्छा यस्य स तथा ॥१५॥

एतदेव स्पष्टयति विद्वानिति। विभवनिर्वाण् हिरण्यादिसम्पदां नाशं क्षणिकं विद्वान् पुमान्यद्यस्मात् विभवान्मुग्धस्तमो विशति ॥१६॥

**वासुदेवे भगवति तद्भक्तेषु च साधुषु।**
**प्राप्तो भावं परं विश्वं येनेदं लोष्टवत् स्मृतम् ॥१७॥**

---

1 M °षा 2 M व° 3 M °ष

स वै मनः कृष्णपदारविन्दयोर्वचांसि वैकुण्ठगुणानुवर्णने ।
करौ हरेर्मन्दिरमार्जनादिषु श्रुती[1] चकाराच्युतसत्कथोदये[2] ॥१८॥

मुकुन्दलिङ्गालयदर्शने दृशौ तद्भृत्यगात्रस्पर्शेऽङ्गसङ्गमम् ।
घ्राणञ्च तत्पादसरोजसौरभे श्रीमत्तुलस्या[3] रसनां तदर्पिते ॥१९॥

पादौ हरेः क्षेत्रपदानुसर्पणे[4] शिरो हृषीकेशपदाभिवन्दने ।
कामञ्च दास्ये न तु कामकाम्यया यथोत्तम[5]श्लोकजनाश्रया रतिः[6] ॥२०॥

एवं सदा कर्मकलापमात्मनः परेऽधियज्ञे भगवत्यधोक्षजे ।
सर्वात्मभावं विदधन्महीमिमां तन्निष्ठविप्राभिहित शशास ह ॥२१॥

ईजेऽश्वमेधैरधियज्ञमीश्वरं महाविभूत्योपचिताङ्गदक्षिणैः ।
ततैर्वसिष्ठासितगौतमादिभिः[7]धन्वन्यभिस्रोतमसौ सरस्वतीम् ॥२२॥

यस्य क्रतुषु गीर्वाणैः सदस्या ऋत्विजो जनाः ।
तुल्यरूपाश्चानिमिषा व्यदृश्यन्त सुवाससः ॥२३॥

स्वर्गो न प्रार्थितो यस्य मनुजैरमरप्रियः ।
शृण्वद्भिरनुगायद्भिरुत्तम[8]श्लोकचेष्टितम् ॥२४॥

**श्रीध०** नन्वेवं जानन्तोऽपि विभवैषिणो दृश्यन्ते - तत्राह - **वासुदेव** इति। भावं भक्तिं प्राप्त· येन भावेनेदं विश्वं लोष्टवदतितुच्छं स्मृतम् ॥१७॥

भक्तिमेव सर्वेन्द्रियाणां भगवत्परत्वकथनेन प्रपञ्चयति स वा इति त्रिभि [9-]श्रुती श्रोत्रे[-9] अच्युतस्य सत्कथानामुदये श्रवणे चकारेत्यस्य सर्वत्रान्वय· ॥१८॥

**मुकुन्देति**। मुकुन्दस्य लिङ्गानामालया[10] स्थानानि, तेषां दर्शने दृशौ नेत्रे [11-]तद्भृत्या· भागवता· तेषां गात्रस्पर्शनं आलिङ्गनहस्तस्पर्शनादि, अत्रच्छन्दोभङ्ग, आर्ष[-11] तस्मिन् अङ्गसङ्गमं करचरणाद्यवयवसम्बन्धं श्रीमत्यास्तुलस्या तत्पादसरोजेन यत्सौरभं तस्मिन्, तदर्पिते तस्मै निवेदितान्नादौ ॥१९॥

---

1 ABGJMMaT श्रुति° 2 W °राद्भुत° 3 MMa °स्या 4 W पथा 5 MMa तथो 6 MMa °श्रय रतिम् 7 MMa विद्वानभि° 8 ABGJMMaT °रूप°
9- -9 A B J श्रुतिं श्रात्र 10 B H V °यानि 11- -11 A B J omit

**पादाविति।** कामं स्रक्चन्दनादिसेवां दास्ये निमित्ते तत्प्रसादस्वीकाराय, ननु कामकाम्यया विषयेच्छया। कथं चकार? उत्तमश्लोकजनाश्रया रतिर्यथा भवे त्तथा। अनेन तद्भक्तेषु च परं भावं प्राप्त इत्येतत्स्फुटीकृतम् ॥२०॥

**एवमिति।** सर्वत्राऽत्मेति भावो भावना यस्मिंस्तमात्मनः स्वस्य कर्मणां कलापं समूहं भगवति विदधत् समर्पयन् तन्निष्ठैर्भागवतैर्विप्रैरभिहितः शिक्षितस्सन् महीं शशास पालयामास। अनेनाऽधिकृतो धर्मोऽपि यथावद्दर्शित· ॥२१॥

**ईजे** इति। किञ्च यज्ञाधिष्ठातारमीश्वरमश्वमेधैरीजे आराधयामास। महाविभूत्योपचितान्यङ्गानि दक्षिणाश्च येषु तै वशिष्ठादिभि र्हेतुभूतै स्ततै· विस्तृतैः। धन्वनि धन्वदेशे निरुदके देशे[1] सरस्वतीमभिस्रोतम् तस्या प्रतिलोममित्यर्थ· ॥२२॥

**यस्येति।** किञ्च यस्य क्रतुषु सदस्यादयो गीर्वाणैस्सह भूषणादिभिस्तुल्यरूपा व्यदृश्यन्त, स इत्थमिति चतुर्थेनान्वय·। न च देवानां निमेषाभावात् वैलक्षण्यं यतोऽनिमिषाश्च व्यदृश्यन्त। न निमिषन्तीति तथा आश्चर्यदर्शनौत्सुक्येन तेषां निमेषोपरमा दिति भाव ॥२३॥

**स्वर्ग** इति। यस्य यदीयैर्मनुजैरपि स्वर्गो न प्रार्थितस्तस्य तु का वार्ता ? ॥२४॥

**वीर०** न केवलं विरक्तो बभूव, अपि तु भगवति वासुदेवे तद्भक्तेषु[2] साधुलक्षणलक्षितेषु च परम्भावं भक्त्याऽत्मक मभिप्रायं गत प्राप्त· भावं विशिनष्टि - येन भावेनेदं विश्वं लोष्टवत्कृतं[3] लोष्टवदनुपादेयममन्यतेत्यर्थ ॥१७॥

वासुदेवे परं भावं गत इत्येतदेव प्रपञ्चयति - **स वा** इति तावन्मनुष्यदेहस्य सर्वविधभगवत्सेवोपयुक्ततामावेद्य तथैव कृतवानित्याह - स वा इति त्रिभि । स वै अम्बरीष·। वैशब्द प्रसिद्धिद्योतक । मन कृष्णस्य भगवत पदारविन्दयोश्चकार तच्चिन्तनप्रवणमकरोदित्यर्थः। वैकुण्ठस्य गुणानामनुवर्णने वचांस्यकरोत् गुणवर्णनप्रवणान्येवाकरोदित्यर्थ । एवमुत्तरत्राऽपि द्रष्टव्यम् । भगवन्मन्दिरमार्जनादिषु व्यापारेषु हस्तावकरोत्। आदिशब्दादाराधनादीनां सङ्ग्रह । अद्भुतानां सत्कथानां पुण्यावहानां भगवत्कथानां पुण्यप्रदाना[4]मुदये श्रवणे श्रुतिं श्रोत्रेन्द्रियं चकार ॥१८॥

मुकुन्दस्य लिङ्गानि विग्रहा आलया· स्थानानि च तेषां दर्शने दृशौ नेत्रे चकार। तस्य मुकुन्दस्य ये भृत्यास्तेषां गात्राणां स्पर्शने निमित्ते अङ्गसङ्गमं स्वाङ्गस्य यत्किञ्चिद्वस्तुसंस्पर्शं मुकुन्दभक्तगात्रश्चेत् पस्पर्श नेतरदित्यर्थ ।·श्रीमत्या तुलस्या मुकुन्द पदसरोजेन यत्सौरभं तत्पादसरोजसम्बन्धेन यत्सौरभं तस्मिन् घ्राणेन्द्रियं चकार। तदर्पिते मुकुन्दाय निवेदिते अन्नादौ रसनाम् ॥१९॥

---

1 A B J Omit देशे 2 A B साधुधुल° 3 AB omit लोष्टवत्कृत 4 TW omit पुण्यप्रदाना

हरे क्षेत्राणि वेङ्कटाद्र्यादीनि तेषां पन्थानो मार्गाः क्षेत्रपथाः। "ऋक्पूरब्धू" ( अष्टा 5.5 74 ) इति समासान्तोऽप्रत्यय । तेष्वनुसर्णणे गमने पादौ, हृषीकेशस्य पदयोरभिवन्दने शिरो मूर्धानं कामं तदर्पितस्रक्चन्दनादि[1] सेवां दास्ये निमित्ते चकार। तत्प्रसादस्वीकारस्तद्दास्यार्थमेव, न तु कामकाम्यया विषयेच्छया कृत इत्यर्थः। सर्वमेतत्कथं चकार? उत्तमश्लोकजना भगवद्भक्ता स्तदाश्रया रति· तत्पर्यन्ता रतिर्भक्तिर्यथा भवेत् तथा चकारेत्यर्थः। तथेति पाठे उत्तमश्लोकजनविषया रतिश्च तस्याऽभवदित्यर्थः। अनेन तद्भक्तेषु च परम्भावन्नत इत्येतत्प्रपञ्चितम् । अतो न पौनरुक्त्यम् ॥२०॥

एवं सर्वात्मभावं सर्वात्मना करणत्रयेण भावो भावना यस्मिन् तं कर्मकलापमधियज्ञे यज्ञनिर्वाहके भगवति विदध त्समर्पयन् कर्मसमूहस्य भगवदाराधनरूपतामनुसन्दधदित्यर्थ । यद्वा, एवंविधं कर्मकलापं भगवति सर्वात्मभावं सर्वस्यान्तरात्मत्वानुसन्धानं च विदधत् कुर्वन्, भगवन्निष्ठैर्वसिष्टादिभिरभिहित एवं कुरु, एवं माकर्षी इत्येवमुक्तः इमां महीं सप्तद्वीपवतीं शशास पालयामास ॥२१॥

एवं महाविभूत्या उपचितानि बहूकृतानि अङ्गानि दक्षिणाश्च येषु तैरश्वमैधै र्वसिष्ठादिभिर्हेतुभूतै स्तैर्विस्तृतैराराधयामास। धन्वन् धन्वनि निरुदके देशे विभक्तिलोप आर्ष । निरुदकात्तस्माद्देशादभिस्रोतं प्रवाहाभिमुखं यथा भवति तथा यष्टुं सरस्वतीं नदीमगादित्यर्थ ॥२२॥

तेनानुष्ठितानश्वमेधान् विशिनष्टि - **यस्येति**। यस्याऽम्बरीषस्य क्रतुषु अश्वमेधेषु सभ्या ऋत्विजश्च जना गीर्वाणैर्देवैस्सह भूषणादिभिस्तुल्यरूपिणो व्यदृश्यन्त, तथा अनिमिषा इन्द्रादयो देवा· सुवाससः शोभनवस्त्राभरणदियुक्ता व्यदृश्यन्त लक्ष्यन्त। यच्छब्दानां स इत्थमिति चतुर्थेनाऽन्वय ॥२३॥

न केवलं तदीयजनानां वस्त्र[2]भूषणादिभिरमरतौल्यमेव अपितु स्वर्गिभ्योऽप्यतिशयितसुखत्वश्चेत्याह - **स्वर्ग** इति। उत्तमश्लोकस्य भगवतश्चेष्टितमनुगायद्भि श्रुण्वद्भिश्च यस्याऽऽम्बरीषस्य सम्बन्धिभिर्मनु[3]जैरमराणां प्रिय स्वर्गोऽपि न प्रार्थित । स्वर्गादप्यतिशयितमुत्तमश्लोकचेष्टितश्रवणगानजं[4] सुखरसमनुभवद्भि· स्वर्गोप्युपेक्षित इति भाव·। तदीयैरेव जनै स्वर्गः उपेक्षित·, तेनोपेक्षित इति किमु वक्तव्यमिति च भाव· ॥२४॥

**विज०** परम्भावमुत्कृष्टां भक्तिं येनाऽम्बरीषेण इदं विश्वं लोष्टवत् स्मृतं, येन भावेन वा ॥१७॥

उत्कृष्टभक्तिमतः प्रवृत्तिं दर्शायति - **स** वा इति ॥१८॥

मुकुन्दस्य लिङ्गं प्रतिमालक्षणं तेन युक्तस्यालयस्य पादसरोजसौरभेण युक्तायाम् ॥१९॥

---

1 A°B °दिभि 2 A B °स्त्रैर्भू° 3 AB जैनै 4 AB °ज

कामकाम्यया विषयतृष्णया उत्तमश्लोकस्य हरे· जनानाश्रयतीति जनाश्रया ताम् ॥२०॥

तस्मिन् हरौ निष्ठा मनोयोगलक्षणा येषां ते तथा तादृशैर्विप्रैरभिहित· कर्मकलापं कर्मसमूहं सर्वात्मभावं भक्तिञ्चेति द्वयं भगवति विदधत् ॥२१॥

सरस्वतीमभिस्रोतं सरस्वत्या स्रोतो जलप्रवाह· स यथाऽभिमुखो भवति तथा, सरस्वतीजलमुद्दिश्येत्यर्थ । उपचिता सँवर्धिता यज्ञस्याऽङ्गभूतदक्षिणा येषां ते तथा तै· ततैर्विद्यासु निपुणैः वसिष्ठश्च असितश्च गौतमश्च आदिर्येषान्ते तथा तै ॥२२॥

तुल्यरूपाः रुपयौवनवस्त्राभरणादिभि· समानवेषाः, अनिमिषा उन्मीलितलोचना ॥२३॥

यस्याऽम्बरीषस्य मनुजैरमरप्रिय· स्वर्गोऽपि न प्रार्थित इत्यन्वय । तत्र किं कारणमिति तत्राऽह - **शृण्वद्भिरिति**। अनेन मुकुन्दचरितश्रवणगायनाभ्यामधिकं स्वर्गसुखं न भवत्यत स्वर्गो न प्रार्थित इत्युक्तम् ॥२४॥

**न वर्धयन्ति[1] तान्कामा[2]: स्वाराज्यपरिभाविताः ।**
**दुर्लभा[3]अपि सिद्धानां मुकुन्दं हृदि पश्यतः ॥२५॥**

**स इत्थं भक्तियोगेन तपोयुक्तेन पार्थिवः ।**
**स्वधर्मेण हरिं प्रीणन् सङ्गान् सर्वाञ्छनैर्जहौ ॥२६॥**

**गृहेषु दारेषु सुतेषु बन्धुषु द्विपोत्तमस्यन्दनवाजिपत्ति[4]षु ।**
**अक्षय्य[5]वस्त्राभरणायुधादिष्वनन्तकोशेष्वकरोदसन्मतिम् ॥२७॥**

**तस्मा अदाद्धरिश्चक्रं प्रत्यनीकभया[6]वहम् ।**
**एकान्तभक्ति[7]योगेन प्रीतो भीता[8]भिरक्षणम् ॥२८॥**

**आरिराधयि[9]षुर्विष्णुं महिष्या तुल्यशीलया ।**
**युक्त[10]स्सं[11]वत्सरं धीरो दधार द्वादशीव्रतम् ॥२९॥**

**व्रतान्ते कार्तिके मासि त्रिरात्रं समुपोषितः ।**
**स्नातः कदाचित्कालिन्द्यां हरिं मधुवनेऽर्चयत् ॥३०॥**

---

1 ABGJT समर्द्धयन्ति , MMa समृद्धा यस्य 2 H V यक्ता , MMa नो का , W यान्का° 3 ABGJT °नापि 4 H V W पक्तिषु 5 ABGTMMaT °रत्वा° 6 MMa °प° 7 A B G J T भावेन 8 A B G J T भृत्याभि , MMa भूत्वाभि° 9 ABGJMMaT °षु कृष्णा 10 ABGJMMaT स्सा° 11 ABGJMMaT वीरो

**महाभिषेकविधिना सर्वोपस्करसम्पदा[1] ।**
**अभिषिच्य[2] वराकल्पैर्गन्धमाल्यार्हणदिभिः ॥३१।**

**तद्गतान्तरभावेन पूजयामास केशवम्**
**ब्राह्मणांश्च महाभागान् सिद्धार्थानपि भक्तितः ॥३२॥**

**श्रीध० नेति।** आस्तां स्वर्गप्रार्थनशङ्काऽपि यद्यत· मुकुन्दं हृदि पश्यतस्तान् जनान् कामा विषया न वर्धन्ति[3] न हर्षयन्ति। कथम्भूता ? स्वाराज्येन स्वरूपसुखेन परभाविता अतिशायिता·, अत एव सिद्धानामपि दुर्लभा·। 'या निति' पाठे या न्मनुजान्। स्वाराज्येत्यत्राऽपि द्वितीयान्तपाठे मनुजानां विशेषणम्। यमिति पाठे 'यमम्बरीषं पश्यता' मिति पाठे सिद्धानां विशेषणम् ॥२५॥

एवं भगवदाराधनपरस्य कामाद्युपेक्षा नैव चित्रमित्युपसंहरति - **स इत्थमिति** द्वाभ्याम् ॥ २६, २७॥

नन्वेवम्भूतोऽसौ कथ प्रतिपक्षान् जयेत्तत्राह **तस्मा** इति ॥२८॥

तदेवं तस्य वैराग्यादिकं हरिभक्तिश्चोक्त्वा ब्रह्मदण्डो यत्र न प्राभूतिदि यदुक्तं तदेव द्वादशीव्रतनिष्ठां कथयन्नाऽह - **आरिराधयिषु** रित्यदिना यावदध्याय परि[4]समाप्ति ॥२९॥

**व्रतेति** अर्चयत् अडगमाभाव आर्ष ॥३०. ३१॥

**तदिति।** ब्राह्मणांश्च पूजयामास। सिद्धार्थानाप्तकामान् पूजानपेक्षानपि ॥३२॥

**वीर०** आस्तां तावत्स्वर्गप्रार्थनाशङ्काऽपि सिद्धानां योगीश्वराणामपि दुर्लभा , कामाः काम्यन्त इति कामा. अणिमादयः स्वाराज्यपरिभाविता स्वाराज्येनाकर्मवश्यत्वावहब्रह्मात्मक स्वात्मानुभवेन परिभाविता प्रापिताः मुकुन्दं हृदि पश्यतः उपासीनान् यान् यदीयान् जनान्नवर्धयन्ति न हर्षयन्ति अणिमादयोऽपि न हर्षयन्ति, किमुत न स्वर्गो हर्षयतीति भावः। यमिति पाठे यमम्बरीषं पश्यता मिति पाठे, तत्सिद्धानां विशेषणम् ॥२५॥

यस्य सम्बन्धिनो जना एवंविधा सपार्थिवोऽम्बरीष· तपोयुक्तेन, तपश्शब्दोऽत्र आत्मयाथात्म्यज्ञानयोगपरः, 'तप आलोचने' इति ज्ञानार्थात्तपधातोर्निष्पन्नत्वात्। तद्युक्तेन स्वधर्मेण स्ववर्णाश्रमोचितासङ्गकर्मानुष्ठानेन भक्तियोगेन ज्ञानकर्म्मानुगृहीत भगवद्भक्तियोगेनेत्यर्थः। हरिं स्वाश्रितानां संसृति बन्धहरं भगवन्तं प्रीणयन् शनैः सर्वान् सङ्गान् हृद्गतान् देहतदनुबन्धिविषयान् ऐहिकान् आमुष्मिकांश्च जहौ तत्याज ॥२६॥

1 W पकरण 2 ABGJT च्याम्बरा , W 'च्यपरा' 3 ABJ समर्द्धयन्ति 4 ABJ omit परि

सङ्गान् जहावित्येतदेव प्रपञ्चयति - गृहेष्विति। गृहादिषु गजोत्तमरथाश्वादिवस्तुषु अक्षय्येषु वस्त्रादिषु अनवधिकेषु कोशेषु धनभाण्[1]डागारेषु असन्मतिमपुरुषार्थत्वबुद्धिमनित्यत्वबुद्धिं हेयत्वबुद्धिं वा अकरोत् ॥२७॥

एवं भूतोऽसौ कथं प्रतिपक्षान् जितवान् ? तत्राह - तस्मा इति। एकान्तभक्तियोगेन अनन्यप्रयोजनभक्तियोगेन प्रीतो हरिस्तस्मै, अम्बरीषाय भीतानभिरक्षतीति तथा। नन्द्यादित्वात् (अष्टा.3.1 134)

कर्तरि ल्युः। प्रत्यनीका. समाश्रितानां विपक्षा· तेषां भयमावहतीति तथा, तच्चक्रं सुदर्शनमदात् ॥२८॥

को वा एवंविधस्याऽस्य प्रतिपक्षो बभूव? यस्य भयावहं हरिश्चक्रमदादित्यपेक्षायां तदुपपादयितुं तावत् तत्प्रस्तावमाह - आरिराधयिषुरित्यादिना 'प्रादिष्ट' मित्यतः प्राक्तनेन ग्रन्थेन। भगवन्तमाराधयितुमिच्छुर्वीरोऽम्बरीषस्तुल्यशीलया स्वतुल्यस्वभावसद्वृत्तिमत्या भार्यया सह युक्त· संवत्सरपर्यन्तं द्वादशीव्रतं दधार चकार ॥२९॥

व्रतान्ते संवत्सरमनुष्ठितव्रतान्ते कार्तिके मासि, अनेन व्रतोपक्रमोऽपि कार्तिकशुद्धद्वादश्यामिति फलितम् त्रिरात्रं नवमीदशम्येकादशीषु सम्यगुपोषित , दशम्यामेकभुक्तं, द्वादश्यामेकभुक्तं एकादश्यामुपवास इत्युपवासत्रयमिति कश्चित्सम्प्रदायः। कदाचिद्द्वादश्यामित्यर्थ । कालिन्द्यां यमुनायां स्नात्वा मधुवनाख्ये वने सर्वेषामुपकरणाना माराधनोपकरणानां गन्धपुष्पधूपदीपदीनां सम्पत्समृद्धिर्यस्य तेन महाभिषेकविधिना सहस्रकलशस्नापनविधिना हरिमभिषिच्य अर्चयत्, अडभाव आर्ष· ॥३०, ३१॥

अर्चयदित्येव प्रपञ्चयति -व[2]रै श्रेष्ठै राकल्पै. आभरणै· गन्धै· माल्यै कुसुमैरर्हणै अर्घ्योदकै.। आदिशब्दात्पाद्यादिभि र्धूपदीपनैवेद्यादिभिश्च केशवं त[3]द्गतान्तरर्भावेन केशवविषयान्त करणव्यापारेण पूजयामास। तथा महाभागान् विदुषः अत एव सिद्धार्थान्, सिद्धं प्राप्त·पु[4]रुषार्थः आनन्ददो येषां तान् नित्यसन्तुष्टान् पूजानपेक्षानिति यावत्। तादृशानपि ब्राह्मणांश्च पूजयामास भागवतानभ्यर्चयदित्यर्थ· ॥३२॥

**विज०** यस्य काम्यन्त इति कामा विषयभोगा नो अल्पत्वान्न वाञ्छिता इति नेत्याह - **समृद्धा** इति। भोगेच्छूना मलम्बुद्धिविषया भवन्तीत्यर्थ । समृद्धौ निमित्तमाह स्वाराज्येति। स्वराज्येन स्वरूपभूतैश्वर्येण परिभावितः[5]प्रचिताः अत एवाऽ सुलभत्वेऽप्यन्येषां दुर्लभा इत्याह - दुर्लभा इति। अत्रापीदमेव निमित्तमाह मुकुन्दमिति ॥२५॥

अपरोक्षज्ञानफल माह - **स** इति। स्वधर्मेण प्रजापालनलक्षणेन ॥२६॥

कथं जहावित्यत्राह - **गृहेष्विति**। असन्त्यमङ्गलानि अनर्थकरणानीति मतिं बुद्धिं चकार ॥२७॥

---

1 TW °ण्डारेषु 2 TW परै 3 AB तद्गान्तर्भा° 4 AB प्रहर्षार्थ 5 AB प्रचोदिता

अपरोक्षज्ञानत्वेऽपि यावद्देहं मोक्षासम्भवादुद्रिक्तभक्तिभास्करादुत्फुल्लहृदयाम्बुजस्य हरेरम्बरीषेऽनुग्रहविशेषं दर्शयितुमाह - तस्मा इति ॥२८॥

लोकशिक्षाप्रकटनार्थं सांवत्सरमित्युक्तं न त्वन्यकालनिषेधार्थम्, अन्यथा भक्तिलोप· प्रसज्येत ॥२९, ३०॥

संवत्सरव्रतान्ते[1] सर्वसाधनसम्पदा महाभिषेकविधि साम्राज्याभिषेकप्रकार । वराकल्पैरुत्तमाभरणै ॥३१॥

तद्गतान्तरभावेन श्रीहरिनिष्ठामनस्कत्वेन सिद्धार्थान् कृतकृत्यान् ॥३२॥

**गवां रुक्मविषाणानां[2] रूप्याङ्घ्रीणां सुवाससाम् ।**
**पयःशीलवयोरूपवत्सोपस्करसम्पदाम् ॥३३॥**

**प्राहिणोत्साधुविप्रेभ्यो गृहेषु न्यर्बुदानि षट् ।**
**भोजयित्वा द्विजानग्रे स्वाद्वन्नं गुणवत्तरम्[3] ॥३४॥**

**लब्धकामैरनुज्ञातः पारणायोपचक्रमे ।**
**[4]तर्हि दिष्टयातिथिस्साक्षाद् दुर्वासा भगवानभूत् ॥३५॥**

**तमानर्चाऽतिथिं[5] सम्यक् प्रत्युत्थानासनार्हणैः ।**
**ययाचेऽभ्यवहाराय पादमूलमुपागतः ॥३६॥**

**प्रतिनन्द्य स तद्याच्ञां कर्तुमावश्यकं गतः ।**
**निममज्ज बृहद् ध्यायन् कालिन्दीसलिलेशुचौ[6] ॥३७॥**

**मुहूर्तार्धावाशिष्टायां द्वादश्यां पारणं प्रति ।**
**चिन्तयामास धर्मज्ञो द्विजैस्तद्धर्मसङ्कटम्[7] ॥३८॥**

**ब्राह्मणातिक्रमे दोषो द्वादश्यामप्यपारणे[8] ।**
**यत् कृत्वा साधु मे भूयात् अधर्मो वा न मां स्पृशेत् ॥३९॥**

**अम्भसा केवलेनाथ[9] करिष्ये व्रतपारणाम्[10]**
**आहुरब्भक्षणं[11] विप्रा अशितानाशितञ्च[12] यत्[13] ॥४०॥**

---

1 AB °न्त 2 ABGJMMaT °णीना 3 ABGHJTV °त्तम° 4 ABGJMMat तस्य तर्ह्य° 5 ABGJ भूप , MMa भूय 6 ABGJ शुभे 7 ABGJMMaT °र्ह्य 8 ABGJMMaT °श्या यदपा° 9 MMa °ऽद्य 10 ABGJMMaT °णम् 11 ABGJT प्राहु॰ 12 ABGTMMaT ह्यशित 13 ABGJMMaT तत्

**श्रीध० गवामिति**। रूप्याङ्घ्रीणां रूप्यखुराणाम्। पयश्शीलादिसम्पदो यासां तासाम् ॥३३॥

**प्राहिणोदिति**। न्यर्बुदानि षट्षष्टिकोटीः ॥३४॥

**लब्धेति**। तर्हि तदैव दुर्वासा अतिथि साक्षात्प्रत्यक्षोऽभूत् ॥३५॥

**तमिति**। आनर्चार्चितवान्। अभ्यवहाराय भोजनाय ॥३६॥

**प्रतिनन्द्येति**। आवश्यकं नैयमिकं माध्याह्निकं कर्म कर्तुं गत । बृहद्ब्रह्म ॥३७, ३८॥

धर्मसङ्कटमेवाऽऽह - **ब्रह्मणेति**। यद्यतो ब्राह्मणातिक्रमे दोषोऽधर्मं द्वादश्यामपारणेऽपि दोषो व्रतवैगुण्यम्। यत् कृत्वा यस्मिन्कृते ॥३९॥

एवं द्विजैस्सह विचार्य निश्चिनोति - **अम्भसेति**। व्रतस्य पारणं समाप्तिम्। तदशितमाहुरशितं नेति चाऽहु । श्रुतिश्च - अपोऽश्नाति त न्नैवाऽशितं नैवानशितम्" इति ॥४०॥

**वीर०** तत षट् गवां न्यर्बुदानि षष्टिकोटिं साधु यथा तथा विप्रेभ्य· प्राहिणोत् प्रददौ। कथम्भूतानाम् ? गवां रुक्मविषाणीनां स्वर्णक[1]विचतविषणयुक्तानां राजतालङ्कृतपादानां, शोभनानि वासांसि यासां पय· क्षीरञ्च शीलं सुस्वभावश्च वय अपूर्वप्रसवत्वञ्च रूपं लाङ्गूलखुरविषाणादिसौष्ठवञ्च, वत्साश्च उपस्करा दोहनपात्रादीनि च तेषां सम्पत्समृद्धिर्यासां. तत मृष्टं गुणवत्तरं षड्रसोपेतमन्नमग्रे ब्राह्मणान् भोजयित्वा ॥३३.३४॥

**लब्धाः** कामा दक्षिणादयो यैस्तैर्द्विजैरनुज्ञात पारणायोपचक्रमे। तर्हि तदैव भगवान् दुर्वासा तस्याम्बरीषस्य अतिथिस्साक्षादभूत् प्रत्यक्षो बभूव ॥३५॥

तमागतमतिथिं सम्यक् प्रत्युत्थानादिभिरभ्यर्च्य तस्य पादयोर्मूलमुपागत प्रणतोऽभ्यवहाराय भोजनाय ययाचे भवताऽत्र भोक्तव्यमिति प्रार्थयामासेत्यर्थ· ॥३६॥

ततस्स दुर्वासा· तस्याऽम्बरीषस्य याच्ञां प्रतिनद्य आवश्यकं नैयमिकं माध्याह्निकं कर्तुं गत शुचौ शुद्धे कालिन्द्या यमुनाया जले बृहत् ब्रह्म ध्यायन् निममज्ज सस्नावित्यर्थ ॥३७॥

तदा धर्मज्ञोऽम्बरीषो द्वादश्यां मुहर्तार्धेन घटिकामात्रेण अवशिष्टायां सत्यां पारणां प्रति संङ्कटं पारणाविषयकं सङ्कटं द्विजैस्सह चिन्तयामास ॥३८॥

---

1 TW सुवर्ण

सङ्कटेमवाह - **ब्राह्मणातिक्रम** इति। ब्राह्मणातिक्रमे ब्राह्मणस्यातिथेरतिक्रमेदोषः, अतिथिं निमन्त्र्य तमनादृत्यैव भोजने महान्प्रत्यवायः, तथा द्वादश्यामपारणे च दोषो व्रतवैगुण्यात् इत्येवंविधं सङ्कटं प्राप्तम्। तत्र यत्कृत्वा साधु मे भूयात्। यत्कृत्वेत्यव्ययसमृदायो, यथा चेत्यर्थ·। यथा च मे साधुभूयादित्यर्थः। यथाचाऽधर्मो मां न स्पृशेत्, तथा ब्रूतेति शेष ॥३९॥

एवं द्विजैर्विचार्य निश्चिनोति - **अम्भसेति**। केवलेनाऽम्भसा व्रतस्याऽङ्गभूतं पारणं करिष्ये। एवश्चेत्पारणस्य कृतत्वान्न व्रतवैगुण्यं नाऽप्यतिभ्यतिक्रमणदोष अनशनादित्याह आहुरिति। हे विप्रा, यदपां भक्षणं तदशितं, नाऽशितश्चाहुः श्रुतय इति शेष[1]। तथा च श्रुतय "अपोऽश्नाति, तन्नैऽवाशितं तन्नैवानशितम्" इत्याद्या· ॥४०॥

**विज०** शतकोटिसंख्यान्यर्बुदम् ॥३३ - ३५॥

अभ्यवहाराय भोजनाय ॥३६॥

आवश्यकं नित्यकर्म, बृहत् ब्रह्म, बृह्वतेर्धातो ढक् प्रत्यय ॥३७॥

धर्मसङ्कटे धर्मापदि प्राप्तायां सत्याम् ॥३८॥

आमन्त्रितब्राह्मणातिक्रमे दोषोऽस्ति, द्वादश्यामपारणे श्रीहरिप्रियद्वादशीभोजनाकरणे च दोषोऽस्ति यत्तस्मात्, यत्कृत्वा मे साधु भूयात् उभयदोषपरिहारेण श्रेय स्यात् उभयोरेकातिक्रमलक्षणोऽधर्मो वा मां न स्पृशेदिति तत् द्विजैस्सह चिन्तयामास ॥३९॥

एवं सञ्चित्य द्विजानां हार्दं स्वहार्दञ्च एकमेवेत्याशयेनाह - **अम्भसेति**। केवलेन व्रीह्यन्नरहितेन। अम्भसां पारणम् आशितं भुक्तं पूर्वव्रतधारणार्थं भुक्तं भवति। उत्तरकर्मार्थं अनशितमभुक्तं भवतीत्याहु· वेदा इति हि यत्तदिदं युष्माकञ्च सिद्धम्, तस्मात्तेनैव व्रतपारणां करिष्ये इत्यन्वय· ॥४०॥

**इत्यपः प्राश्य राजर्षिश्चिन्तयन्मनसाऽच्युतम् ।**
**प्रत्याचष्ट[2] कुरुश्रेष्ठ द्विजागमनमेव सः ॥४१॥**

**दुर्वासा यमुनाकूलात्कृत्वा[3]वश्यकमागतः[4]।**
**राज्ञाभिनन्दितस्तस्य बुबुधे चेष्टितं धिया ॥४२॥**

**मन्युना प्रचलद्गात्रो भ्रुकुटीकुटिलाननः।**
**बुभुक्षितश्च सुतरां कृताञ्जलिमभाषत ॥४३॥**

1 AB omit शेष 2 ABGJ 'त्य' 3 ABGJMMaT कृता' 4 ABGJMMaT 'का आ'

[1] दुर्वासा उवाच [-1]

अहो अस्य नृशंसस्य श्रिया मत्तस्य पश्यत।
धर्मव्यतिक्रमं विष्णोरभक्तस्येशमानिनः[3] ॥४४॥

यो मामतिथिमायातमातिथ्येन[4] निमन्त्र्य च ।
अदत्वा भुक्तवांस्तस्य सद्यस्ते दर्शये फलम् ॥४५॥

श्रीशुक उवाच

एवं ब्रुवाण उत्कृत्य जटां रोषविदीपिताम्[6]।
तया स निर्ममे तस्मै कृत्यां कालानलोपमाम् ॥४६॥

तामापतन्तीं ज्वलतीमसिहस्तां पदा भुवम्।
वेपयन्तीं समुद्वीक्ष्य न चचाल पदा[7] नृपः ॥४७॥

प्रदिष्टं[8] भृत्यरक्षायां[9] पुरुषेण महात्मना।
ददाह कृत्यां तां चक्रं क्रुद्धाहिमिव पावकः ॥४८॥

**श्रीध॰ इतीति**। प्रत्याचष्ट[10] प्रत्यैक्षत ॥४१, ४२॥

**मन्युनेति**। प्रचलत्कम्पमानं गात्रं यस्य। भ्रुकुटीभ्यां कुटिलमाननं यस्य। ४३-४७॥

**प्रदिष्टमिति**। क्रुद्धमहिं, पावको दावाग्निरिव ॥४८॥

**वीर०** इतीत्थं विनिश्चित्येति शेष । सराजर्षिरम्बरीषोऽच्युतं मनसा चिन्तयन् धर्मस्य सुसूक्ष्मत्वात् तदज्ञाननिमित्त बाधकपरिहाराय अच्युतं चिन्तयन्निति भाव·। अप प्राश्य हे कुरुश्रेष्ठ द्विजस्य दुर्वासस· आगमनमेव प्रत्याचष्ट प्रत्यैक्षत ॥४१॥

तत· कृतमावश्यकं माध्याह्निकं येन स· दुर्वासा· यमुनाया कुलात्तीरादागत· राज्ञा अम्बरीषेण अभिनन्दितोऽपि ऋषित्वात् धिया सूक्ष्मया हष्ट्या तस्य राज्ञश्चेष्टितं अशनरूपं बुबुधे विज्ञातवान् ॥४२॥

---

1 ABGJMMaT omit 2 ABJMMaT श्रीयोन्म° 3 MMaT °ष्ट° 4 HV °यान्त° 5--5 ABGJMMaT omit 6 ABGJMMaT °त 7 ABGJT omit °दान्नृ° 8 ABGJT प्राग्दिष्ट , MMa °आदिष्ट 9 MMa भक्त 10. AJ प्रत्य

ततो मन्युना हेतुना प्रचलत् गात्रं शरीरं यस्य भ्रूकुटिभ्यां कुटिलमाननं यस्य सः, सुतरां भृशं बुभुक्षितश्चेति क्रोधातिशय द्योतनार्थमुक्तम्। कृताञ्जलिं बद्धञ्जिलं अम्बरीषं प्रत्यभाषत ॥४३॥

अहो जना! अस्य क्षत्रबन्धो धर्मव्यतिक्रमं पश्यत। कथम्भूतस्य? क्रूरस्वभावस्य श्रिया सम्पदा गर्वितस्य विष्णो रभक्तस्याऽपि तस्येष्टं भक्तमात्मानं मन्यमानस्य ॥४४॥

कोऽसौ धर्मव्यतिक्रमः? इत्यत्राह- य इति। योऽयं क्षत्रबन्धुरागतं ममातिथ्येन आतिथ्यार्थम्। अध्ययनेन वसतीतिवत् तृतीया। निमन्त्र्य अतिथये मह्यमदत्वैव भुक्तवान् अयमेव धर्मव्यतिक्रम । अतस्तस्य धर्मव्यतिक्रमस्य फलं सत्यं तव दर्शये दर्शयामि ॥४५॥

[1] इत्येवं ब्रुवाणः रोषेण विदीपितां प्रज्वलितां जटामुत्कृत्य उच्छिद्य उद्धाट्येत्यर्थः। स दुर्वासास्तया जटया तस्मै अम्बरीषाय तं हन्तुमित्यर्थः। कालाग्नितुल्यां कृत्यां निर्ममे मारिकां शक्तिं निर्मितवानित्यर्थः ॥४६॥

ततोऽसिः खड्गे हस्ते यस्या , पदा भुवं वेपयन्तीं कम्पयमानां तामभिमुखमागच्छन्तीं ज्वलितां दीप्तां सम्यगुद्वीक्ष्य नृपोऽम्बरीष किञ्चिदपि न चचाल ॥४७॥

तदा भृत्यरक्षायां, निमित्ते सप्तमी। भृत्यस्याम्बरीषस्य रक्षार्थमित्यर्थ । महात्मना "प्रणतरक्षायां विलम्बमसहन्निव सदा पञ्चायुधीं बिभ्रत्" (पराशरमा) इत्युक्तविधेन महात्मना परमपुरुषेण चक्रं सुदर्शनं प्रदिष्टमाज्ञापितं सत् आगत्य तां कृत्यां ददाह। तथा क्रुद्धमहिं सर्पं पावको दवाग्निस्तद्वत्। तथा दवाग्नेरुपरि अहे क्रोधो निष्फलस्तया कृत्या निष्फला बभूवेति दृष्टान्ताभिप्रेतार्थः ॥४८॥

**विज०** ततः किङ्कृतमिति तत्राऽह - **इतीति**। प्रत्याचष्ट प्रत्यैक्षत ॥४१, ४२॥

भ्रुकुट्या कुटिलं वक्रमानानं यस्य स तथा ॥४३॥

विष्णो रिष्टमानिन ॥४४॥

अदत्त्वा, अन्नमिति शेषः ॥४५॥

जटामुत्कृत्य स्वशिरसीति शेष । तस्मै अम्बरीषाय ॥४६॥

वेपयन्तीं कम्पयन्तीम् ॥४७, ४८॥

1 TW omit इति

तदभिद्रवदुद्वीक्ष्य स्वप्रयासश्च निष्फलम् ।
दुर्वासा दुद्रुवे भीतो दिक्षु प्राणपरीप्सया ॥४९॥

तमन्वधावद्भगवद्रथाङ्गं[1] दवाग्निरुद्भूत[2]शिखो यथाऽहिम् ।
[3]तथानुषक्तं मुनिरीक्षमाणो गुहां विविक्षुः प्रससार मेरोः ॥५०॥

दिशो नभः[4]क्ष्मां विवरान्समुद्रान् लोकान्सपालांस्त्रिदिवं गतस्सः ।
यतो यतो धावति तत्र तत्र सुदर्शनं दुष्प्रसहं ददर्श ॥५१॥

अलब्धनाथस्स यदा कुतश्चित् [5]सन्त्रस्तचित्तोऽरणमेषमाणः ।
देवं विरिञ्चं समगाद्विधातस्त्राह्यात्मयोने ऽजिततेजसो माम् ॥५२॥

ब्रह्मोवाच

स्थानं मदीय[6] द्विज विश्वमेतत् क्रीडावसाने द्विपरार्धसंज्ञे ।
भ्रूभङ्गमात्रेण[7] च सन्दिधक्षोः कालात्मनो [8-]यस्य तिरोभविष्यति[-8] ॥५३॥

अहं भवो दक्षभृगुप्रधानाः प्रजेशभूतेशसुरेशमुख्याः ।
सर्वे वयं यन्नियमं प्रपन्ना मूर्ध्न्यर्पितं लोकहितं वहामः ॥५४॥

प्रात्याख्यातो विरिञ्चेन विष्णुचक्रोपतापितः ।
दुर्वासाश्शरणं यातश्शर्वं कैलासवासिनम् ॥५५॥

[9]श्रीशङ्कर उवाच

वयं न तात प्रभवाम [10]भूम्नि यस्मिन् परेऽन्येऽप्यजजीवकोशाः ।
भवन्ति काले न भवन्ति हीदृशाः सहस्रशो यत्र वयं भ्रमामः ॥५६॥

**श्रीध० तदिति** । निष्फलमुद्वीक्ष्य ॥४९॥

**तमिति** । अनुषक्तं पृष्टतः संसक्तम् ॥ मेरोर्गुहां विविक्षुरधावत् ॥५०, ५१॥

1 ABGJMMaT दा° 2 H V रुद्धूत 3 W °तदा 4 W क्ष्माविव° 5 ABGJMMaT स त्रस्त 6 ABGJMMaT सहवि° 7 ABGJ MMaT हि
8- -8 MMa °न पश्यति को भविष्यत् । 9 ABGJT श्रीरूद्र° 10 MMa भूम्नो

**अलब्धेति।** अरणमेषमाण शरणमिच्छत्। अजिततेजसो हरेश्चक्रात् ॥५२॥

**स्थानमिति।** एतत्सर्वं यस्य भ्रूभङ्गमात्रेण तिरोभविष्यति। कदा? क्रीडाया अवसाने। तदपि कदा? द्विपरार्धसंज्ञे काले ॥५३॥

**अहमिति।** अतो वयं सर्वे यस्य नियममाज्ञां प्रपन्ना· प्राप्तास्सन्तो लोकहितं यथा भवत्येवं तन्नियमं मूर्ध्न्यर्पितं वहाम। अतस्तद्भक्तद्रोहिणं त्वां रक्षितुं न समर्थोऽहमिति शेषः, यत्तदो र्नित्यसम्बन्धात् ॥५४, ५५॥

श्रीरुद्रोऽपि प्रत्याचष्टे वयमिति चतुर्भि·। भूम्नि महति। महत्त्वमेवाह - **यस्मिन्**[1] परे परमेश्वरे अजा ब्रह्माण· त एव जीवास्तेषां कोशा उपाधिभूता ब्रह्माण्डविग्रहा ईदृशा दृश्यमानब्रह्मण्डप्रमाणा अन्येऽपि भवन्ति नश्यन्ति च, यत्र येषु ब्रह्माण्डेषु लोकेशाभिमानिनो वयं भ्रमाम· ॥५६॥

**वीर०** ततोऽभिमुखं द्रवत् गच्छत् हरेश्चक्रं निष्फलं स्वप्रयासञ्च समुद्वीक्ष्य दुर्वासा भीत· प्राणपरीप्सया प्राणान्प्राप्तु मिच्छया जीवनेच्छयेति भाव दिक्षु दुद्रुवे पलायितवान् ॥४९॥

तं धावन्तं दुर्वाससं भगवतो रथाङ्गं चक्रमन्वधावत् पृष्ठतोऽनुसृत्य दुद्राव[2] तथा उद्धूता ऊर्ध्वं वेपमानाशिशखा यस्य सः दावाग्नि· अहिमनुधावति तद्वत्, तदा अनुषक्तं पृष्ठतस्संसक्तं चक्रमीक्षमणो मुनि दुर्वासा मेरो पर्वतस्य गुहां विविक्षु· प्रवेष्टु मिच्छु प्रससार प्रदुद्राव ॥५०॥

तदा दिशो नभोन्तरिक्षं क्ष्माविकरान् अतलादिलोकान् समुद्रान् लोकपालैस्सहितान् लोकांश्च ससारेत्यनुषङ्ग। तत स्त्रिदिवं गत· प्रदुदाव। एव यत्र यत्र मेरुगुहादिष्वधावन्मुनिर्दुर्वासा· तत्र तत्र दुष्प्रसहं दु खेनापि सोढुमशक्यं सुदर्शनं ददर्श ॥५१॥

ततस्स दुर्वासा यदा कुतश्चित् कुत्रचिदपि अलब्धो नाथो रक्षिता येन स· तदा सन्त्रस्तं भीतं चित्तं यस्य स· अरणं शरणं रक्षकमेषमाण इच्छु देवं विरिञ्च कमलासनं समगात्। तत्र गत्वा हे विधात , हे आत्मयोने। अजितस्य भगवत· तेजस श्चक्ररूपान्मां त्राहि पालय, इति विज्ञापयामासेति शेष· ॥५२॥

तदाकर्ण्य मदन्तरात्मभूतभगवत्प्रसादलब्धसृष्ट्याद्यधिकारपारमेष्ठ्य स्थान· तन्नियोज्योऽहं, तच्चक्रादनतिक्रमणीयात् पातुमसमर्थ इत्याह - **ब्रह्मस्थान** मिति। हे द्विज, एतन्मदीयं स्थानमिदं जगच्च, स्थानस्य जगदन्तर्भूतत्वेऽपि तन्नित्यत्वबुद्धि

1 ABJ omit परे 2 A B दुद्रुवे

निरासाय पृथगुक्तिः। यद्यपि तदनित्यत्वोक्त्यैव तदधिपसृष्टविश्वस्यापि भगवता संहार्यत्वं प्रतीयते इति विश्वस्य पृथक्संहार्यत्वं न वक्तव्यम्। तथाऽपि तथा विश्वं तत्संहार्यं तथैतन्मदीयं स्थानमपीति दृष्टान्तार्थमुक्तम्। तदेतत्सर्वं सन्दिधक्षोः सन्दग्धुमिच्छोः सञ्जिहीर्षोः यस्य कालशरीरकस्य भगवतो भ्रूविक्षेपमात्रेण तिरोभविष्यति लयमेष्यति। तस्य तेजसस्त्रातुमहं न प्रभुरिति शेषः। यद्वा तमेव शरणं व्रजेति शेषः। एवमुत्तरत्राऽपि। कदा सन्दिधक्षोः क्रीडावसाने जगद्व्यापाररूपक्रीडाया अवसाने, तदपि कदा द्विपरार्धसंज्ञे द्विपरार्धाख्यपरिमाणपरिच्छिन्नकालावसाने इत्यर्थः ॥५३॥

न केवलमहमेव त्वां त्रातुं प्रभुः, अपितु रुद्रादयोऽपीत्याह - अहमिति। यथाहं न प्रभुस्तथा भवादय इति दृष्टान्तार्थं पुनरहमित्युक्तम्। भवो रुद्रः दक्षभृगुप्रधानाः[1] दक्षभृगू प्रधानौ मुख्यौ येषां ते तान् विशिंषन्बहुव्रीह्यर्थभूतान्यपदार्थानाह - प्रजेशेति। प्रजेशाः सुरेशाः सुरपतय इन्द्राद्या एते मुख्या येषां ते। अत्रापि तन्नियोज्या अन्येऽप्यन्यपदार्थतया विवक्षिताः। यद्वा, दक्षभृगुप्रधाना इति तद्गुणसंविज्ञानबहुव्रीहिणा दक्षभृगुसन्तानजा अन्यपदार्थत्वेन ग्राह्याः। प्रजेशशब्देनेतरेषां सप्तानां मरीच्यदीनां सङ्ग्रहः। भूतेशशब्देन रुद्रप्रभवानां सुरेश इन्द्र एते मुख्या येषां ते, तत्सन्तानप्रभवास्तन्नियोज्याश्चेत्यर्थः। एते सर्वे वयं त्वां त्रातुं न प्रभव इत्यत्रापि शेषः तत्र हेतु माह - यस्य भगवतो नियममशेषनियमनं प्रपन्नाः प्राप्तास्सन्तो लोकहितं यथा भवत्येवं मूर्ध्न्यर्पितं तन्नियममाज्ञां वहामः कुर्मः। ५४॥

एवं विरिञ्चेन प्रत्याख्यातो भगवच्चक्रेणोपतापितश्च दुर्वासाः कैलासगिरिवासिनं शर्वं शरणं गत शर्वं त्वमविता भवेति प्रार्थितवानित्यर्थः ५५॥

एवं प्रार्थितश्शर्वस्ततो हरेश्चक्रात्[2] त्रातुमसामर्थ्यं वक्तुं चतुर्मुखप्रभृतीनां भगवन्महिमार्णवविप्रुट्त्वं तत्सृज्यत्वं तत्संहार्यत्वं तन्मायामोहितत्वेन तच्चिकीर्षितानभिज्ञत्वञ्चाह - वयमिति। हे तात! वयं न प्रभवाम भगवतश्चक्रात्[3] त्रातुम् इति शेषः। हि यस्मात् वरेण्ये अस्माभिरपि वरणीये यस्मिन् भगवित यस्मिन् ब्रह्माण्डे वयं लोकेशाभिमानिनो भ्रमामः। "क्षुद्रा रुद्रपितामहप्रभृतयः कीटास्समस्तास्सुराः" इत्युक्तरीत्या कीटवत् भ्रमामः। ईदृशा एतद्ब्रह्मण्डसदृशा अजा ब्रह्माणः त एव जीवाः तेषां कोशाः ब्रह्माण्डरूपास्सहस्रशः काले "बहु स्याम्" (तैति. उ 2-6)इत्युक्तविधसिसृक्षाकाले भवन्ति उत्पद्यन्ते, पुनः सञ्जिहीर्षाकाले न भवन्ति तस्मिन् लयं यान्ति ॥५६॥

**विज०** कृत्यां दग्ध्वा आत्मानमभिद्रवत्तच्चक्रं स्वप्रयासं स्वप्रयत्नं प्राणपरीप्सया स्वजीवनरक्षणेच्छया ॥४९॥

तं दुर्वाससं, विविक्षुः प्रवेष्टुमिच्छुः ॥५०॥

1 TW omit दक्षभृगुप्रधाना 2 AB हरि च° 3 TW °वच्च°

चक्रानुयातो दुर्वासा एतानि स्थानानि बभ्रामेत्याह - **दिश** इत्यादिना ॥ ५१ ॥

अलब्धो नाथो पालनसमर्थो येन स तथा अरणं शरणम् एषमाणः अन्वेषमाण अजिततेजसः हरेस्तेजोरूपाच्चक्रात् त्राहि रक्ष ॥५२॥

ब्रह्मणा किमवादीति तत्राह- **स्थान**मिति। द्विपरार्धसंज्ञे ममायु·पूर्तिलक्षणे हरिक्रीडावसाने आसन्नप्रलय इति यावत्। सह विश्वं चराचरलक्षणप्रपञ्चेन सहितमेतन्मदीयं स्थानं भ्रूभङ्गमात्रेण सन्दिधक्षोः सन्दग्धुमिच्छोः कालात्मनः कालरूपस्य हरे र्यद्भविष्यत्कर्म कोवा पुरुषस्तत्पश्यति? अपरोक्षी स्वीकर्तुं समर्थो न कोपीत्यन्वय·। त्वामुपलक्षीकृत्य मदादिकं सर्वं संहरिष्यतीति ज्ञातुं न शक्यत इति भाव । ५३॥

अतो मदादीनां तदनुमतमेवाऽनुकर्तुं प्रयतनं नत्वन्यदित्याशयेनाऽह - **अह** मिति। यन्नियमं यस्याऽज्ञालक्षणं प्रेरणं तस्येति पूर्वेणान्वय । अर्पितं, तेनैवेति शेष ॥५४॥

यद्यप्यनेन शङ्करोऽपि प्रत्याख्यातस्तथाऽपि मन्दजनशङ्कानिरासाय दुर्वासस· शङ्करशरणप्राप्तिमाह - **प्रत्याख्यात** इति। "सर्वश्शर्वश्शिव स्थाणु , शर्व संरोधनाद्धरि " (भारत. 13-135-17) इत्यतो विष्णुशङ्कानिरासायाह - **कैलासेति** ॥५५॥

शङ्करोऽपि स्वशक्तिमेव वक्तीत्याह - **वय** इति। हे तात, वयं न प्रभवाम त्वां रक्षितुं न समर्था· स्याम आद्यन्तवत्त्वा दित्याह भूम्न इति ईदृशा मादृशा भूम्न· पूर्णानन्दाद्धरे सृष्टिकाले भवन्ति, सँहारकाले न भवन्ति हि यस्मात्तस्मात् यदा चेतनस्य भगवदधीनत्वं स्पष्ट तदा किं वक्तव्यमचेतनस्य? इत्याशयेनाह - यस्मिन्निति। यत्र येषु अजजीवकोशेषु वयं भ्रमाम ते अन्ये अचेतना अपि सहस्रशो जीवकोशा । अजो ब्रह्मा स एव जीव· तस्य कोशा· शरीरस्थानीयाः ब्रह्माण्डकोटयो यस्मिन्परे सन्ति स ईशान त्वदापद परिहर्ता स्यात्, न वयमिति वाक्यशेष ॥५६॥

**अहं सनत्कुमारश्च नारदो भगवानजः।**
**कपिलोऽपान्तरतमो देवलो धर्म आसुरिः ॥५७॥**
**मरीचिप्रमुखाश्चाऽन्ये सिद्धेशाः परदर्शिनः**[1]
**विदाम न वयं सर्वे यन्मायां माययाऽऽवृताः**[2] **॥५८॥**

1 ABGJT दर्शना 2 'यावृता in veera raghava commentary

तस्य विश्वेश्वरस्येदं शस्त्रं दुर्विषहं हि नः।
तमेव शरणं याहि हरिस्ते शं विधास्यति ॥५९॥

ततो निराशो दुर्वासाः पदं भगवतो ययौ।
विकुण्ठाख्यं यदध्यास्ते श्रीनिवासः श्रिया सह ॥६०॥

[2] स दह्यमानोऽजितशस्त्रवह्निना तत्पादमूले पतितस्सवेपथुः।
आहाऽच्युतानन्त सदीप्सित प्रभो कृतागसं [3] मामव विश्वभावन ॥६१॥

अजानता ते [4] महिमानुभावं कृतं मयाऽघं भवतः प्रियाणाम्।
विधेहि तस्यापाा चितिं विधातर्मुच्येत यन्नाम्न्युदिते नारकोऽपि ॥६२॥

श्रीभगवानुवाच

अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विज।
साधुभिर्ग्रस्तहृदयो भक्तैर्भक्तजनप्रियः ॥६३॥

नाऽहमात्मानमाशासे मद्भक्तैस्साधुभिर्विना।
श्रियश्चात्यन्तिकीं ब्रह्मन् येषां गतिरहं परा ॥६४॥

**श्रीधर०** ननु सर्वज्ञस्य तव भ्रम· कुत·? तत्राह- **अहमिति** ॥६७॥

**मरीचीति**। परदर्शनाः सर्वज्ञा अपि यस्य मायां न विद्म· ॥५८-६०)

**स इति**। हे सतामीप्सित! मा मां अव पाहि ॥६१॥

अपराधं निवेदयन्प्रार्थयते - **अजानतेति**। अघं दुःखम्। अपचितिं [1]निष्कृतिम्। मद्भक्तद्रोहे निष्कृतिं न पश्यामीति चेत्तत्राह- यस्या तव नाम्नि कीर्तिते नरकस्थोऽपि मुच्यते तस्य तव किमशक्यमिति भावः॥ ६२,६३॥

**नेति**। न आशासे न स्पृहयामि ॥६४॥

**वीर०** अहं शर्व· अस्मदादयः सर्वे तथान्ये पारदर्शिनः सर्वज्ञाः सिद्धेशश्च यस्य भगवतो मायां सङ्कल्पं चिकीर्षितमिति यावत् न विदामः न जानीमः तत्र हेतुः, मायया वृताः ॥५८॥

---

1 ABGJTW वै॰ 2 ABGJMMaT सन्द॰ 3 ABGJT omit माऽऽव 4 ABGJMMaT परमा॰ 5 याऽऽवृका auording to text

तस्यैवंविधमहिमशालिनो विश्वेश्वरस्य भगवत इदं शस्त्रंऽनोस्माकमपि दुर्विषहं वयं तत्सोढुमेव न प्रभव· कुतस्तनिग्रह इति भाव.। अतस्तमेव अचिन्त्यविविधविचित्रानन्तमहिमशालिनं शरणागतरक्षादीक्षितं भगवन्तं शारणं याहि। स हरिः शरणागतार्तिहरो भगवांस्ते श सुखं विधास्यति करिष्यति ॥५९॥

इत्युक्तो दुर्वासा निराशस्सन् तत· कैलासाद्भगवतो वैकुण्ठाख्यं पदमण्डान्तर्गतं श्रीविष्णुलोकं ययौ। पदं विशिनाष्टि यत्पदं स्थानं श्रिया लक्ष्म्या सह श्रीनिवास अध्यास्ते। श्रीनिवास इत्यनेन भगवतो लक्ष्म्यनपायित्वमुक्तम् । श्रिया सह अध्यास्त इत्यनेन पुरुषकारभूतया लक्ष्म्या सह तस्मिन् लोकेऽवस्थानमुक्तम्। यद्यपि श्रीनिवासोऽध्यास्त इत्येतावतैवाऽलं श्रीशब्दप्रवृत्तिनिमित्तस्य पुरुषकारत्वस्य निवासशब्दाभिप्रेतस्य तदनपायित्वस्य च लाभात्। तथाऽपि श्रीनिवास इत्येतावत्युक्ते रामकृष्णाद्यवतारेषु वैदह्यादिविवाहात्प्राक् अमूर्तिमत्या, इतरैरलक्ष्यमाणया वा लक्ष्म्या सहावस्थानेन अनपायित्ववदत्रापि तदुपपत्तेस्तत्र साक्षात्परिदृश्यमानपुरुषकार सान्निध्याभावशङ्कानिमित्तशरणवरण दुश्शकत्वशङ्गापनोदनार्थं श्रिया सहाऽध्यास्त इत्युक्तम्। ताव त्युक्ते कादाचित्कसाहित्यशङ्कानिमित्तशरणवरणसमयासान्निध्यशङ्कानिमित्ततदुश्शकत्वशङ्का स्यादिति तदपनोदनाय श्रीनिवास इत्युक्तम ॥६०॥

एव शर्वेणाऽभिहितोऽजितस्य भगवतश्शस्त्रवह्निना चक्रज्वालया सन्दह्यमानो दुर्वासास्तत्र गत्वाऽजितस्य पादयो र्मूले पतत भयात्प्रचिलद्गात्र आह - किम् ? अच्युत! आश्रितान् न च्यावयतीति तथाभूत! हे हे अनन्त! अपार महिमशालिन्! सदीप्सित! सतां भक्तानां निरतिशयेष्ट! हे प्रभो! आश्रितार्तिहरणसमर्थ! हे विश्वभावन ! विश्वं शरणागतवर्गम् अपराधानवेक्षन भावयति सुखयतीति तथाभूत यद्वा विश्वं चिदचिदात्मकं भावयति उत्पादयति, जगत्कारणभूतेत्यर्थ·। इत्येवं समाश्रयणीयत्वोपयुक्तगुणविशिष्टत्वेन सम्बोध्य स्वकार्पण्यं निवेदयन् स्वरक्षां प्रार्थयते। कृतमागोऽपराध एव न तु रक्षणोपयुक्त गुणलेशो येन तं मामेवंविधार्तियुक्तम् अव रक्ष। 'अव रक्षणे' इति धातो·, "लोट् च"इति प्रार्थनायां लोट् ॥६१॥

कृतागसमित्युक्तं, किं तत्त्वया कृतमाग·? इत्यपेक्षायां तद्विज्ञापयन्नेवंविधं कृतागसमपि मां त्रातुं समर्थस्त्वमिति सूचयितुं तन्नाम्न प्रभावमाह - **अजानतेति**। ते तव परमं निरतिशयमनुभावं प्रभावमजानता मया भवत प्रियाणामघं कृतं, त्वद्भक्तविषये अपराध कृत इत्यर्थ । हे विधात तस्य अघस्य अपचितिं[1] निष्कृतिं विधेहि कुरु, अपराधं सोढ्वा पाहीत्यर्थ·। युक्तश्च तवैतत् यतो यस्य तव नाम्न्यपि उदिते उच्चरितमात्रेऽपि नारकोऽपि मुच्येत नरकप्राप्तिनिमित्तानां पापानां श्रुतिस्मृत्याद्यात्मक त्वदाज्ञातिलङ्घनरूपत्वेन त्वदपराधरूपत्वात् तत्कर्तुर्विमोचने त्वन्नामोच्चारणमेव समर्थं दृष्टम्। अतः साक्षात्तव सामर्थ्यं कैमुतिकन्यायसिद्धमिति भाव ॥६२॥

---

1 H V omit निष्कृतिं

एवं प्राणरक्षार्थं शरणङ्गतं द्विजमवलोक्याह भगवान् - अहमित्यादिना यावदध्यायसमाप्ति। तत्र मुक्तं "मुच्येत यन्नाम्न्युदितेऽपि नारकः" इति। इदन्तु दुरुक्तं भवत· प्रियाणामघं मय: कृतम् अतस्तस्यापचितिं विधेहीति साक्षान्मद्विषया पराधस्य केनचिदानुकूल्येन मया सोढव्यत्वेऽपि मद्भक्तविषयापराधो मया सोढ· क्वचिद्विद्वन्मन्येन "एव मुक्तिफलानियमस्तदवस्था विधृतेस्तदवस्थावधृतेः" ब्र सू. (3-4-52) इत्यधिकरणन्यायानाभिज्ञेन दृष्ट· श्रुतो वोति अभिप्रयन् भक्तविषये स्वस्य पारतन्त्र्यं पारतन्त्र्यहेतून् तन्निमित्तं तद्विषयापराधासह्यत्वश्चाह- उपायमित्यत प्राक्तनेन ग्रन्थेन। हे द्विज, अस्वतन्त्र इव राजभृत्य इव अहं भक्तपराधीन मद्भक्तपरतन्त्रोऽह मित्यर्थ·। ननु राजभृत्यादे कर्मवश्यत्वात्, जीवत्वात्, हेयार्हत्वात् तन्निमित्तं कादाचित्कं स्वस्वामिराजादपारतन्त्र्यं युक्तं तव तु निरस्तनिखिलदोषस्य समस्तकल्याणगुणाकरस्य अनन्याधिपते स्वभृत्यपारतन्त्र्यं हेयतरमनुचितमिति आशङ्काया परिहारं समाश्रितवात्साल्यविवशस्य भक्तपारतन्त्र्यं न हेयत्वावहम्, अपि तु कल्याणगुण एव, समाश्रयणीयत्वोपयुक्त निरतिशयवात्सल्यगुणप्रपञ्चरूपत्वादित्यभिप्रयन् तावद्भक्तपारतन्त्र्यहेतून् वक्तुमात्मानं भक्तांश्च विशिनष्टि - साधुभि रिति। साध्नुवन्ति सर्वे करणै मह्यमुपकुर्वन्तीति साधवस्तैर्भक्त ग्रस्तं स्ववशीकृतं हृदय मनो यस्य सोऽहं लोके ह्यात्मचित्तवृत्त्यनुसारित्वात्पुरुषस्य मच्चित्तस्य च साधुभिर्वशीकृतत्वात् साधुचित्तवृत्त्यनुव्याप्रियमाणात्म-चित्तवृत्त्यनुसारितद्विषयव्यापरवानहमित्यभिप्राय.। ननु, नहि लोकेऽन्यचित्तवृत्त्यनुसारिस्वचित्तवृत्ति· पुमान् कश्चिद्दृष्ट इत्याशङ्कायां निरतिशयप्रीतिविषयस्स श्रीपतिस्तथैव लोके दृष्ट इति वक्ष्यमाणदृष्टन्तमभिप्रेत्य स्वभक्तयोर्मिथो निरतिशयप्रीतिविषयत्वं वदन्नात्मानं विशिनष्टि - भक्तजनप्रिय इति। अत्र तन्त्रेण बहुव्रीहिषष्ठीतत्पुरुषौ द्वावपि विवक्षितौ। भक्तजना प्रिया यस्य, भक्तजनस्य प्रियश्चेति च। तत्राद्य भक्तजनस्य निरतिशयस्वप्रीति-विषयत्वमुक्तम्, द्वितीयेन स्वस्य निरतिशयभक्तजनप्रितिविषयत्वं निरतिशयप्रीतिविषयत्वा- द्भक्तजनस्य तदधीनं मद्धृदयं जातमिति भाव ॥६३॥

किञ्च लोक स्वचित्तं निरतिशयप्रियवस्त्वधीनं कुर्वन् न तूष्णीमास्ते, किन्तु तद्विश्लेषं देहतदनुबन्ध्यादिपरित्यागेनापि परिहरन् दृष्ट तथाऽहमपीत्याह - **नेति**। हे ब्रह्मन्! अहं भक्तजनप्रियोऽहं साधुभिर्मद्भक्तैर्विना आत्मानमिमं चतुर्भुजादिविशिष्टं दिव्यविग्रहमात्यन्तिकीं श्रियं निरतिशयां विभूतिं, यद्वा आत्यन्तिकीमत्यन्तमाश्रिता मनन्यार्हशेषभूतां लक्ष्मीञ्च नाऽऽशासे न स्पृहयामि। यद्यपि लोके प्रियतमवस्तुविश्लेषनिमित्तदेहतदनुबन्ध्यादि त्यागः क्वचिद्दृष्टचरः, परमात्मनि तु भक्तजनविश्लेष तन्निमित्त शरीरादित्यागश्च न दृष्ट , तथाऽपि सम्भावनामात्राभिप्रायेण भगवतैवमुक्तमिति द्रष्टव्यम्। तथा चोक्तं भगवता दाशरथिना - "अप्यहं जीवितं जह्यां त्वां वा सीते सलक्ष्मणाम्। नतु प्रतिज्ञां संश्रुत्य ब्राह्मणोभ्यो विशेषत" (रामा 3-10-18) इति, "मित्रभावेन सम्प्राप्तं न त्यजेयं कथञ्चन" (रामा 6-18-3 )इति च। यद्यपि लक्ष्म्या अपि भक्तवत्प्रीतिविषयत्वात् श्रियमपि नाशासे इत्युक्ति रयुक्ता, तथाऽपि लक्ष्म्यपेक्षयाऽपि भक्तानां स्वनिरतिशयप्रीतिविषयत्वमभिप्रेत्य भगवतैवमुक्तमिति अवगन्तव्यम्। साधूनामत्यर्थप्रियत्वहेतुं वदन् तान्विशिनष्टि - येषां साधूनामहमहमेव अब्भक्ष इतिवत् सावधारणपरा उत्कृष्टा गति· उज्जीवनोपाय ।

उज्जीवनोपायो हि प्रियतमः अतो निरतिशयप्रियोज्जीवनोपायत्वेन मामाऽऽश्रितत्वा - त्तेऽपि ममनिरातिशयप्रिया इति युक्तमेवैतदिति भावः ॥६४॥

**विज०** अन्यतोऽप्यवनाशां निवारयति - **अहमिति**। अहं सनत्कुमारादयः इति सर्वे वयं यस्य हरेर्मायामिच्छां किंविषयामिति न विदाम इत्यन्वयः ॥५७, ५८॥

दुर्विषहं सोढुमशक्यम्, तर्ह्यहं किं करोमि इति तत्राह तमेवेति ॥५९, ६०॥

अव रक्ष; विश्वभावन सर्ववशीकरणसमर्थ! ॥६१॥

तस्याघस्याऽपचितिं प्रायश्चित्तम् अघपरिहारसामर्थ्यं तवैवेत्याह मुच्येतेति। नारको नरकस्थो यन्नाम्न्युदिते अघा न्मुच्येतेत्यन्वयः ॥६२॥

आत्मरक्षार्थं दुर्वाससा प्रार्थितो भगवान् लोकसङ्ग्रहार्थमात्ममायां प्रकटयति - **अहमिति**। अतोऽ स्वतन्त्र इव, नत्वस्वतन्त्रः स्वतन्त्रस्यास्वातन्त्र्यवचनं कथं सङ्गच्छते? इति तत्राऽऽह साधुभिरिति ॥६३॥

ग्रस्तहृदयत्वं नाम किमित्यतस्तद्विवृणोति - **नाऽहमिति**। साधुभिर्मद्भक्तैर्विनाऽहमात्मनं स्वरूपं नाशासे नेच्छामि। तदप्रिये प्राप्ते मज्जीवनेन किं प्रयोजनमितिकृत्वेति शेषः। यदा स्वात्मानमपि नाशासे तदाऽनन्यशरणां श्रियं नाशास इति किं वक्तव्यमित्याह - श्रियश्चेति। भक्ताश्चापीदृशा इत्याह - येषामिति ॥६४॥

**ये दारागारपुत्राप्तान्[1] प्राणान् वित्तमिमं[2] परम्।**
**हित्वा मां शरणं याताः कथंतांस्त्यक्तुमुत्सहे ॥६५॥**

**मयि निर्बद्धहृदयाः साधवः समदर्शिनः[3]।**
**[4]वशीकुर्वन्ति मां भक्त्या यत्स्त्रियः सत्पतिं यथा ॥६६॥**

**मत्सेवया प्रतीतन्ते[5] सालोक्यादिचतुष्टयम्।**
**नेच्छन्ति सेवया पूर्णाः कुतोऽन्यत्कालविप्लुतम्[6] ॥६७॥**

**साधवो हृदयं मह्यं साधूनां हृदयन्त्वहम्।**
**मदन्यं[7] ते न जानन्ति नाऽहं तेभ्यो मनागपि ॥६८॥**

---

1 MMa °दीन् 2 MMa °मिद 3 ABGJT °दर्शना 4 B W वशे 5 ABGJT प्रतीतश्च, MMa प्रदिष्टश्च 6 ABGJT °द्रुतम् 7 ABGJ MMaT °दन्यत्

उपाय कथयिष्यामि तव विप्र शृणुष्व तत्[1]।
अयं[2] ह्यात्माभिचारस्ते[3] यतस्तं यातु वै भवान्।
साधुषु प्रहितं तेजः प्रहर्तुः कुरुतेऽशिवम् ॥६९॥

तपो विद्या च विप्राणां निःश्रेयसकरे उभे।
त एव दुर्विनीतस्य कल्पेते कर्तुरन्यथा॥७०॥

ब्रह्मंस्तद्गच्छ भद्रं ते नाभागतनयं नृपम्।
क्षमापय महाभागं[4] ततश्शान्तिर्भविष्यति ॥७१॥

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहिताया
नवमस्कन्धे चतुर्थोऽध्याय ॥४॥

**श्रीध० य** इति। इमं परञ्च लोकं हित्वा ॥६५, ६६॥

**मदिति**। प्रतीतं प्राप्तमपि ॥६७,६८॥

**उपायमिति**। आत्मनस्तवैवाऽभिचारो हिसा यतोऽभूत्तमेव भवान्[5] यातु शरणं[6] गच्छतु[6] अशिवमनर्थम् ॥६९॥

तपोविद्यासम्पन्नस्य मम कथमनर्थ· समजनीति मा स्म[7] विस्मयं कार्षीरित्याह - तप इति ॥७०, ७१॥

इति श्रीमद्भागवते महापुराणे
श्रीश्रीधरस्वामिविरचिताया भावार्थदीपिकाया
व्यख्यायां नवमस्कन्धे चतुर्थोऽध्याय ॥४॥

**वीर०** 'येषां गतिरहं परे' ति स्वस्यैव तत्परगतित्वमुक्तं व्यञ्जयन् स्वस्य तन्निमित्तां तत्यागानर्हतामाह - **य** इति ये साधव· प्राणान् प्राणयन्ति जीवयन्ति इति प्राणास्तान् जीवनहेतून् प्राणान् तदनुबन्धिदारादींश्च हित्वा संसृतिहेतव एवैतेन तु उज्जीवनहेतव इति विमर्शनेनोज्जीवनोपायताबुद्धिं परित्यज्य मां शरणमुज्जीवनोपायं गता तत्वेन अध्यवसितवन्त इत्यर्थ । अतस्तान् कथं त्यक्तुमुत्सहे शक्नोमि? न हि कृतज्ञस्य विश्वस्तत्याग उचित इति भाव । यद्यपि भक्तजनत्यागाय न दुर्वासा· शरणं गतः, अपितु स्वप्राणरक्षायै। अतस्तं प्रति 'कथं तांस्त्यक्तुमुत्सहे' इत्युक्तिरसङ्गता, तथाऽपि निरतिशयप्रियवस्तुविश्लेषपरिहाराय देहतदनुबन्ध्यादिपरित्यागस्य प्राक्, प्रस्तुतत्वात् देहादिपरित्यागेनाऽपि अविनाभाव्यान् साधून् कथं विनाभूय वर्तेयमित्येतदभिप्रायेण

---

1--1 H V omit 2 H V अतो 3 W 'त्माप' 4 H M Ma V W भाग 5 ABJ omit भवान् 6--6 ABJ omit 7 H V omit स्म

कथं तांस्त्यक्तुमुत्सह इत्युक्तम्। यद्वा, भक्तजनप्रतिपक्षत्वद्रक्षणे कृते आश्रितविपक्षपक्षपाती भगवानिति बुद्ध्या मां त्यजेयुर्भक्ताः। अतस्तान् सर्वभावेन भजत· कथं त्यक्तुमुत्सह इत्यभिप्रायेणोक्तम् ॥६५॥

एव मात्मानं विशिष्य, अथ भक्तान् विशिनाष्टि - **मयीति**। मयि निरतिशयप्रीतिविषये निर्बद्धमनन्यविषयत्वेन स्थिरीकृतं हृदयं यैस्ते, अत एव समदर्शिन· सर्वस्य मदात्मकत्वदर्शिनः साधवः भक्त्या परस्परप्रीत्यावहया स्वयमपि प्रीतिरूपया अनन्यप्रयोजनया भक्त्या मां वशे कुर्वन्ति यथा सत्स्त्रियः पतिव्रता· सत्पतिं परदारपराङ्मुखं अनन्यार्हशेषत्ववत् स्त्रीपराङ्मुखं वा वशे कुर्वन्ति तद्वत् ॥६६॥

अनन्यप्रयोजनभक्तिनिष्ठत्वमेव व्यनक्ति - **मत्सेवयेति**। ते साधवः मत्सेवया मद्भक्ता· प्रतीतं सालोक्यमादिर्यस्य तत् चतुष्टयं चतुर्विधं सालोक्य सामीप्य सायुज्य सार्ष्टिरूपां मुक्तिमेव नेच्छन्ति कुतोऽन्यत् कालेन विप्लवो नाशो यस्य तदिन्द्राद्यैश्वर्य मिच्छेयुः। तत्र हेतु· सेवया मच्छेषतैकरसानन्दानुभवरुपया भक्त्या पूर्णाः निर्वृतान्त·करणाः ॥६७॥

किं बहुना? साधवो मह्यं मम हृदयं मद्धृदयानुवर्तिहृदयास्साधव इत्यर्थः। यथाऽहं साधूनां हृदयं साधुहृदयानुवर्ति हृदयोऽहम्। ते साधव मत् मत्त अन्यत्प्रियं वस्तु न जानन्ति, तथाऽहमपि तेभ्य· साधुभ्योऽन्यत् मनागपि ईषदपि प्रियं न जानामि। एवं परस्परहृदयानुवर्तिहृदयत्वात् परस्परप्रियत्वाच्च भक्तपारतन्त्र्यं मम युक्तमिति न तद्विषयापराधो मया सोढुं शक्य इति भाव ॥६८॥

एवं स्वभक्तविषयापराधस्य स्वेनाऽसह्यत्वं सहेतुकमुपपाद्य स्वसन्निधौ तत्कृतप्राणरक्षणार्थशरणागतैर्वैफल्यपरिहाराय उपायमाह - **उपायमिति**। हे विप्र, तव प्राणरक्षणोपायं तत्साधनं कथयिष्यामि तच्छृणु। को ऽसै? तत्राह- ते तव अय मात्मापचार स्वयंकृतापराध स यतो यद्विषये जातस्तमेवाऽम्बरीषम्प्रति भवान्गच्छत्विति। आत्माभिचार इति पाठान्तरम्। तत्राऽन्यहिंसार्थं कृतोऽयमुद्यम आत्मन एवाऽभिचार स्वहिंसार्थं मेवाऽभूदित्यर्थ·। तथा हि लोके साधुषु मद्भक्तेषु प्रहितं प्रयुक्तं तेज· सामथ्यं कर्तु· प्रहर्तुरेव अशिवमनर्थं कुरुते ॥६९॥

तपोविद्यादिसम्पन्नस्य मम कथमनर्थस्समजनि? इति मा विस्मयं कार्षीरित्याह - **तप** इति। तपो विद्या च एते उभे विप्राणां विनीतानां नि·श्रेयसकरे निरतिशयपुरुषार्थसाधने दुर्विनीतस्य कर्तु· निरपराधेष्वपराधकर्तुर्विप्रस्य तु ते एव तपोविद्ये एवाऽन्यथा कल्पेते अनर्थाय भवेतामित्यर्थ ॥७०॥

तत्तस्मात् हे ब्रह्मन्! नाभागतनयमम्बरीषं प्रत्येव गच्छ, तमेव महाभागमपराधानामविज्ञातारं क्षमापय, ततः शान्तिः भद्रं तव भविष्यतीति ॥७१॥

इति श्रीमद्भागवते नवमस्कन्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां चतुर्थोऽध्याय· ॥४॥

**विज०** इदं भूस्थानम्, परं स्वर्गादिकम् ॥६५॥

तदत्यागे भक्त्या वशीकरणमेव कारणं नाऽन्यदित्याह - **मयीति** ॥६६॥

इदश्चात्यागे कारणमित्याह - **मत्सेवयेति** ॥६७॥

इतोऽपि मदन्यापेक्षा येषां नाऽस्तीत्याशयेनाऽह - **साधव** इति। मह्यं मम हृदयं प्रियं, तुशब्दो हेतौ। साधवो मम हृदयं अहं साधूनां हृदयमिति यस्मात्ते मदन्यं प्रियं न जानन्ति। अहमपि तेभ्यस्साधुभ्यो ममागत्यल्पमपि प्रियमन्यन्न जानामी त्यन्वय ॥६८॥

प्रकृते किमनेनायातमिति तत्राह-**अय** मिति। आत्मना त्वया कृतोऽभिचार कृत्याप्रयोग यत यस्मै तस्मै प्रयुक्त मात्मानं कथं बाधते ? इति तत्राह- साधुष्विति। प्रहितं प्रयुक्तं क्षुद्रोपलक्षणं तेजोऽर्चि । "[1]तेजो बले प्रभावेऽन्ने ज्योतिष्यर्चिषि रेतसि" (वै.ज. को. 6-3-14) इत्यभिधानम्। प्रहर्तु प्रयोक्तुरपि भयं कुरुते ॥६९॥

विनयशून्यस्य तव विद्यातपसी अनर्थकरे एवाऽभूतामिति भावेनाह- **तप** इति। अन्यथा अनर्थकरे ॥७०,७१॥

इति श्रीमद्भागवते महापुराणे पारमहस्यां संहिताया
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
नवमस्कन्धे चतुर्थोऽध्याय ॥४॥

# पञ्चमोऽध्यायः

## श्रीशुक उवाच

[1]एवं भगवताऽऽदिष्टो दुर्वासाश्चक्रतापितः ।
अम्बरीषमुपा[2]गम्य तत्पादौ दुःखितोऽग्रहीत् ।।१।।

तस्य[3] तद्व्यसनं वीक्ष्य पादस्पर्शविलज्जितः ।
[4]अस्तौषीत्तद्ध[5]रेश्चक्रं कृपया पीडितो भृशम् ।।२।।

## अम्बरीष उवाच

त्वमग्निर्भगवान् सूर्यस्त्वं सोमो ज्योतिषां पतिः ।
त्वमापस्त्वं क्षितिर्व्योम वायुर्मात्रेन्द्रियाणि च ।।३।।

सुदर्शन नमस्तुभ्यं सहस्राराऽच्युतप्रिय !
सर्वास्त्रघातिन् विप्राय स्वस्ति भू[6]या इडस्पते ।।४।।

त्वं धर्मस्त्वं[7] धृ[8]तिस्सत्यं त्वं यज्ञोऽखिलयज्ञभुक् ।
त्वं लोकपा[9]लस्सर्वा[10]त्मा त्वं तेजः पौरुषं परम् ।।५।।

नमस्सुनाभाखिलधर्मसेतवे ह्य[11]धर्मशीलासुरधूमकेतवे ।
त्रैलोक्यगोपाय विशुद्धवर्चसे मनोजवायाऽद्भुतकर्मणे गृ[12]णे ।।६।।

त्वत्तेजसा धर्ममयेन संहृतं तमः प्रकाशश्च दृ[13]शो महात्मनाम् ।
दुरत्ययस्ते महिमा गिरां पते त्वद्रूपमेतत्सदसत्परा[14]वरम् ।।७।।

यदा विसृष्टस्त्वमनञ्जनेन वै बलं प्रवि[15]श्योर्जितदैत्यदानवम् ।
बाहूदरोर्वङ्घ्रिशिरोधराणि वृक्णन्नजस्रं प्रधने विराजसे ।।८।।

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

पञ्चमे विष्णुचक्रं तु प्रसाद्य प्राणसङ्कटात् । दुर्वासा रक्षितस्तेन त[16]था तद्वृत्तमीर्यते ।।

---

1 TW इत्थ 2 ABGJMMa °वृत्य 3 ABGHJV सोद्यमन 4 ABGJMMa अस्तावी° 5 ABGJMMa °रस्त्र 6 MMa °यादिड° 7 ABGJ ° मृत स° 8 W °र्नित्या 9 HV °ला 10 W °त्मन् 11 MMa अ° 12 MMa °स्तुते 13 ABGJ °धृतो 14 HV °त्परम् 15 ABGJ °ष्टोऽजित , HV °श्याऽजित 16 HV यथा

**तस्येति**। स उद्यमनमिति[1] छेदः। सुलोप· पादपूरणार्थ· ॥१,२॥

**त्वमिति**। ज्योतिषां नक्षत्राणां पतिः सोमस्त्वम्। मात्राणीन्द्रियाणि च। त्वच्छत्क्येवाऽग्न्यादय स्वं स्वं कार्यं कुर्वन्तीत्यर्थः ॥३॥

**सुदर्शन** इति। सहस्रमरा यस्य, हे सहस्रार! स्वस्ति शरणं भूयाः। इडस्पते! पृथ्वीपते! ॥४॥

ब्राह्मणरक्षणं तव युक्तमेवेत्याह - **त्वं धर्म** इति। न च तवेयं स्तुतिरित्याह[2] - पौरुषं पुरुषस्येश्वरस्य परं तेजः सामर्थ्यं त्वम्। अयं भावः - "स ऐक्षत" (बृह· उ· 1-2-5) इत्यादि श्रुतिप्रसिद्धं भगवतश्शोभनं दर्शनं सुदर्शनं[3] तत एव च सर्वं जातम्, अतस्त्वमेव सर्वात्मेति ॥५॥

**नम इति**। हे सुनाभ! अद्भुतकर्माणं त्वां क· स्तोतुं समर्थ·! अतस्तुभ्यं केवलं नमो गृणे इत्यन्वय·। अद्भुत - कर्मत्वमेवाऽऽह। अखिलानां धर्माणां सेतवे मर्यादारूपाय। अत एव अधर्मशीलानामसुराणां धूमकेतवे दाहकाय त्रैलोक्यं गोपायतीति तथा। विशुद्धमत्युज्ज्वलं वर्चस्तेजो यस्य तस्मै ॥६॥

तदेव प्रपञ्चयति **त्वत्तेजसेति** द्वाभ्याम्। सूर्यादीनां प्रकाशश्च त्वयैव रूप्यते प्रकाश्यत इति त्वद्रूपम् ॥७॥

हे अजित! अनञ्जनेन श्रीहरिणा यदा विसृष्टस्त्वं तदा दैत्यदानवानां बलं[4] प्रविश्य तेषां बाह्वादीन्भिन्दन्विराजसे [5]प्रविष्ट ऊर्जितेति[5]। पाठान्तरे ऊर्जिता दैत्यदानवा यस्मिन् तद्बलम्[6] प्रविष्टस्सन् इत्यर्थ[6]। पूर्वपदेन सन्धिरार्ष ॥८॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

इत्थं भगवतोपदिष्टोपायश्चक्रतापितो दुर्वासा अम्बरीषमुपेत्य दु खितस्तस्याऽम्बरीषस्य पादावग्रहीत् ॥१॥

तस्य दुर्वाससस्तथाविधं व्यसनं समीक्ष्य पादस्पर्शविलज्जितोऽम्बरीष कृपया नितरां तापित तत्[7] द्विजस्य पृष्ठतोऽनुषक्तं हरेश्चक्रमस्तौषोत्तुष्टाव ॥२॥

स्तुतिमेवाऽऽह-**त्व मग्निरि**त्यादिना, स त्वमित्यत प्राक्तनेन। तावत्सुदर्शनं प्रसादयितुं सर्वतेज कारणभूतस्य सर्वात्मकस्य तव तेजसोऽयं द्विज त्वदात्मा विषयो न भवतीति सूचनाय च सर्वतेज कारणत्वेन सर्वात्मकत्वेन च स्तौति- त्वमग्निरिति। यद्यपि "ऐतदात्म्यमिदं सर्वं, सर्वं खल्विदं ब्रह्म" (छान्दो. उ. 6-8-7) इत्यादिभि "न तत्र सूर्यो भाति न चन्द्रतारकम्" (कठ.उ.5-15) इत्यादिभिश्च ब्रह्मण एव सर्वात्मकत्वं सर्वतेजसामाच्छादकत्वं, सर्वतेज कारणत्वं सर्वतेजसामनुग्राहकत्व - मित्यादयो धर्मा श्रुता। न तु ब्रह्मनियाम्यस्य सुदर्शनस्य क्वाऽपि श्रुता·, तथाऽपि तस्मिन् "शास्त्रदृष्ट्या तूपदेशो वामदेववत् (ब्र सू 1-1-31) इति शारीरकन्यायेन[8], "अहमेवाऽऽसमहमेव वर्तामि भविष्यामि च" "तद्धैतत्पश्यन्नृषिर्वामदेव प्रतिपेदे अहं मनुरभवं सूर्यश्चाऽहं कक्षीवानृषिरस्मि विप्र" (बृह उ 1-4-10) इत्यादौ ब्रह्मात्मकत्वेन ब्रह्मविशेष्यकत्वात् विशेषणबुद्धिशब्दादीनां

---

1 HV °ममिति 2 ABJ add अति 3 HV omit सुदर्शन 4 ABJ प्रविष्टस्सन् 5--5 ABJ omit 6--6 ABJ omit 7 TW omit तत् 8 TW नयेन

विशेष्यपर्यन्तस्याऽऽकृतिनयसिद्धत्वात् विशेष्यपर्यन्तसाक्षात्कारनिमित्ततत्तादात्म्यव्यवहारवत् ब्रह्मविशेषण भूतसुदर्शनविषयबुद्धिशब्दानां ब्रह्मपर्यन्तनिमित्ततत्तादात्म्यव्यपदेशाद्वा सौदर्शनस्य पुरुषस्य परमात्माऽभिन्नत्वाद्वा तस्य सर्वात्म कत्वदिभिर्धर्मैः प्रवृत्तेयं स्तुतिरित्यदोषः। त्वमेवाग्न्यादितेजसामनुग्राहकस्तत्कारणभूतश्चेत्यर्थः। ज्योतिषां नक्षत्राणां पतिर्यः सोमश्चन्द्रः स त्वमेवेत्यर्थः[1]। अप्पृथिव्याकाशवायुगन्धादितन्मात्रोभयेन्द्रियात्मा त्वमेवेत्यर्थः। त्वमग्निरिति तेजआत्मकत्वं पूर्वमुक्तमिति अबादिभिर्न तस्य सहपाठः ॥३॥

हे सुदर्शन! सहस्रारेत्यसाधारणनामभ्यां सम्बोधनम्, हे अच्युतप्रिय! भक्तानामिष्टमेवाऽच्युतस्येष्टं, तदिष्टमेव तवाऽपि प्रियम् अतो मदिष्टद्विजप्राणरक्षणं तवाऽपीष्टमेवेति, प्रसन्नो भवेति अच्युतप्रियेति सम्बोधनाभिप्रायः। हे सर्वारिघातिन्! न तु शरणागतघातिन्नित्यभिप्रायः। हे इडस्पते! पृथिवीपते! हे जगत्पालक! जगत्पालकस्य तव शरणागतद्विजरक्षणं युक्तमेवेति भावः। विप्राय स्वस्ति भूयाः मङ्गलरूपो भव प्रसन्नो भवेत्यर्थः ॥४॥

किञ्च सर्वधर्मरक्षकस्य तव शरणागतद्विजरक्षणं युक्तमेवेति सूचयितुं धर्मादिनिर्वाहकत्वेन तदात्मकतया स्तौति त्वं **धर्म** इति। धृतिर्धैर्यं नित्या धृतिस्त्वमेव यज्ञो यज्ञनिर्वाहको यज्ञाराध्यश्च त्वमेव। हे सर्वात्मन्। पौरुषं परमपुरुषसम्बन्धितेज स्त्वमेव। पौरुषं परमपुरुषसम्बन्धि यत् शत्रुसञ्जिहीर्षात्मकसङ्कल्परूपमीक्षणापरपर्यायं सामर्थ्यन्त्वमेवेत्यर्थः। तथा चाऽभियुक्तोक्तिः - "वाणी पौराणिकीयं प्रथयति महितं प्रेक्षणं कैटभारेः। शक्तिर्यस्येषुदंष्ट्रानखपरशुमुखव्यापिनी तद्विभूषाम्" इति सुदर्शनशतकम् -76) इति ॥५॥

हे सुनाभ! शोभना नाभिर्यस्य तथाभूतः ते तुभ्यं केवलं नमः, न तु त्वां स्तोतुमहं समर्थः। अतः केवलं नमस्करोमीति भावः। कथम्भूताय ते अखिलानां धर्माणां सेतवे मर्यादापालकाय अधर्मशीला ये असुराः तेषां धूमकेतवे धूमकेतुवदनर्थहेतवे त्रैलोक्यपालकाय विशुद्धं वर्चो यस्य मनोजवाय मनस इव वेगो यस्य अद्भुतं कर्म यस्य ॥६॥

अद्भुतवर्चस्कत्वमेव प्रपञ्चयन् स्तौति - **त्वत्तेजसेति**। धर्मनिर्वाहकत्वेन तत्प्रचुरत्वात्तन्मयेन तव तेजसा महात्मनां साधूनां दृशो ज्ञानस्याऽऽवारकं तमोऽज्ञानं संहृतं निरस्तम्। प्रकाशः सूर्यादिप्रकाशश्च त्वद्रूपं, त्वयैव रूप्यते प्रकाश्यते इति त्वद्रूपं, तथा परावरं उच्चावचं चिदचिदात्मकमेतज्जगच्च त्वद्रूपं त्वच्छरीरकम्। हे गिरां पते! एवम्भूतस्य तव महिमा दुरत्ययः। यद्वा महात्मनां दृश आच्छादकं तमस्त्वत्तेजसा संहृतं तथा दृश प्रकाशः प्रसरश्च, कृत इति शेषः। सदसदात्मकं जगत् त्वच्छरीरभूत मेवेत्यर्थ[2] ॥७॥

महिम्नो दुरत्ययत्वमेव दर्शयन् स्तौति - **यदेति**। यदा वेत्यर्थः। यदा तु त्वमनञ्जनेन निरञ्जनेन अविद्यारूपाञ्जनरहितेन परमपुरुषेण विसृष्ट आदिष्टस्तदा ऊर्जितास्सञ्जातबला दैत्या दानवाश्च यस्मिंस्तत्, तद्बलं प्रविश्य अजस्रं बाह्वादीन् वृक्णन् छिन्दन् प्रधने युद्धे विशेषेण राजसे ॥८॥

1 TW 'त्यन्वय 2 TW 'त्यन्वय

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

मात्राश्शब्दादयः ॥१-३॥

सहस्राणि अराणि दलानि यस्य स तथा हे सहस्रार! विप्राय दुर्वाससे। इडस्पते! अन्नपते! ॥४,५॥

सुनाभ! सुदर्शन, धूमकेतुरग्निः ॥६॥

त्वत्तेजसा तमः संहृतम्। महात्मनां दृशोः प्रकाशश्च संहृत । स्तम्भितः एतत्परावरं सदसत् त्वद्रूपं त्वत्प्रतिमा ॥७॥

अनञ्जनेन निर्लेपेन ऊर्जितदैत्यदानवं बलं बाह्वादीन् वृक्णन् छिन्दन्, प्रधने युद्धे ॥८॥

**स त्वं जगत्त्राण[1] खलप्रहाणये निरूपितस्सर्वसहो गदाभृता।**
**वि[2]प्रस्य चाऽस्मत्कुलदैवहेतवे विधेहि भद्रं तदनुग्रहो हि नः ॥९॥**

**यद्यस्ति दत्तमिष्टं वा स्वधर्मो वा स्वनुष्ठितः।**
**कुलं नो विप्रदैवश्चेद्द्विजो भवतु विज्वरः ॥१०॥**

**यदि नो[3] भगवान्प्रीत एकस्सर्वगुणाश्रयः।**
**सर्वभूतात्मभावेन द्विजो भवतु विज्वरः ॥११॥**

**श्रीशुक उवाच**

**इति संस्तुवतो राज्ञो विष्णचक्रं सुदर्शनम्।**
**अशाम्यत्सर्वतो विप्रं [4]प्रदहद्राजयाच्ञया ॥१२॥**

**स मुक्तोऽस्त्राग्नि[5]तापेन दुर्वासाः स्वस्तिमांस्ततः।**
**प्रशशंस तमुर्वीशं युञ्जानः परमाशिषः ॥१३॥**

**दुर्वासा उवाच**

**अहो अनन्तदासानां [6]माहात्म्यं दृष्टमद्य मे ।**
**कृतागसोऽपि यद्राजन् मङ्गलानि समीहसे ॥१४॥**

**दुष्करः[7]किन्नु साधूनां दुस्त्यजं[8] वा महात्मनाम्।**
**यै स्सङ्गृहीतो भगवान् सात्त्वतामृषभो हरिः ॥१५॥**

---

1 TW °योर्नि° 2 MMa °प्राय चाता° 3 MMa मे 4 H V नादहद्रा°, W अजहाद्रा° 5 HV °पातेन 6 ABGJ महत्त्व , MMa महित्व 7 ABGJ को नु 8 ABGJ °जो

**यन्नामश्रुतिमात्रेण पुमान्भवति निर्मलः।**
**तस्य तीर्थपदः किं वा दासानामवशिष्यते ॥१६॥**

**श्रीध०** किञ्च। त्वया भगवन्नियुक्तेन खलानामेव दण्डः कार्यः, साधवस्तु रक्षणीयाः। अतो विप्रस्य रक्षणेनाऽस्मा ननुगृहाणेत्याह - **स त्वमिति**। हे जगत्त्राण[1] स एवम्भूतस्त्वंखलानामेव प्रहारार्थं निरूपितो नियुक्त , अतोऽस्मत्कुलस्य दैवहेतवे भाग्यलाभाय विप्रस्य भद्रं विधेहि। तदेव[2] नोऽनुग्रह ॥९॥

सर्वसुकृतार्पणेन विप्ररक्षां प्रार्थयते, **यद्यस्तीति** द्वाभ्याम्। विप्रो दैवं देवता[3] यस्मिंस्तत् ।१०,११॥

**इतीति**। राज्ञस्तस्यैव याच्ञया ॥१२-१६॥

**वीर०** स एवंविधदुरत्ययमहिमा त्वं सधुलोकपरित्राणदुष्कृद्विनाशनयोर्निमित्तयो गदाभृता भगवता निरूपित नियुक्त· सर्वसह शरणागतानां सर्वविधापराधसह अस्मत्कुलस्य दैवहेतवे भाग्यहेकवे। अन्यथा विप्रहिंसयाऽस्मत्कुलं विनश्ये - दिति भाव । अस्य विप्रस्य भद्रं मङ्गलं प्राणरक्षणरूपं विधेहि कुरु। तद्विप्रभद्रविधानमेवाऽस्माकमस्मद्विषये त्वत्कृतो महाननुग्रह ॥९॥

सर्वसुकृतार्पणेन विप्ररक्षां प्रार्थयते - **यद्यस्तीति** द्वाभ्याम्, दत्तं दानमिदं स्मार्तस्य कर्मण उपलक्षणम्। इष्टं यागादिक - मिद श्रौतस्य स्वनुष्ठित स्वधर्म स्ववर्णाश्रमोचितधर्मश्च यदि नोऽस्माकमस्ति यदि वाऽस्माकं कुल विप्रा एव दैवं यस्य तथाभूतश्चेत्, ततो द्विजो विज्वरो भवतु अस्मदीयदत्तादिभि प्रसन्नो भगवान् सुदर्शन द्विजं निर्दु·खं कुर्यादिति भाव ॥१०॥

एक निस्समाभ्यधिक सर्वेषा कल्याणगुणानामाश्रयो भगवान्नोऽस्माकं यदि सर्वभूतात्मभावेन सर्वात्मकब्रह्मोपासनेन प्रीतोऽस्ति ततो द्विजो विज्वरो भवतु ॥११॥

इतीत्थं राज्ञोऽऽम्बरीषस्य सम्यक् स्तुवतस्सत· तद्विष्णोश्चक्रं सुदर्शनाभिधं सर्वतोऽशाम्यत् प्रशान्तमभूत्। राज्ञोऽम्बरीषस्य याच्ञया विप्रं दुर्वाससमजहात् तत्याज ॥१२॥

शस्त्राग्ने सुदर्शनाग्ने तापेन मुक्त स दुर्वासा स्वस्तिमान् विज्वर तं उर्वीशं अम्बरीषं परमा आशिष· युञ्जान कुर्वन् प्रशशंस तुष्टाव ॥१३॥

प्रशंसामेवाऽऽह - **अहो** इत्यादिना, राजन्नित्यत प्राक्तनेन। अहो अत्याश्चर्यमेतत् अनन्तस्य दासानां महत्त्वमधुना मया दृष्टं, किं तत्? यत् कृतापराधस्याऽपि मम हे राजन्! अम्बरीष[1] मङ्गलानि समीहसे इच्छसीति तत् ॥१४॥

साधूनां भवगद्भक्तानां दुष्करं कर्तुमशक्यं किन्नु अस्ति? निग्रहानुग्रहादिकं सर्वं सुकरमेवेति भाव·। यद्यस्ति दत्त मित्यादिश्लोकद्वयोक्तप्रार्थनामालक्ष्याऽऽह-महात्मनां साधूनां दुस्त्यजं किन्वस्ति? सर्वं सुत्यजमेवेति भाव । तत्र हेतुं वदन् तान्

---

1 HV 'प्र' 2 HV व 3 H,V देव

विशिनोष्टि - **यैस्साधुभिर्महात्मभि·** सात्त्वतां भक्तानामृषभ प्रियो हरिराश्रितार्तिहा भगवान् सङ्गृहीतो वशीकृत वशीकृतनिरतिशयानन्दरूपभगवतां भागवतानां न किञ्चिद्दुष्करं दुस्त्यजं वाऽस्तीति भाव· ॥१५॥

तथा अलभ्यमपि तेषां नाऽस्तीत्याह - **यन्नामेति**। यस्य हरेर्नाम्नः श्रवणमात्रेण पुमान् निर्मलो निष्पापो भवति तस्य तीर्थपदः गङ्गादिपुण्यतीर्थाश्रयपादारविन्दस्य भगवतो दासानां किं वा अलभ्यमवशिष्यते सर्वं सम्पन्नमेवेति भावः ॥१६॥

**विज०** साधुजनत्राणाय खलप्रहाणये दुष्टनिग्रहाय च अस्मत्कुलस्य दैवहेतवे देवताभक्त्युत्पत्ति निदानाय ॥९-१३॥

महित्वं महिमा ॥१४-१६॥

**राजन्ननुगृहीतोऽहं त्वयाऽतिकरुणात्मना।**
**[1]ममाघं पृष्ठतः कृत्वा प्राणा यन्मेऽभिरक्षिताः ॥१७॥**

**[2]श्रीशुक उवाच[2]**

**राजा तमकृताऽऽहारः प्रत्यागमनकाङ्क्षया।**
**चरणावुपसङ्गृह्य प्रसाद्य [3]समभोजयत् ॥१८॥**

**सोऽशित्[4]वाऽऽदृतमानीतमातिथ्यं सार्वकामिकम्।**
**तृप्तात्मा नृपतिं प्राह भुज्यतां [5]भुज्यतामिति ॥१९॥**

**[6-]दुर्वासा उवच[-6]**

**प्रीतोऽस्म्यनुगृहीतोऽस्मि तव भागवतस्य वै।**
**दर्शनस्पर्शनाऽऽलापैरातिथ्येनाऽऽत्ममेधसा ॥२०॥**

**कर्माऽवदातमेतत्ते [7]स्वर्गा[7]यन्ति स्त्रियो मुहुः।**
**कीर्तिं परमपुण्याञ्च कीर्तयिष्यति भूरियम् ॥२१॥**

**श्रीशुक उवाच**

**एवं सङ्कीर्त्य राजानं दुर्वासाः परितोषितः।**
**ययौ विहायसाऽऽमन्त्र्य ब्रह्मलोकमहैतुकम् ॥२२॥**

---

1 ABGJ मदघ 2- -2 ABGJMMa omit 3 W तमभो° 4 H V °त्वा द्रुत 5 ABGJMMa इति सादरम् 6- -6 ABGJMMa omit 7- -7 ABGJMMa गायन्ति स्व

**संवत्सरोऽत्यगात्तावद्यावता नाऽऽगतो गतः।**
**मुनिस्तद्दर्शना[1]काङ्क्षी राजाऽब्भक्षो बभूव ह ॥२३॥**
**[2]गतेऽथ दुर्वाससि सोऽम्बरीषो द्विजोप[3]योगातिपवित्रमाह[4]रत्।**
**ऋषेर्विमोक्षं व्यसन[5]ञ्च बुद्ध्वा मेने स्ववीर्यञ्च परानुभावम् ॥२४॥**

**श्रीध०** [6-]राजेत्यादिश्लोकद्वयं शुकोक्ति[-6] ॥१७-१९॥

[7]प्रीतोऽस्मीति श्लोकद्वयं पुनश्च विप्रोक्तिः[-7]। **प्रीत** इति। आत्मनि मेधा येन, तेनाऽऽतिथ्येन ॥२०॥

**कर्मेति**। भूरियं तत्रस्थो जनः कीर्तयिष्यति ॥२१, २२॥

तस्य धैर्यातिशयमाह **संवत्सर** इति। गतो मुनिर्यावता नाऽऽगतः तावत्संवत्सरोऽतिक्रान्त इति॥२३॥

**गत इति**। द्विजस्योपयोगेन भोजनेन अतिपवित्रमाहरत् बुभुजे। स्ववीर्यञ्च धैर्या दिलक्षणं परानुभावं भगवतः प्रभावं मेने ॥२४॥

**वीर०** एवं प्रशस्य स्वस्य कृतज्ञतासूचनाय तत्कृतमुपकारमावेदयति - **राजन्निति**। हे राजन्! निरतिशय करुणायुक्तचित्तेन त्वयाऽहमनुगृहीतः, कोऽसौ मत्कृतोऽनुग्रहः? तत्राऽऽह ममाऽघमपराधं पृष्ठतः कृत्वा विस्मृत्येत्यर्थः। मे प्राणा अभिरक्षिता इति यदेष एव महाननुग्रहः ॥१७॥

राजा तमित्यादिश्लोकद्वयं शुकोक्तिः। द्विजस्य प्रत्यागमनप्रतीक्षया अकृत आहारो भोजनं येन स राजा अम्बरीषः तं दुर्वाससं चरणावुपसङ्गृह्य प्रसाद्य प्रसन्नं कृत्वा तं द्विजमभोजयत् भोजयामास ॥१८॥

सर्वे कामाः काम्यन्ते इति कामाः षड्रसाः यस्मिन् तदादृतं सादरं यथा भवति तथा आनीतं आनीय समर्पितमातिथ्यं भुक्त्वा तुष्टात्मा सन्तुष्टचित्तः स दुर्वासाः नृपमम्बरीषं भुज्यतां भुज्यतामित्युवाच ॥१९॥

**प्रीतोऽस्मीत्यादि** श्लोकद्वयं दुर्वाससः उक्तिः। आत्मनि परमात्मन्येव मेधा बुद्धिर्यस्य। अनल्पमेधसेति पाठे विपुलबुद्धेस्तवाऽऽतिथ्येनाऽहं नितरां प्रीतः सन्तुष्टोऽस्मि। तथा तव भागवतस्य दर्शनादिभिरनुगृहीतश्चाऽस्मि ॥२०॥

तवैतदवदातं निर्मलं कर्म स्वः स्वर्गे लोके स्त्रियो मुहुर्मुहुर्गायन्ति गास्यन्ति। तथा तव परमपुण्यां कीर्तिमियं भूः भूलोकस्थो जनः कीर्तयिष्यति ॥२१॥

इत्येवं राजानं प्रस्तुत्य राजानमम्बरीषमामन्त्र्य पृष्ट्वा परितोषितो, राज्ञेति शेषः। दुर्वासा विहायसा मार्गेणाहैतुकं

---

1 ABGHJV काङ्क्षो 2 ABGJ गते च 3 MMa भोगा° 4 MMa °रन् 5 MMa °नाच्च 6- -6 H V omit 7- -7 H V omit

दैनन्दिनप्रलयादिभिरनिवर्त्यं द्विपरार्धावस्थायिनमित्यर्थ । ब्रह्मलोकं, चतुर्मुखलोकं ययौ, तत्राऽम्बरीषस्य गुणान् स्तोतुमिति शेषः ॥२२॥

अम्बरीषस्य धैर्यं दृढसङ्कल्पश्चाऽऽह-**संवत्सरेति**। आगतो मुनिर्दुर्वासा यावता कालेन पुनः दिक्षु **भ्रमन्नागतः** तावत्संवत्सरात्मकः कालोऽत्यगात् व्यतीताय प्रथमागमनादारभ्य पुनरागमनपर्यन्त· कालः संवत्सरो बभूवेत्यर्थ.। तावन्तश्च कालं राजाऽम्बरीषस्तस्य मुनेर्दर्शनमेवाऽऽकाङ्क्षमाणोऽप एव भक्षयन् बभूव तस्थौ ॥२३॥

दुर्वाससि गते सति अथ अम्बरीष. द्विजोपयोगातिपवित्रं द्विजोपयेगेन द्विजभुक्तावशेषणाद्धेतो· परमं पवित्रमन्नमाहरत् बुभुजे। ततः ऋषेर्दुर्वाससो व्यसनं चक्रजं तस्माद्विमोक्षणं स्वस्य वीर्यं धैर्यादिलक्षणश्चेत्येतत्सर्वं परस्य परमात्मन. प्रभावं प्रभावकृत मेव मेने अमन्यत ॥२४॥

**विज०** आतिथ्यम् अतिथिप्रियम् अन्नं सार्वकामिकम् अपेक्षिताखिलभोजनम् ॥१९॥

आत्ममेधसा आत्मज्ञानेन ॥२०-२२॥

इतो गतो मुनिर्यावत्तं नृपं नाऽऽगतः, तावत्संवत्सरोऽत्यगात्। मुनिदर्शनकाङ्क्षो राजा च तावदब्भक्षोऽभूत् ॥२३॥

सोऽम्बरीषो बुद्ध्या मुनेर्व्यसनान्मोक्षं स्ववीर्यश्चपरमात्मनोऽनुभाव प्रभाव सामर्थ्यं यस्मिंस्तत्तथा भगवन्महिमोपितं मेने इत्यर्थः।।२४॥

**एवंविधानेकगुणस्स राजा परात्मनि ब्रह्मणि वासुदेवे।**
**क्रियाकलापैस्समुवाह भक्तिं य[1]याऽऽविरिञ्च्यान् निरयां[1]श्चकार ॥२५॥**

**अथाऽम्बरीषस्तनयेषु राज्यं समानशीलेषु विसृज्य धीरः।**
**वनं विवेशाऽऽत्मनि वासुदेवे मनो [2-]दधे ध्वस्त[2]गुणप्रवाहः ॥२६॥**

**इत्येतत्पुण्यमाख्यानमम्बरीषस्य भूपतेः।**
**सङ्कीर्तयन्ननुध्यायन् भक्तो [3]भागवतो भवेत् ॥२७॥ ***

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
नवमस्कन्धे अम्बरीषचरितं नाम पञ्चमोऽध्याय ॥५॥

---

1--1 MMa 'या विरिञ्चादि मधश्च' 2--2 ABGJ 'दधदूस्त , MMa 'दधद्धस्य 3 ABGJMMa भग' * The following extra verse is found in B edition with in the brackets अम्बरीषस्य चरितं ये श्रुण्वन्ति महात्मनः। मुक्तिं प्रयान्ति ते सर्वे भक्त्या विष्णो प्रसादत ॥

**श्रीध० एवमिति**। एवंविधा अनेके गुणा यस्य सः। आविरिञ्चान् विरिञ्चपदसहितान्भोगान् निरयप्रायानपश्य दित्यर्थ ॥२५-२६॥

इति श्रीमद्भागवते नवमस्कन्धे
श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां पञ्चमोऽध्यायः ॥५॥

**वीर०** उक्तविधा अनेके गुणा यस्य स राजाऽम्बरीष परात्मनि परे ब्रह्मणि वासुदेवे क्रियाकलापैस्सह स्ववर्णाश्रमोचितक्रियासमुदायस हकृतां अनन्यप्रयोजनां भक्तिं समुवाह चकारेत्यर्थ । भक्तिं विशिनष्टि, यया अनन्यप्रयोजनया वासुदेवभक्त्या आविरिञ्च्यात् विरिञ्चपर्यन्तभोगान् निरयान्निरयप्रायांश्चकार अमन्यत। तथा च स्मर्यते "एते निरयास्तात स्थानस्य परमात्मनः" (भार 12-191-6) इति, "वासुदेवे मनो यस्य जपहोमार्चनादिषु। तस्याऽन्तरायो मैत्रेय देवेन्द्रत्वादिकं फलम् (विष्णु. पु. 2-6-41) इति च ॥२५॥

ततोऽम्बरीषः स्वतुल्यशीलेषु तनयेषु राज्यं विसृज्य निधाय धीरो जितेन्द्रियो वनं विवेश। तत्राऽन्तरात्मभूते भगवति वासुदेवे मनो दधे एकाग्रचित्तो बभूव। ततो ध्वस्तः गुणप्रवाहः संसारो यस्य तादृशः मुक्तो बभूवेत्यर्थः ॥२६॥

एवमुपवर्णिताम्बरीषोपाख्यानकीर्तनादिजं फलमाह। इतीति इत्थमम्बरीषस्य राज्ञ एतद्वर्णितं पुण्माख्यानं भक्त्या सङ्कीर्तयन् अनुध्यायंश्च पुमान् भागवतो भवेत् ॥२७॥

इति श्रीमद्भागवते नवमस्कन्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्याया पञ्चमोऽध्याय ॥५॥

**विज०** विरिञ्चः आदिः कारणं यस्य स विरिञ्चादिः तं प्रपञ्चं यथायोग्यं अधश्चकार न तु सर्वं [illegible]
कोट्यंशांदंशो नैवाऽम्बरीषके। नैवाऽस्त्यन्यस्य कस्याऽपि. तथाऽपि हरिरीश्वरः। तात्कालिकोपचेयत्वात्तेषां यशस आदिराट्" (गारुडे) इति। नन्वम्बरीषः स्तुतिं कृत्वा चक्रनिवर्तनं कृतवान्, न ब्रह्मादय इत्यत आह - "ब्रह्मादयश्च तत्कीर्तिं व्यञ्जयामासुरुत्तमाम्। मोहनाय च दैत्यानां ब्रह्मादेर्निन्दनाय च" (गारुडे) अन्यार्थश्चेति निन्दनाय असुरकृतायेति शेषः। अन्यार्थमर्थवादार्थम्। किञ्च फलानिच्छुत्वज्ञापनाय च विष्ण्वादिभिश्चक्रं न निवर्तितमित्याह स्वयं विष्णुर्ब्रह्माद्याश्च निराशिष इति, अम्बरीषस्य मनुष्याधिकारिषु भक्त्यादिगुणैरुत्तमत्वज्ञापनार्थमपि मानुषेषूत्तमत्वाच्चेति ब्रह्मादीनां भक्त्यादिगुणाधिक्यप्रकटनाय च तेषां भक्त्यादिभिर्गुणैरिति अन्यच्च प्रायोजनम्। ब्रह्मादेर्विष्ण्वधीनत्वज्ञापनाय च केवलमिति। तर्हि दुर्वासाः क इति चेत्, रुद्रावतारः "दुर्वासाश्च स्वयं रुद्र "

इति। तथाऽपि रुद्रत्वेऽपि असुरावेशादन्याय्यवचनं, तथाप्यन्यायमुक्तवानिति स्वाज्ञाकारित्वेन तस्मिन्ननुग्रहविशेषाच्च भक्तजनमद विनाशनाय च विष्णुर्निवर्तनं नाऽकारि "तस्याऽप्यनुग्रहार्थाय दर्पनाशार्थमेव च" (गारुडे) इति शास्त्रविरोधःस्यत्, अतः भक्तिविधानार्थं तद्यशोऽर्थं दुष्टजनमोहनार्थश्चेति ज्ञातव्यम् ॥२५, २६॥

अख्यानफलमाह - **इतीति** ॥२७॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
नवमस्कन्धे पञ्चमोऽध्याय ॥ ५॥
॥ विजयध्वजमतेन षष्ठः ॥

# षष्ठोऽध्यायः

( ॥ विजयध्वजमतेन सप्तमोऽध्यायः ॥)

**श्रीशुक उवाच**

विरूपः केतुमाञ्छम्भुरम्बरीषसुतास्त्रयः।
विरूपात्पृषदश्वोऽभूत्तत्पुत्रस्तु रथीतरः ॥१॥

रथीतरस्याऽप्रजस्य[1] भार्यायां तन्तवे[2] ऋषिः।
अङ्गिरा जनयामास ब्रह्मवर्चस्विनः सुतान् ॥२॥

एते क्षेत्रप्रसूता[3] वै पुनस्त्वङ्गिरसाः[4] स्मृताः।
रथीतराणां प्रवराः क्षत्त्रोपेताः द्विजातयः ॥३॥

क्षुवतस्तु मनोर्जज्ञे इक्ष्वाकुर्घ्राणतस्सुतः।
तस्य पुत्रशत[5]ज्येष्ठा विकुक्षिनिमिदण्डकाः ॥४॥

तेषां पुरस्तादभवन्नार्यावर्ते नृपा नृपे ।
पञ्चविंशतिः पश्चाच्च त्रयो मध्ये परेऽन्यतः ॥५॥

स एकदाऽष्टकाश्राद्धे त्विक्ष्वाकुः सुतमादिशत्।
मांसमानीयतां मेध्यं विकुक्षे गच्छ माचिरम् ॥६॥

तथेति स वनं गत्वा मृगान् हत्वा क्रियार्हणान्[6]।
श्रान्तो बुभुक्षितो वीरः शशञ्चाद[7]दपस्मृतिः ॥७॥

शेषं निवेदयामास पित्रे तेन च तद्गुरुः।
चोदितः प्रोक्षणायाह दुष्टमेतदकर्मकम् ॥८॥

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

षष्ठारम्भेऽम्बरीषस्य वंशमुक्त्वा ततः परम्। षष्ठाद्यष्टभिरध्यायैरिक्ष्वाकोर्वंश उच्यते ॥

तत्र षष्ठे शशादादिर्मान्धात्रन्तो निरूप्यते। प्रसङ्गात्सौभरेराख्या मान्धातृतनयापते ॥

**विरूप** इति। तन्तवे सन्तानार्थम् ॥१,२॥

---

1 MMa °जस्यास्य 2 ABGJMMa °ऽर्थित । 3 ABGJ क्षेत्रे, MMa क्षत्र° 4 MMa श्चाङ्गिरस 5 MMa °त 6 MMa °कान् 7 MMa °मदा°

**एत** इति। ये अङ्गिरसा जनिता एते रथीतरस्य क्षेत्रे प्रसूतत्वेन रथीतरगोत्रा सन्तोऽङ्गिरसो वीर्येण प्रसूतत्वादाङ्गिरसाश्च। पुन- रपि रथीतराणामन्येषां जातानां प्रवरा मुख्याः स्मृताः। यतः क्षत्त्रोपेता[1] ब्राह्मणा इत्यर्थ ॥३॥

तदेवं मनोर्दशसु पुत्रेषु पृषध्रश्च कविश्च विरक्तत्वान्न वंशप्रवर्तकौ करूषादीनाश्च[2] सप्तानां वंशास्तारतम्यक्रमेणोक्त ·। इदानीमतिविततमिक्ष्वाकोर्वंश माह क्षुवतेस्त्वित्यादिना यावत्सोमवंशप्रस्तावः। **क्षुवत** इति। क्षुतं कुर्वतो मनोर्घ्राणतो जज्ञे "श्रद्धायां जनयामास दश पुत्रान्" (भग.9-1-11) इति पूर्वोक्तं बाहुल्याभिप्रायेणेति द्रष्टव्यम्। पुत्राणां शते ज्येष्ठा ॥४॥

**तेषामिति**। आर्यावर्ते "आर्यावर्त पुण्यभूमिर्मध्य विन्ध्यहिमागयो " (अम. को.2-8) इतिकोशप्रसिद्धिः तस्मिन् पुरस्तात्समुद्रपर्यन्तं मण्डलविभागेन पञ्चविंशतिर्नृपा[3] अभवन्। हे नृप तथैव पश्चाच्च पञ्चविंशति·। मध्ये तु ज्येष्ठा स्त्रय·। अपरे त्वन्यतो [4]अन्यत्र दक्षिणोत्तरादिषु [5]इत्यर्थः॥५॥

विकुक्षिरेव शशाद इति विश्रुत इति [6]वक्ष्यति। तत्र हेतुमाह **स एकदेति** चतुर्भि ॥६॥

**तथेति**। क्रियार्हणान् श्राद्धार्हान्, आदत् अभक्षयत् ॥७॥

**शेषमिति**। तदुरुर्वसिष्ठः। प्रोक्षणाय श्राद्धोचितसंस्काराय ॥८॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

तनयेषु राज्यं विसृज्य वनं विवेशेत्युक्तम्। के ते तनया ? इत्यत आह मुनि - **विरूप** इति। विरूपादयस्त्रयोऽम्बरीषस्य सुता·। तत्र विरूपात्पृषादश्च सम्बभूव [7-]पृषदश्वस्य सुतस्तु[-7] रथीतर ॥१॥

तस्य रथीतरस्याऽप्रजस्य सन्तानरहितस्य सतस्तद्भार्यायां तन्तवे सन्तानार्थ मङ्गिरा ऋषि [8]ब्रह्मणो ब्राह्मणस्य वर्च· ब्रह्मवर्चसं[-8] "ब्रह्महस्तिभ्यां वर्चस·" (अष्टा.5-4-78) इति समासान्तोऽच् प्रत्यय। तदेवैषामस्तीति ब्रह्मवर्चस्विन· [9-]ब्रह्मवर्चस सम्पन्नान्[-9] सुतान् जनयामास ॥२॥

एते रथीतरस्य क्षेत्रप्रसूतत्वेन रथीतरगोत्रास्सन्त अङ्गिरसो बीजेन प्रसूतत्वात् आङ्गिरसाश्च। अतो रथीतराणां रथीतरपुत्राणां तत्सन्तानप्रसूतानाश्च प्रवरा· क्षत्त्रोपेता द्विजातय· क्षत्रगोत्रान्वयिनो ब्राह्मणप्रवरा क्षत्रब्रह्मोभयगोत्रान्विता बभूवुरित्यर्थ ॥३॥

तदेवं मनोर्दशसु पुत्रेषु पृषध्रकवी विरक्तत्वान्न वंशप्रवर्तकौ करूषादीनाश्च सप्तानां वंशास्तारतम्यक्रमेणोक्ता। इदनीमतिविततमिक्ष्वाकोर्वंशमाह - **क्षुवत**स्त्वित्यादिना यावत्सोमवंशप्रस्तावम्। क्षुवत क्षुतं कर्वतो मनो वैवस्वतस्य घ्राणात् इक्ष्वाकुरिति प्रसिद्धः सुतो जज्ञे। "श्रद्धायां जनयामास दश पुत्रान्" (भाग.9-1-11) इति पूर्वं बाहुल्याभिप्रायेणोक्तमतो नानेन विरोध· तस्येक्ष्वाकोः पुत्रशतं बभूव। तत्र ज्येष्ठा विकुक्ष्यादयस्त्रय ॥४॥

---

1 HV क्षे° 2 HV °शा° 3 HV °तिनृपाश्च 4 ABJ omit अन्यत्र 5 ABJ omit इत्यर्थ 6 HV omit वक्ष्यति 7--7 TW °श्वपुत्रस्तु 8--8 Tw omit 9--9 AB omit

एवं स्थिते तेषां शतपुत्राणां मध्ये पञ्चविंशतिसंख्याकाः पुत्राः पुरस्तात्पूर्वस्यां दिशि च आर्यावर्तः हि विन्ध्यहिमपर्वतयो र्मध्यदेशः तस्य नृपा राजानो बभूवुः। आर्यावर्तपुरस्तात्समुद्रपर्यन्तं मण्डलविभागेनाऽधिपतयो बभूवुरित्यर्थः। हे नृप! तथैव पश्चादार्यावर्ते नृपाः पञ्चविंशतिसंख्याका[1] बभूवुः। आर्यावर्तमध्ये तु त्रयो ज्येष्ठा विकुक्ष्यादयोऽधिपतयो बभूवुः। अपरेऽवशिष्टास्तु अन्यतः दक्षिणोत्तरादिषु नृपा अभवन् ॥५॥

विकुक्षेरेव शशाद इति नामान्तरं वक्ष्यते, तत्र हेतुमाह - **स एकदेति** चतुर्भिः। कदाचिदिक्ष्वाकुरष्टकाश्राद्धे निमित्ते मांसमानीयतां हे विकुक्षे! शीघ्रं गच्छ, विलम्बं मा कार्षीः इति सुतमादिशत् आदिष्टवान् ॥६॥

ततस्स विकुक्षिः तथैवाऽऽनेष्यामीत्युक्त्वा वनं प्रति गत्वा क्रियार्हणान् श्राद्धार्हान् मृगान् हत्वा श्रान्तो बुभुक्षितश्च, अपगता स्मृतिः श्राद्धार्थं हता इमे मृगा न मया भक्षितुं योग्या इति स्मृतिर्ज्ञानं यस्य स वीरो विकुक्षिः शशं मृगमाददभक्षयत्। "अद स्सर्वेषाम्" (अष्टा 7-3-100) इत्यपृक्तहलः अडागमः ॥७॥

शेषं स्वभुक्तावशिष्टं मांसं स्वपित्रे निवेदयामास। स ततस्तेन पित्रा इक्ष्वाकुणा चोदितः प्रोक्षणाय प्रोक्षणेन मांसं संस्कुरु इत्यादिष्टः। तस्य इक्ष्वाकोर्गुरुर्वसिष्ठ आह - एतन्मांसं दुष्टमुच्छेषणदोषदुष्टमतोऽकर्मकं श्राद्धानर्हमित्याह ॥८॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

तन्तवे सन्तानाय अङ्गिरस उत्पत्तिनिमित्तत्वात् नाम्ना[2] आङ्गिरसाः ॥१,२॥

रथीतराणां रथीतरसन्ततिजातानाम् ॥३॥

एकवंशं समाप्य अन्यवंशं वक्तुं प्रारभते **क्षुवत** इति। क्षुतं कुर्वतः घ्राणतः घ्राणोद्गीर्णशब्दात् ॥४॥

"आ समुद्रात्पुरस्तात्तु आसमुद्राच्च पश्चिमात्। तयोरेवान्तरं गिर्योरार्यावर्तं प्रचक्षते" इत्येवंविध आर्यावर्ते पुरस्तात् पूर्वदिक्पालास्तेषां विकुक्ष्यादीनां मध्ये पञ्चविंशतिनृपाः,पश्चात्पश्चिमदिक्पालाः पञ्चविंशतिनृपाः अभूवन्। मध्ये विन्ध्यहिमवत्पर्वतयोर्मध्ये। तेषां मध्ये त्रयः पालकाः, अपरे च ये त्रिपञ्चाशदवशिष्टाः सप्तचत्वारिंशन्नृपाः ते अन्यतः दक्षिणत उत्तरतः पालका अभूवन्नित्यन्वयः ॥५,६॥

अपस्मृतिः विवेकरहितः ॥७॥

अकर्मकम् कर्मायोग्यम् ॥८॥

**ज्ञात्वा पुत्रस्य तत्कर्म गुरुणाऽभिहितं नृप[3]!।**
**देशान्निस्सारयामास सुतं त्यक्तविधिं रुषा ॥९॥**

---

1 TW 'ख्या ब' 2 A.B अ' 3 ABGJMMa 'प

**स तु विप्रेण संवादं जापकेन समा[1]चरन्।**
**त्यक्त्वा कलेबरं योगी स तेनावाप यत्परम् ॥१०॥**

**पितर्युपरतेऽभ्येत्य विकुक्षिः पृथिवीमिमाम्।**
**शासदीजे हरिं यज्ञैश्शशाद इति विश्रुतः ॥११॥**

**पुरञ्जयस्तस्य सुत इन्द्रवाह [2]इतीरितः।**
**ककुत्स्थ इति [3]चाऽप्युक्तः शृणु नामानि कर्मभिः ॥१२॥**

**कृतान्त आसीत्समरो देवानां सह दानवैः।**
**पार्ष्णिग्राहो [4]वृतो वीरो देवैर्दैत्यपराजितैः ॥१३॥**

**वचनाद्देवदेवस्य विष्णोर्विश्वात्मनः प्रभोः।**
**वाहनत्वे वृतस्तस्य बभूवेन्द्रो महावृषः ॥१४॥**

**स सन्नद्धो धनुर्दिव्यमादाय विशिखाञ्छितान्।**
**स्तूयमान[5]स्तमारुह्य युयुत्सुः ककुदि स्थितः ॥१५॥**

**तेजसाऽऽ[6]प्यायितो विष्णोः पुरुषस्य [7]महात्मनः।**
**प्रतीच्यां दिशि दैत्यानां न्यरुणत् त्रिदशैः पुरम् ॥१६॥**

**श्रीध० ज्ञात्वेति**। त्यक्तो विधिः सदाचारो येन तं [8]सुतम्। ॥९॥

**स इति**। स त्विक्ष्वाकुः जापकेन वशिष्टेन राज्यभो[9]गेन विरक्तो योगी सन् तेन योगेन कलेबरं त्यक्त्वा स यत्परं तत्त्वं तदवाप ॥१०॥

**पितरीति**। शासत् पालयन् हरिमीजे ॥११॥

**पुरञ्जय इति**। दैत्यपुरस्य जयात् पुरञ्जयः, इन्द्रो वाहः [10]यस्येतीन्द्रवाहः। ककुदि स्थितत्वात्, **ककुत्स्थ** इति च शशादसुतस्य त्रीणि नामानि तत्तत्कर्मनिमित्तानि ॥१२॥

तान्येव व्याचक्षाण आह **कृतान्त** इति सप्तभिः। कृतं विश्वमन्तयतीति तथा। पार्ष्णिग्राहः सहायः ॥१३॥

**वचनादिति**। इन्द्रो यदि मम वाहनं स्यात्तर्हि दैत्यान् हनिष्यामीति तेन वाहनत्वेन वृतस्सन् इन्द्रो लज्जया तदनङ्गी-

---

1 TW °चरत् 2 HV उदी° 3 MMa वाऽ° 4 W °कृतो 5 ABGJ °स्स° 6 MMa व्यापितो 7 ABGJMMa °परा 8 ABJ omit सुतम् 9 HV °गे वीरयोगी 10 HV अस्येती°

कुर्वन् विष्णोर्वचनात् तस्य वाहनत्वाय महान्वृषो[1] बभूवेत्यर्थ · ॥१४-१६॥

**वीर०** ततो गुरुणाऽभिहितं पुत्रस्य विकुक्षेस्तत्कर्मज्ञात्वा नृप इक्ष्वाकुस्त्यक्तो विधिः शास्त्रीयनियमरूपो येन तं सुतं रुषा देशान्निस्सारयामास ॥९॥

ततस्तु स इक्ष्वाकुर्जापकेन तपसा सह संवादं भगवद्गुणसंवादं विप्रेण सह समाचरत्, तपश्चर्यासहकृतं भगवद्गुणानुवादं गुरुणा सहाऽकरोदित्यर्थः। ततस्स इक्ष्वाकुस्तेन जापकसहकृतेन संवादेन योगी राज्यभोगेषु विरक्तः प्रारब्धावसाने कलेबरं त्यक्त्वा यत्परं ब्रह्म तदवाप ॥१०॥

एवं पितरीक्ष्वाकौ उपरते मृते सति अथ विकुक्षिरेत्याऽऽगत्य इमां पृथिवीं शासत् पालयन् यज्ञैर्हरिमीजे आराधितवान्। तत· श्राद्धार्थ शशभक्षणान्निमित्तात् शशाद इति प्रसिद्धो बभूव ॥११॥

तस्य विकुक्षेस्सुत· पुरञ्जय· स एव इन्द्रवाह· ककुत्स्थ इति च ईरितः व्यवहृतः। कुत एतन्नामद्वयं[2] प्राप्तमित्यत आह कर्मभि· क्रियाविशेषैः प्राप्तानि नामानि शृणु, कथयतो मत्त इति शेषः। नामानीति बहुवचनेन पुरञ्जयनामाऽपि कर्मनिमित्तमेवे त्युक्तम् ॥१२॥

पुरञ्जयादिनामनिमित्तानि कर्माणि वक्तुमितिहासमाह **कृतान्त** इत्यादिना जित्वेत्यत· प्राक्तनेन। दानवैस्सह देवानां कृतान्तस्समर· सङ्ग्राम आसीत्। तस्य विश्वस्यान्तः, कृतान्त·प्रलयः तत्कल्प· समर आसीदित्यर्थ·। तदा वीरः पुरञ्जय· दैत्यैः पराजितै देवैर्विश्वेश्वरस्य प्रभो र्विष्णो र्वचनात् पार्ष्णिग्राह सहाय· तत्त्वेन वृत कृत· पुरञ्जयेनेन्द्रो वाहनत्वेन वृतो महान्वृषभ आसीत् ॥१३, १४॥

ततस्तं महान्तं वृषभमारुह्य ककुदि स्थितः उपविष्टः देवैः स्तूयमानो योद्धमिच्छुः सन्नद्धः कवचितः स पुरञ्जयो दिव्यं धनुर्निशितान् बाणांश्चाऽऽदाय ॥१५॥

महात्मनः परमपुरुषस्य विष्णो· तेजसा आप्यायितः उपबृंहितः त्रिदशैर्देवैस्सह प्रतीच्यां दिशि दैत्यानां पुरं न्यरुणत् निरुद्धवान्॥१६॥

**विज०** त्यक्तविधिमाचारशून्यम् ॥९॥

नाम्ना जापकेन विप्रेण संवादं तत्त्वविषयं समाचरन् तेन संवादजनितेन ज्ञानेन योगी ज्ञानी स इक्ष्वाकुः यत्परं ब्रह्म तदवाप। सदेह आप किम्? नेत्याह - त्यक्त्वेति ॥१०॥

पुनर्विकुक्षिणा किमकारीति तत्राऽऽह - **पितरीति**। "आशासदीजे स हरिं यज्ञैः पुष्कलदक्षिणै" इति केचित्पठन्ति "शासन्नीजे हरिं यज्ञैश्शशाद इति विश्रुत" इत्यन्येन, शशमत्तीति शशादः पुष्कल दक्षिणैः पूर्णदक्षिणैः ॥११॥

---

H V महावृष 2 AB त्रय

तस्य विकुक्षेः इन्द्रो वाहो वाहनं यस्य स तथा। कर्मभिः विक्रमलक्षणैः अवाप्तानि ॥१२-१४॥

इन्द्रात्मकवृषभककुदि स्थित· ॥१५, १६॥

**तैस्तस्य[1] चाभूत्प्रधनं तुमुलं लोमहर्षणम्[1]।**
**यमाय भल्लैरनयद्दैत्यान्ये[2]ऽभिययुर्मृधे ॥१७॥**

**तस्येषु[3]पाताभिमुखं युगान्ताग्निमिवोल्बणम्।**
**[4]दृष्ट्वाऽन्ये दुद्रुवुर्दैत्या हन्यमानाः स्वमालयम् ॥१८॥**

**जित्वा पुरं धनं[5] सर्वमयच्छद्वज्रपाणये ।**
**[6]प्रत्यागच्छत्स राजर्षिरिति नामभिरा[7]हृतः ॥१९॥**

**पुरञ्जयस्य पुत्रोऽभू[8]दनेनास्तत्सुतः पृथुः।**
**वि[9]श्वगन्धस्ततश्चन्द्रो युवना[10]श्वस्तु तत्सुतः ॥२०॥**

**[11]शाबस्ति स्तत्सुतो येन [12]शाबस्ती [13]निर्मिता पुरी।**
**बृहदश्वस्तु [14]शाबस्ते ततः कुवलयाश्वकः ॥२१॥**

**यः प्रियार्थ[15]मुदङ्कस्य [16]धुन्धुनामासुरं बली।**
**सुतानामेकविंशत्या सहस्रैरहनद्वृतः ॥२२॥**

**[17]धुन्धुमार इति ख्यातः तत्सुतास्ते [18]प्रजज्वलुः।**
**[19]धुन्धोर्मुखाग्निना सर्वे त्रय एवाऽवशेषिताः ॥२३॥**

**दृढाश्वः कपिलाश्वश्च भद्राश्व इति भारत।**
**दृढाश्वपुत्रो हर्यश्वो निकुम्भ[20]स्तस्य चाऽऽत्मजः ॥२४॥**

**श्रीध० तैरिति।** येऽभिमुखं ययुस्तान् यमं दर्शयितुं सदेहानेव भल्लैरनयदित्यर्थ ॥१७॥

**तस्येति।** तच्च दृष्ट्वाऽन्ये दुद्रुवु·। स्वमालयं पातालम् ॥१८॥

**जित्वेति।** इति एतै· कर्मभि पुरञ्जयादिनामभि· आहृतो व्याहृत । आहुत इति पाठान्तरे आहूत इत्यर्थ ॥१९,२०॥

---

1--1 MMa ह्यभवद्राजन् सङ्ग्रामो रोमहर्षण । 2 MMa युयुधु 3 TW °घाता° 4 ABGJMMa विसृज्य 5 ABGJ सर्वं सश्रीक 6 ABGHJMMaV प्रच्थयच्छ° 7 MMa °हु° 8 MMa °दमेना 9 ABGT रन्धि , MMa °गन्धि 10 ABGT °श्व 11 ABGJ शाबस्त , H V शवस्त , MMa शावस्ति 12 H V शावस्ति , MMa शावस्ती , W शाबस्ति 13 ABGJ निर्ममे 14 ABGJ शाबस्ति , H V शावस्ति , MMa MMa शावस्ते 15 ABGJ मुतङ्कस्य , MMa मुकुन्दस्य 16 H V दुन्दु° 17 H V दुन्दु° 18 ABGJ °च ज° 19 H V दुन्दो° 20 ABGJMMa °स्तत्सुत स्मृत

**शाबस्त इति**। शा[1]बस्तिः श[2]बस्तस्य पुत्रः। कुवलयाश्व एव [3]धुन्धुमार इति ख्यातः ॥२१॥

तत्र कारणमाह **य** इति। सुतानामेकविंशत्या सहस्रैर्वृतस्सन् [4]अहनत् हतवान् ॥२२॥

[5-]**धुन्धुमार** इति। चेति चकारस्यान्वयः[-5] ॥२३, २४॥

**वीर०** **तैर्दैत्यै** पुरवासिभिस्सह तस्य पुरञ्जयस्य तुमुलं रोमहर्षणम्, रोम्णां शृण्वतां पश्यताश्च लोम्नां हर्षणमुदश्चनं यस्मात्तथाविधं प्रधनं युद्धमासीत्। तत्र भल्लैरिषुभिः पुरञ्जयो दैत्यान् यमायाऽनयत् हतवानित्यर्थः। कान् दैत्यान्? येऽभिमुखमाययुः ॥१६॥

ततोऽन्ये हतावशिष्टा दैत्यास्तस्य पुरञ्जयस्येषूणां घातस्याभिमुखमागत्येति शेषः। तं युगान्ताग्निमिवोल्बणं दुःस्सहं दृष्ट्वा तेन हन्यमानाःस्वकीयमालयं पातालं प्रति दुद्रुवुः ॥१८॥

ततस्स राजर्षि पुरञ्जयो दैत्यान् जित्वा तेषां पुरं धनं सर्वं प्रीत्या वज्रपाणये इन्द्राय प्रायच्छत् ददौ। इतिशब्दो हेत्वर्थकः। यतः पुरं जितवान् वृषभस्य ककुदि स्थितः इन्द्रमेव वाहनत्वेन परिगृहीतवान् ततो हेतो र्नामभिः पुरञ्जयादिनामभिः पुरञ्जयादिकर्मप्रवृत्तिनिमित्तकैरुदाहृतो व्यवहृतः ॥१९॥

पुरञ्जयस्यानेन इति प्रसिद्धः पुत्रो बभूव। तस्य अनेनसः सुतः पृथुः ततः पृथोः विश्वगन्धः पुत्रो बभूव, विश्वगन्धा - च्चन्द्रः, तस्य चन्द्रस्य सुतो युवनाश्वः ॥२०॥

तस्य युवनाश्वस्य सुतश्शाबस्तिः तं विशिनष्टि येन शाबस्तिना शाबस्तिरिति प्रसिद्धा पुरी निर्मिता। शाबस्तेस्सुतो बृहदश्वः, ततो बृहदश्वात्कुवलयाश्वकः पुत्रस्सम्बभूव ॥२१॥

कुवलयाश्वस्यैव धुन्धुमार इति नामान्तरम्। नाम्नः प्रवृतिनिमित्तं कर्माऽऽह - **य** इति। यः कुवलयाश्वकः बली बलवान् उदङ्कस्य ऋषेः प्रियार्थं प्रियं कर्तुं सुतानामेकविंशत्या सहस्रैः एकविंशतिसहस्रसंख्याकैः सुतैर्वृत इत्यर्थः। यद्धे धुन्धुं नामाऽसुरमहनत् ॥२२॥

अतः धुन्धुमार इति प्रसिद्धो बभूव। तस्य कुवलयाश्वकस्य सुतास्ते सर्वे धुन्धुमारस्य मुखाग्निना जज्वलुः दग्धा बभूवुरित्यर्थ। तेषां मध्ये त्रय एव सुता अवशेषिताः ॥२३॥

ते च सुताः, हे भारत! दृढाश्वादिनामानः। तत्र दृढाश्वस्य पुत्रो हर्यश्वः तस्य हर्यश्वस्य निकुम्भस्सुतोऽभवत्॥२४॥

**विज०** तस्य पुरञ्जयस्य इषोश्शरस्य पातस्याऽभिमुखं प्रत्यवस्थानं स्वमालयं स्वगृहं च हित्वा दैत्याः दुद्रुवुरित्यन्वय ॥१८॥

---

1 HV °व° 2 HV °व° 3 HV दुन्दु° 4 ABJ omit अहनत् 5- -5 HV omit

स राजा पुरं जित्वा सर्वं पुरधनमयच्छदाप्नोत्। पुनश्च तत्पुरधनं वज्रपाणये प्रत्ययच्छत् दत्तवान्। स राजर्षिर्दैत्य पुरञ्जयात्पुरञ्जय इति नाम्नाऽऽहूतः वृषभककुदि स्थितत्वात् 'ककुत्स्थ' इति नाम्नाऽऽहूत ॥१९-२४॥

बर्हिणाश्वो[1] निकुम्भस्य कृशाश्वोऽथाऽस्य सेनजित्[2]।
युवनाश्वोऽभवत्तस्य सोऽनपत्यो वनं गतः ॥२५॥

भार्याशतेन निर्विण्ण ऋषयोऽस्य कृपालवः।
इष्टिं स्म वर्तयाञ्चक्रु रैन्द्रीं ते सुसमाहिताः ॥२६॥

राजा तद्यज्ञसदनं प्रविष्टो निशि तर्षितः।
दृष्ट्वा शयानान् विप्रांस्तान् पपौ मन्त्रजलं स्वयम् ॥२७॥

उत्थितास्ते निशाम्याऽथ व्युदकं कलशं प्रभो।
पप्रच्छुः कस्य कर्मेदं पीतं पुंसवनं जलम् ॥२८॥

राज्ञा पीतं विदित्वाऽथ ईश्वरप्रहितेन ते।
ईश्वराय नमश्चक्रुरहो दैवबलं बलम् ॥२९॥

ततः काल उपावृत्ते कुक्षिं निर्भिद्य दक्षिणम्।
युवनाश्वस्य तनयश्चक्रवर्ती जजान[3] ह ॥३०॥

किं[4] धास्यति कुमारोऽयं स्तन्यं[5] रोरूयते भृशम्।
मां धाता वत्स मा रोदीरितीन्द्रो देशिनीमदात् ॥३१॥

न ममार पिता तस्य विप्रदेव[6]प्रसादतः।
युवनाश्वोऽपि[7] तत्रैव तपसा सिद्धिमन्वगात् ॥३२॥

**श्रीध० बर्हिणाश्व** इति। अथ तस्मान्निकुम्भात्कृशाश्वः[8] ॥२५॥

**भार्येति**। भार्याणां शतेन सह अस्य[9] पुत्रार्थमिन्द्रदैवत्यामिष्टिं वर्तयामासुः। स्मेत्याश्चर्ये ॥२६॥

तदेवाऽऽह **राजेति** षड्भिः। तर्षित स्तृषितस्सन्[10] जलार्थं प्रविष्टो मन्त्राभिमन्त्रितं जलं पत्न्यै देयं स्वयं पपौ ॥२७॥

---

1 ABGJMMa बर्हं° 2 MMa °नि° 3 H V °प 4 ABGJMMa क 5 MMa स्तन्यो 6 W °दैव 7. ABGJMMa °ऽथ 8 H V °ता° 9 H V स्व पु° 10 H V omit तृषित

**उत्थिता** इति। व्युदकं निरुदक कलशं[1] पुंसवनं पुत्रोत्पत्तिकारणम् ॥२८॥

**राज्ञेति**। अहो दैवबलमेव मुख्यं बलं, पुरुषबलन्तु न किञ्चित् इति वदन्त ईश्वराय नमस्कारं चक्रुः ॥२९,३०॥

**किमिति**। अयं किं[2] धास्यति पास्यतीति दुःखितैर्विप्रैरुक्ते सति तस्यामिष्ट्यामाराधित इन्द्रः मां धाता पाता अयं मां रक्षिष्यतीत्यर्थ यद्वा, मां लक्ष्मीं पाता रक्षिष्यति सर्वसाम्राज्यभाक् भविता इत्यर्थः। हेवत्समा रोदी रिति ब्रुवन् देशिनीं तर्जनी मदादित्यर्थ ॥३१॥

**नेति**। तस्य पिता युवनाश्वो भिन्नकुक्षिरपि न ममार, किन्तु कालान्तरे तपसा सिद्धिमन्वगात् ॥३२॥

**वीर०** निकुम्भस्य सुतो बर्हिणाश्वः[3], तस्य सुत कृशाश्व , अस्य कृशाश्वस्य सुत सेनजित्, तस्य सेनजित युवनाश्वस्सुतः समभवत्। युवनाश्ववृत्तान्तमाह - स इत्यादिना। युवानाश्वोऽनपत्यस्सन्तानरहितोऽत एव निर्विण्णो निर्वेदमापन्नो भार्याशतेन सह वनं प्रति गत ॥२५॥

तत्र मुनय अस्य कृपालव एतद्विषयकृपायुक्ता बभूवुः। ते ऋषयः सुसमाहितास्सन्त ऐन्द्रीं इन्द्रवेदेवताकामिष्टिं पुत्रकामेष्टिं प्रवर्तयाञ्चक्रुः ॥२६॥

तदा राजा युवनाश्व तर्षित निशि रात्रौ पिपासु तद्यज्ञसदनं प्रविष्ट शयानान् तान्विप्रान् दृष्ट्वा मन्त्रजलं मन्त्राभिम न्त्रितं जलं पत्न्यै देयं स्वयं पपौ पीतवान् ॥२७॥

तत उत्थितास्ते विप्रा निरुदकं कलशं निशाम्य दृष्ट्वा हे प्रभो! कस्येदं कर्म? केनेदं पुंसवनं पुत्रोत्पत्तिकारणं जलं पीतम्? इति पप्रच्छु ॥२८॥

तत ईश्वरचोदितेन राज्ञा युवनाश्वेन पीतमिदं जलमिति विदित्वा ते ऋषय अहो दैवबलमेव मुख्यबलं, पुरुषबलन्तु न किंश्चत् इति वदन्त ईश्वराय नमश्चक्रु ॥२९॥

तत काले पुत्रोत्पत्तिकाले सन्निहिते सति युवनाश्वस्य दक्षिणं कुक्षिं निर्भिद्य तनयश्चक्रवर्ती सप्तद्वीपाधिपतिः सम्बभूव ॥३०॥

अयं कुमार स्तन्याभावेन रोरूयते भृशं[4] नितरां[5] रोदिति अतोऽयं कं धास्यति। धेट् पाने। कं पास्यतीत्येवं दुःखितैर्विप्रै रुक्ते सति तस्यामिष्ट्यामाराधित इन्द्रो मामयं कुमारो धास्यति पास्यति इत्युक्त्वा हे वत्स! मा रोदीरिति वदन् देशिनीं तर्जनी ममृतस्राविणीमदात् कुमारस्य वक्त्रे निहितवान्। इन्द्रेणाऽयं मां धातेत्युक्तत्वात् मान्धतेति प्रसिद्धो बभूव ॥३१॥

तस्य कुमारस्य पिता च युवनाश्वो विप्राणां दैवस्य चाऽनुग्रहा न्न ममार न मृत । ततस्सतत्रैव वने तपसाऽनुष्ठितेन सिद्धिं मुक्तिमन्वगात् प्राप ॥३२॥

---

1 H V omit कलश 2 A B J क 3 A B बर्ह° 4 A B भृश 5 T W omit नितरा

**विज०** तर्षित· उदन्यया युत· मन्त्रपूतं जलम् ॥२७॥

व्युदकं जलरहितं पुंसवनं पुत्रोत्पत्त्यार्थमभिमन्त्रितम् ॥२८॥

ईश्वरप्रहितेन दैवप्रेरितेन ॥२९,३०॥

स्तान्य· स्तनपानेच्छुरयं बालो भृशं रोरूयते पुन पुनरत्यन्तं रोदनं करोति। कं धास्यति कस्य स्त्रीजनस्य स्तनं धास्यतीति मत्वा इन्द्रो हे वत्स! मा रोदी रोदनं मा कार्षीरित्युक्त्वा देशिनीमङ्गुष्ठानन्तरामङ्गुली मदात्। अतो मान्धातेति नाम ॥३१॥

तस्य मान्धातुः पिता युवनाश्व ॥३२॥

**त्रसद्दस्युरितीन्द्रोऽङ्ग[1] विदधे नाम तस्य च[2] ।**
**यस्मात्त्रसन्ति ह्युद्विग्नाः दस्यवो रावणादयः ॥३३॥**

**यौवनाश्वोऽ[3]थ मान्धाता चक्रवर्त्यवनिं[4] प्रभुः।**
**सप्तद्वीपवतीमेकः शशासाच्युततेजसा ॥३४॥**

**ईजे च यज्ञं क्रतुभिरात्मविद्भूरिदक्षिणैः।**
**सर्ववे[5]दमयं देवं सर्वात्मकमतीन्द्रियम् ॥३५॥**

**द्रव्यं मन्त्रो विधिर्यज्ञो यजमानस्तथर्त्विजः।**
**धर्मो देशश्च कालश्च सर्वमेतद्यदात्मकम् ॥३६॥**

**यावत्सूर्य उदेति स्म याव[6]च्च प्रतितिष्ठति।**
**सर्वं तद्यौवनाश्वस्य मान्धातुः क्षेत्रमुच्यते ॥३७॥**

**[7]शतबिन्दोर्दुहितरि बिन्दुमत्याम[8]धान्नृपः।**
**[9-]पुरुकुत्साम्बरीषौ च[9] मुचुकुन्दश्च योगिनम् ।**
**तेषां स्वसारः पञ्चाशत् सौभरिं वव्रिरे पतिम् ॥३८॥**

**यमुनान्तर्जले म[10]ग्नस्तप्यमानः[11] परन्तपः।**
**निर्वृतिं मीनराजस्य वीक्ष्य मैथुनधर्मिणः ॥३९॥**

---

1 ABGJMMa °द्° 2 ABGJMMa वै 3 W °पि 4 ABGJMMa °वनी° 5 ABGJMMa देव 6 MMa °च्चन्द्र प्र° 7 ABGJMMa शश° 8 A V मजीजनत्
9- -9 ABGJMMa पुरुकुत्समम्बरीष 10 MMa मज्जस्त 11 TW °पा

**जातस्पृहो नृपं विप्रः कन्यामेका[1] मयाचत।**
**सोऽप्याह गृह्यतां ब्रह्मन् कामं कन्या स्वयंवरे ॥४०॥**

**श्रीध०** मान्धातु र्महिमानमाह - **त्रसदस्युरिति** षड्भि·। अङ्ग! हे राजन्! यस्मान्मान्धातुर्दस्यव उद्विग्नाः कम्पिता स्सन्तः त्रसन्ति, अत इन्द्रो अस्य त्रस[2]दस्युरिति नाम विदधे। स मान्धाता अव[3]नीमेकः शशासेत्युत्तरेणान्वयः ॥३३॥

**यौवनाश्व इति।** अच्युतस्य तेजसा। अप्रच्युततेजसेति वा ॥३४॥

**ईज** इति। आत्मविदपि यज्ञं स विष्णुमीजे। तमेव विशिनष्टि सर्वदेवमयमिति सार्धेन ॥३५, ३६॥

**यावदिति।** प्रतितिष्ठति अस्तं गच्छति ॥३७, ३८॥

प्रसङ्गात्सौभरेश्चरितमाह तेषा[4]मित्यादि यावदध्यायपरिसमा[4]प्ति। तेषां स्वसारो मान्धातु· कन्याः। ननु महातापसस्य कुतो विवाह प्रसङ्ग कथं वा जराजर्झरितं रा[5]जकन्या वव्रिरे? त[6]त्राह - **यमुनान्तर्जल** इति षड्भिः॥३९॥

**जातेति।** नृपं मान्धातारम् ॥४०॥

**वीर०** अङ्ग! हे राजन्! अस्य कुमारस्य त्रस[7]दस्युरिति नामधेयमिन्द्रश्चकार, तत्प्रवृत्तिनिमित्तमाह - यस्मात् यौवनाश्वात् कुमारात् रावणादयो दस्यवो दुष्टा उद्विग्नाश्चलन्तस्त्रसन्ति बिभ्यति अतस्सोऽयं त्रस[8]दस्युरिति प्रसिद्धो भवितेति वदन् नाम विदधे इति पूर्वेणान्वय· ॥३३॥

मान्धातुश्चरित्र माह - **यौवनाश्व** इत्यादिना, [9]शतबिन्दोरित्यत· प्राक्तनेन। युवनाश्वस्यापत्यं पुमान् यौवनाश्व मान्धाता प्रभुस्समर्थ सप्तद्वीपात्मकं भूचक्रं यस्य वशे वर्तत इति तथाभूत एक एव अच्युतस्य भगवतस्तेजसा। अप्रच्युतेन तेजसेति वा। सप्तद्वीपवतीमवर्नि भूमिं शशास ॥३४॥

आत्मवित् देहविलक्षणात्मयाथात्म्यदर्शी सन् भूरय· बह्वय· दक्षिणा येषु तैः क्रतुभि· यज्ञं विष्णुं - "यज्ञो वै विष्णुःति" (तैत्ति ब्रा 1-2-5 इति श्रुते । ईजे इयाज। यज्ञमेव किं विशेषेणाराधितवानित्यत स्तं विशिनष्टि - सर्वदेवमयमिति सार्धेन। सर्वदेवताप्रचुर तत्प्राचुर्यश्च तच्छरीरकत्वेन। तथा च श्रूयते - "स आत्मा अङ्गान्यन्यदेवता." (तैत्ति उ 1-5-1 इति, देवं स्वतेजसा दीप्यमानं सर्वान्तरात्मानं प्राकृतेन्द्रियागम्यम् ॥३५॥

द्रव्यादिकमेतत्सर्वं यदात्मकं यद्यज्ञात्मकं तं यज्ञमीजे इति पूर्वेणाऽन्वय । द्रव्यादिभिस्सह पठितो यज्ञशब्द· क्रतुपरः। द्रव्यं चरुपुरोडाशादिकं, मन्त्रो द्रव्यदेवताप्रकाशको देवभाग.। विधिश्चोदनात्मको वेदाभाग·। यजमानः कर्ता धर्मः अपूर्वाख्यो, देवता प्रसादरूपो वा, देश· "समे यजेत" इत्याद्युक्त·, कालो वसन्तादि· ॥३६॥

यावद्भूमण्डलं सूर्य उदेति, उदेत्य प्रकाशयति। यद्वा, यावद्यत्र उदेति, यत्र च प्रतितिष्ठति अस्तमेति, तदवधीकृत्य

1 MMa कन्या 2 A B J 'द्' 3 H V 'नि' 4--4 ABJ मिति यावत्समाप्ति। 5 ABJ जर्जर त 6 ABJ 'दा' 7 A B 'द्' 8 A B 'द्' 9 A शश'

सर्वमेतद्भूमण्डलं यौवनाश्वस्य मान्धातुः क्षेत्रं पालितं क्षेत्रमिति कथ्यत इत्यर्थः। आचक्रवालमाधिपत्यं कृतवानिति यावत् ॥३७॥

नृपः मान्धाता, नृपेति पाठे हे नृप! [1]शतबिन्दोर्दुहितरि बिन्दुमत्याख्यायां भार्यायां पुरुकुत्सादीन् त्रीन् पुत्रानुत्पादयामासेति शेषः। नृपेति पाठे मान्धातेति कर्तृपदमध्याहर्तव्यम् ॥३८॥

तेषां पुरुकुत्सादीनां स्वसारो भगिन्यः पञ्चाशत्संख्याकाः सौभरिमृषिं पतिं वव्रिरे परिजगृहुः। कथं वा तमृषिं वव्रिरे? इत्यपेक्षायां प्रसङ्गात्सौभरेश्चरित्रमाह - यावदध्यायसमाप्ति। परमुत्कृष्टं तपो यस्य स परन्तपाः सौभरि। परन्तपेति पाठे हे परन्तप! [2]यमुनायाः अन्तर्जले जलमध्ये निमग्नः तप्यमानः। परन्तप इत्यपि पाठान्तरम्। तत्र परन्तपः तप्यमानः कुर्वाण पाकं पचतीतिवन्निर्देशः ॥३९॥

कदाचिन्मैथुनमेव धर्मो यस्य तस्य मत्स्यश्रेष्ठस्य निर्वृतिं मैथुनसुखं दृष्ट्वा विप्रः सौभरिः जाता समुत्पन्नस्पृहा मैथुनेच्छा यस्य सः नृपं मान्धातारं आगत्य एकां कान्या मयाचत। स मान्धाताप्यस्य वैरूप्यमालक्ष्य एव माह - हे ब्रह्मन्! स्वयंवरे कामं यथेच्छं कन्या गृह्यता[3]मिति। या कन्या स्वयं त्वां वृणीते सा परि[-3]गृह्यतामित्याहेत्यर्थः ॥४०॥

**विज०** यज्ञं श्रीहरिं सर्वदेवप्रधानं सर्वात्मकं मन्त्रतन्त्रद्रव्यादिसर्वव्यापिनम् ॥३३-३५॥

एतदेव स्पष्टयति **द्रव्यमिति**। य आत्मा व्यापी यस्य तत् यदात्मकम् ॥३६-३९॥

निर्वृतिमानन्दम् ॥४०॥

**स विचिन्त्याप्रियं स्त्रीणां जरठोऽ यमसम्मतः।**
**वलीपलित एजत्क इत्यहं प्रत्युदाहृतः ॥४१॥**

**साधयिष्ये तथाऽऽत्मानं सुरस्त्रीणा[4]मनीप्सितम्।**
**किं पुन[5]र्मनुजेन्द्राणामिति व्यवसितः प्रभुः ॥४२॥**

**मुनिः प्रवेशितः क्षत्रा कन्यान्तःपुरमृद्धिमत्।**
**वृतश्च राजकन्याभिरेकः पञ्चाशता वरः ॥४३॥**

**तासां कलिरभूद्भूयांस्तदर्थेऽपोह्य सौहृदम्।**
**ममाऽनुरूपो नाऽयं व इति तद्गतचेतसाम् ॥४४॥**

**स बह्वृचस्ताभि[6]रपारणीय[7]तपःश्रियानर्घ[-7]परिच्छदेषु।**
**गृहेषु नानोपवनामलाम्भः[8]सरस्सु सौगन्धिककाननेषु ॥४५॥**

---

1 AB शश° 2 AB °याम° 3-3 TW omit 4 ABGJ मपी° 5 MMa °नुजस्त्रीणा 6 MMa वा° 7-7 MMa श्रिया विराजत्सप° , ABGJ तपश्श्रियानर्घ्यप° 8 MMa प्रसून

महार्हशय्यासनवस्त्रभूषणस्नानानुलेपाभ्यवहारमाल्यकैः ।
स्वलङ्कृतस्त्रीपुरुषेषु नित्यदा रेमेऽनुगायद्द्विजभृङ्गवन्दिषु ॥४६॥

यद्गार्हस्थ्यं[1] तु संवीक्ष्य सप्तद्वीपा[2]वनीपतिः ।
विस्मितः स्तम्भमजहात् सार्वभौमश्रिया[3]न्वितः ॥४७॥

एवं गृहेष्वभिरतो विषयान् विविधै[4]स्सुखैः ।
सेवमानो न चाऽतुष्यदाज्यस्तोकैरिवानलः ॥४८॥

**श्रीध०** सोऽपि मान्धाता स्वयंवरे कामं गृह्यतामित्याह - **स इति** । स विप्र· स्त्रीणामप्रियं मां विचिन्त्याऽनेनाऽहं प्रत्युक्त । अत आत्मानं तथा साधयिष्यामीति व्यवसितो निश्चितवानिति उत्तरेणान्वय·[5] । अप्रियत्वे हेतु जरठो वृद्ध वलीभिर्युक्त· पलितश्च एजत्क कम्पमानशिरा । तापसत्वादिना वाऽसम्मतोऽहमिति कृत्वा ॥४१॥

**साधयिष्य इति** । तथेत्यस्य प्रपञ्च । सुरस्त्रीणामपीप्सितं, किं पुनर्मनुजेन्द्रोणां या· स्त्रिय· तासा मिति ॥४२॥

तत किं वृत्तं तदाह **मुनिरिति** द्वाभ्याम् । क्षत्रा प्रतीहारेण । पञ्चाशताऽपि राजकन्याभिः स एक एव वरो वृत ॥४३, ४४॥

तस्य गार्हस्थ्यं वर्णयति **स** इति चतुर्भि । बह्वृच इति मन्त्रसामर्थ्यमुक्तम् । ताभिस्स रेमे इत्युत्तरेणान्वय· । क्व रमे? अ[6] पारणीयं दुरन्तं यत्तपस्तस्य श्रिया समृद्ध्याऽनर्घ्या·[7] परिच्छदा येषु तेषु गृहेषु तथा नानाविधेषूपवनेषु च । अमलान्यम्भांसि येषु तेषु सरस्सु च । कथम्भूतेषु? सौगन्धिकानां कह्लाराणां काननानि स्तोमा[8] येषु ॥४५॥

**महार्हेति** । [9-]कथम्भूतेषु[-9] गृहादिषु? स्वलङ्कृता· स्त्रिय पुरुषाश्च येषु । अनुगायन्ते द्विजाश्च पक्षिणो भृङ्गाश्च वन्दिनश्च येषु । कथम्भूत ? महार्हशय्यादिभिरुपलक्षितस्सन् ॥४६॥

**यदिति** । स्तम्भं गर्वम् ॥४७॥

**एवमिति** । आज्यस्तोकै घृतबिन्दुभि ॥४८॥

**वीर०** स विप्रस्सौभरि स्त्रीणामप्रियं मां विचिन्त्य । अनेनाऽहं प्रत्युक्त । अत आत्मानं सुरस्त्रीणामप्यभीप्सितं साधयिष्यामि इति व्यवसित निश्चितवानिति द्वयोरन्वय । स्वस्य स्त्रीणामप्रियत्वे हेतु· - जरठो वृद्ध वलिभिर्युक्त· पलितश्च एजत्क कम्पमानशिराः एवम्भूतोऽयमिति बुद्ध्या राज्ञाऽहं प्रत्युक्त इत्यन्वय ॥४१॥

---

1 HV सुस 2 ABGJMMA °पवती° 3 AGJMMa °तम् 4 W ०धैर्मुखै । 5 AB । त्योन्वय 6 HV °ना° 7 HV °र्घा 8 HV °म
9- -9 HV omit

अत आत्मानं सुरस्त्रीणामपीप्सितं योगप्रभावेण साधयिष्ये, किं पुनर्मनुजेन्द्राणां मनुजेन्द्रस्त्रीणामभीप्सितं साधयिष्ये इति कियदेतदित्यर्थः। इत्थं व्यवसितः व्यवसाययुक्तः प्रभुस्समर्थो योगित्वादिति भाव ॥४२॥

मुनिस्सौभरिः क्षत्त्रा सूतेन प्रयोज्यकर्त्रा, राज्ञा प्रयोजकेन, ऋद्धिमत् सर्वसमृद्धिमत् अन्तःपुरं प्रवेशित पञ्चाशता पञ्चाशत्संख्याभिः राजकन्यभिस्सर्वाभिरेक एव वरस्सन् वृतः ॥४३॥

तदा तासां कन्यानां तदर्थे वरनिमित्तमहमेवैनं वृणे ममैवाऽयमनुरूपः पति र्न तवेत्येवं सौहृदं सोदर्यत्वप्रयुक्तं सौहृदमपोह्य तस्मिन् नितरां सुन्दरे वरे गतं निहितं चेतो यासां तासां महान् कलिः कलह आसीत्। योगमाहात्म्येन तादृशसुन्दररूपं धृतवानिति भावः ॥४४॥

तस्य गार्हस्थ्यं वर्णयति - स इति चतुर्भिः। स बह्वृच आश्वलायन सौभरिः। यद्वा बह्वृच इति मन्त्रसामर्थ्यमुक्तम्। ताभिः स्त्रीभिस्सह रेमे इत्युत्तरेणाऽन्वय । अपारणीयं दुरन्तं यत्तपस्तस्य श्रिया समृद्ध्या हेतुभूतयाअनर्घा[1] परिच्छदाः उपकरणानि येषु तेषु गृहे षु उपकल्पितेषु, तथा नानाविधेषु उपवनेषु अमलानि अम्भांसि येषु तेषु सरस्सु च। कथम्भूतेषु सौगन्धिकानां कल्हारादीनां काननानि स्तोमा येषु ॥४५॥

कथम्भूतेषु गृहादिषु स्वलङ्कृताः स्त्रियः पुरुषाश्च येषु अनुगायन्तो द्विजाः पक्षिणो भृङ्गाश्च वन्दिनश्च येषु कथम्भूतः? महार्हशय्यादिभिरुपलक्षितस्सन् ॥४६॥

यस्य सौभरेर्गार्हस्थ्यं सम्यगवलोक्य विस्मित सार्वभौमसम्पदा युक्त सप्तद्वीपसहिताया भूमेरधिपतिर्मान्धाता स्तम्भं गर्वं जहौ तत्याज। कियदेतन्मदीयमैश्वर्यमिति अमन्यतेत्यर्थः। यद्वा, दुहितृणां सत्कारवैकल्यचिन्तां जहौ ॥४७॥

इत्थं गृहेष्वासक्तः सौभरिः नानामुखैर्बहुमखै बहुभिरिन्द्रियैरित्यर्थ । अनेनानेकशरीरपरिग्रह प्रतिशरीरमिन्द्रियभेदश्च सूच्यते। विषयान् शब्दादीन् सेवमानोऽनुभवन्नपि न तुतोष नऽलममन्यत, यथाऽऽज्यस्तोकैर्घृतबिन्दुभि अग्निर्न तुष्यति तद्वत् ॥४८॥

**विज०** स सौभरिरयं मुनि स्त्रीणामसम्मतो जरठः एजत्कम्पमानं कं शिरो यस्य स तथा। वलीपलित अत एव अप्रि इति मत्वा अहं राज्ञा प्रत्युदाहृतः स्वयंवरे गृह्यतामिति प्रोक्त । इत्थं विचिन्त्य आत्मानं मां तथा साधयिष्ये, यथा सुरस्त्रीणामभीष्ट मिति व्यवसितः ॥४१, ४२॥

क्षत्त्रा कन्यान्तःपुरं प्रवेशितः एकः पञ्चाशता राजकन्याभिर्वृतश्चाभूदति शेष ॥४३॥

कलिः कलहः तदर्थं सौभरिपतिपरिणयनार्थे सौहृदं सुहृद्भावं अपोह्य परित्यज्य तस्मि न्वरे आसक्तचेतसाम् ॥४४॥

बह्वृचः सौभरिः गृहेषु ताभिः कन्याभिः रेमे इत्यन्वयः। कीदृशेषु गृहेषु। अवारणीयश्रिया अप्रतिघातलक्ष्म्या विराजन्ति

---

1 A अनर्ध्या

शोभमनानि च परिच्छदैरुपकारणै सहितानि च विराजत्सपरिच्छदानि तेषु श्रिया अवारणीय. अनिवार्य· तथाऽपि वरणयोग्य इत्यर्थ इति वा। अमलान्यम्भांसि अमलाम्भांसि प्रसूनानां सौगन्धिकांनि सौरभ्ययुतानि नानाविधोपवनानि च, अमलाम्भोभि र्युतानि च प्रसूनसौगन्धिकानि च काननानि येषु तानि तथा तेषु अनुगायन्ति द्विजबृन्दानि अनुगायद्द्विजबृन्दानि, द्विजानां पक्षिणां बृन्दानि द्विजबृन्दानि तान्येव वन्दिनो येषु तानि तथा तेषु ॥४५, ४६॥

एतावदेवानुवर्णयितुं शक्यं, नाऽतोऽधिकमित्याशये नाऽऽह-यदिति। स्तम्भमहङ्कारनिमित्तं कर्तव्याकरण-लक्षणम् ॥४७॥

आज्यस्तोकै घृतबिन्दुभि ॥४८॥

**स कदाचिदुपासीन आत्मापह्नवमात्मनः[1]।**
**ददर्श बह्वृचाचार्यो मीनसङ्गसमुत्थितम् ॥४९॥**

**अहो इमं पश्यत मे विनाशं तपस्विनस्सच्चरितव्रतस्य।**
**अन्तर्जले वारिचरप्रसङ्गात्[2]संस्रावितं ब्रह्म चिरं[3]धृतं यत् ॥५०॥**

**सङ्गं त्यजेत मिथुन[4]व्रतिनां मुमुक्षुः सर्वात्मना न विसृजेद्बहिरिन्द्रियाणि।**
**एकश्चरन् रहसि चित्तमनन्तईशे युञ्जीत तद्[5]व्रतिषु साधुषु चेत्प्रसङ्गः ॥५१॥**

**एकस्तपस्व्यहमथाऽम्भसि मत्स्यसङ्गात्पञ्चाशदा[6]स मुत पञ्चसहस्र[7]सर्गः।**
**नाऽन्तं व्रजाम्युभयकृत्यमनोरथानां मायागुणैर्हृतमतिर्विषयेऽर्थभावः ॥५२॥**

**एवं वसन् गृहे कालं विरक्तो न्यास[8]मास्थितः।**
**वनञ्जगामाऽनुययुस्तत्पत्न्यः पतिदेवताः ॥५३॥**

**तत्र तप्त्वा तपस्तीक्ष्णमात्मकर्शनमात्म[9]वित्।**
**सहैवाऽग्निभि रात्मानं युयोज परमात्मनि ॥५४॥**

**ताः स्वपत्युर्महाराज निरीक्ष्याऽध्यात्मिकीं गतिम्।**
**अन्वीयुस्तत्प्रभावेण अग्निं शान्तमिवार्चिषः ॥५५॥**

---

1 W °ना 2 A B G J प्रच्यावित , MMa प्रस्रावित 3 H V भृत 4 MMa वृजिनान्मु° 5 MMa °द्र° 6 H V °ताऽऽसमुत° , MMa °ताऽथ सुत
7 MMa सह्र , W वर्ग 8 MMa माश्रित 9 ABGJ °वान्

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्या संहितायां
नवमस्कन्धे षष्ठोऽध्याय ॥६॥

**श्रीध०** इदानीं तस्याऽनुतापपूर्वकं वानप्रस्थाश्रममाह **स कदाचिदिति** सप्तभि· । आत्मनो मनसो हेतोरात्मनोऽ पह्नवं तपोहानिं ददर्श ॥४९॥

**अहो इति**। संश्चाऽसौ चरितव्रतश्च योऽहं, तस्य ब्रह्म तप ॥५०॥

**सङ्गमिति**। मिथुनव्रतिनां दाम्पत्यधर्मवतां। चेद्यदि प्रसङ्गस्तर्हि। तद्व्रतिषु ईश्वरार्थधर्मपरेष्वेव कार्य इति शेष ॥५१॥

सङ्गाज्जातं दोषं प्रपञ्चयति - **एक** इति। पञ्चाशता भार्याभि· सम्बन्धात् [1]पञ्चाशत् आसमभूवमित्यर्थः। **ततश्च सुतैः** पञ्चसहस्र [2]सर्ग आसम्। प्रत्येकं तासु पुत्रशतरूपेणोत्पत्ते·। उभयकृत्यानि ऐहिकपारत्रिकाणि कर्माणि, **तद्विषयाणां मनोरथानां**। अर्थभाव पुरुषार्थबुद्धिमान् ॥५२॥

**एवमिति**। न्यासोऽत्र सङ्गत्याग एव। वानप्रस्थधर्म इत्यर्थ ॥५३, ५४॥

**ता** इति। आध्यात्मिकीं गतिं ब्रह्मणि लयम् ॥५५॥

इति श्रीमद्भागवते महापुराणे
श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकाया
व्यख्यायां नवमस्कन्धे षष्ठोऽध्याय·॥६॥

**वीर०** इदानीं तस्याऽनुतापपूर्वकं वानप्रस्थाश्रममाह तावदनुतापमाह - स इत्यादिना, एवं वसन्नित्यत· प्राक्तनेन। **बह्-** चानामाचार्यः स सौभरि· कदाचिदुपासीन उपविष्ट आत्मना [3]मनसा मीनस्य सङ्गाद्धेतो समुत्थितमात्मापह्नवं **स्वरूपानुसन्धान** विरोधिनं विषयचापलं ददर्श आलोकितवान् ॥४९॥

दर्शनमेव प्रपञ्चयति- **अहो** इति। अहो! हे लोका । तपोनिष्ठस्य संश्चऽसौ चरितव्रतश्च योऽहं तस्य ममेमं **विनाशं** पश्यत। कोऽसौ विनाश ? तत्राऽऽह अन्तर्जले यो वारिचरो मीन· तस्य प्रकृष्टात्सङ्गात् हेतो चिरं धृतं ध्यातं ब्रह्म [4]**विप्लावितं** विस्मृतमिति यदेष एव विनाश· ब्रह्मविस्मरणमात्मनो विनाशप्रायमेवेति मत्वा विनाशं पश्यतेत्युक्तम्। तथा च श्रूयते - **"असन्नेव स भवति असद् ब्रह्मेति वेद चेत्"** तैत्ति उ 2-6 इति। ॥५०॥

अत एवं वर्तितव्यं मयेत्यभिप्रायेण मुमुक्षोर्वृत्ति माह **सङ्गमिति**। मुमुक्षु· सर्वात्मना करणत्रयेण मिथुनव्रतिनां **दाम्पत्यधर्मवतां**

---

1 H V omit पञ्चाशत् 2 H V वर्ग 3 A omits मनसा 4 B विप्ला°

सङ्गं त्यजेत्। बहि· शब्दादिविषयेषु इन्द्रियाणि न विसृजेत् न प्रवर्तयेत्। एकोऽसहाय एव चरेत्। रहसि एकान्ते चित्तमनन्ते अपरिच्छिन्ने ईशे भगवति युञ्जीत, क्वचिदपि सङ्गो न कार्य एव। क्वचिच्चेद्भवति प्रसङ्गस्तर्हि तस्मिन् अनन्ते एव रति र्येषां तेषु साधुष्वेव विधेय· ॥५१॥

स्वावस्थां प्रपञ्चयति - **एक** इति। प्रथममेकोऽसहाय एव, अहमास मथ ततोऽम्भसि यो मत्स्यस्तस्य सङ्गात् पञ्चाशदासम्, पञ्चाशता भार्याभिरेकदा सम्बन्धाय पञ्चाशच्छरीरविशिष्टोऽभवम्। ततश्च पुत्ररूपेण पञ्चसहस्रवर्ग आसम्। एव मप्यन्तं विषयानुभवजां तृप्तिम् अन्तस्य तृप्त्यवधित्वात् न व्रजामि, कथम्भूत ? उभयकृत्यं स्त्रीपुंसकृत्यं तस्मिन्नेव मनोरथी येषां तेषां मायागुणैर्मोहादिभि र्वृतामतिर्यस्य विषयेषु शब्दादिष्वेव अर्थाभाव पुरुषार्थबुद्धि र्यस्य तथाभूत· ॥५२॥

**एव** मित्यादि शुकोक्ति । इत्थं महान्तं कालं गृहे वसन् ततो विरक्तो न्यासं काम्यकर्मत्यागमास्थितो वनं जगाम। तपसे इति शेष । तं गच्छन्तं सौभरिं पतिरेव देवता यासां ता पत्न्यश्चाऽनुसृत्य जग्मु ॥५३॥

तत्र वने आत्मवित् आत्मयाथात्म्यानुसन्धानपर सौभरिरात्मकर्शनं शरीरकार्श्यावहं अत एव तीक्ष्णमुग्रं तपस्तप्त्वा कृत्वा अग्निभि राहवनीयदिभि· सहैव आत्मानं परमात्मनि युयोज लीनमनुसन्दधे इत्यर्थः॥ ५४॥

ततो हे महाराज। पत्युस्सौभरेराध्यात्मिकीं गतिं परमात्मसम्बन्धिनीम् अग्निभिस्सह प्रत्यगात्मनः परमात्मनि लयानुसन्धानपूर्विकां तत्प्राप्तिरूपां गतिमवलोक्य ताः पतिमनुगताः पत्न्यश्च तस्य पत्युःप्रभावेण परमात्मोपासन प्रभावेण अन्वीयु रनुसृत्य जग्मु , मुक्ता बभूवुरिति यावत्। तद्यथा - शान्तं निरिन्धनमग्निमर्चिषश्शिखा अनुलीना भवन्ति, तद्वत् ॥५५॥

इति श्रीमद्भागवते नवमस्कन्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां षष्ठोऽध्याय ॥६॥

**विज०** आत्मापह्नवं स्वरूपापहरणं, तपसस्तिरस्कारं वा ॥४९॥

यच्चिरं धृतं ब्रह्म तप तत्प्रस्रावितं च्युतं नष्टमित्यर्थ·। "ब्रह्म वेदस्तपस्तत्त्वम्" इत्यभिधानम्।

तत्त्वमनारोपितं रूपं पुंसो ज्ञातमेव तत्सृतं प्रतिबद्धमिति वा ॥५०॥

"लोकसङ्ग्रहमेवापि सम्पश्यन् कर्तु मर्हसि" भः गी 3-20

इति वाक्यार्थमनुसन्दधान आह - **सङ्ग** मिति। मिथुनवृजिनात् स्त्रीपुरुषसङ्गोद्भूतपापात् मुमुक्षुः सुङ्गं स्नेहलक्षणं त्यजेत। **इन्द्रियाणि** बहि· शब्दादिविषयेषु न विसृजेत्, न प्रयुञ्जीत[1]। एकाकी चरन् रहसि एकान्ते **अनन्ते ईशे चित्तं युञ्जीत।**

1 M Ma प्रायुङ्क्त।

प्रसङ्गश्चेत् यदि प्रसङ्गोऽपेक्षितस्तर्हि तस्मिन् हरौ रतिर्येषां ते तद्रतय स्तेषु साधुषु निर्मत्सरजनेषु प्रसङ्गस्यात् नाऽन्यत्रे त्यन्वय· ॥५१॥

अह मेक एव तपस्वी, अथाऽम्भसि मङ्गलजले मत्स्यसङ्गात् मत्स्यानां मिथः स्नेहं दृष्ट्वा। अथाऽनन्तरं पञ्चाशता स्त्रीभिस्सह सुरतप्रसङ्गेन सुतपञ्चसहस्रसङ्ग आसम्। अथोभयकृत्यं पुत्त्राणां विवाहादि , कन्यकानां प्रदानादि इत्युभयं कर्तव्यम्। तत्र मे मनोरथाः मनस्सङ्कल्पविशेषा· तेषामुभयेन स्त्रीपुरुषद्वयेन यत्कृत्यं[1] तत्र विद्यमानानां मनोरथानां वा। उभयस्मिन्निह लोके परलोके च यत्कृत्यं तद्विषयमनोरथानां वा अन्तमवसानं न व्रजामि। तन्नेदं निमित्तमाह मायेति। शब्दादिविषये प्रयोजनबुद्धि । "मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथं" अमः को 3- 402 इत्यमर ॥५२॥

एवं विरज्य किमकार्षीत् तत्राऽऽह- एवमिति। न्यासं वित्तगृहादित्यागलक्षणम्॥५३॥

आत्मकर्शनं देहस्य कृशत्वापादकम् अग्निभिस्सह आत्मानं देहं दग्ध्वा परमात्मानि युयोज सायुज्यलक्षणं मोक्षमाप्तवा नित्यर्थ· ॥५४, ५५॥

इति श्रीमद्भागवते महापुराणे पारमहस्यां संहिताया
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
नवमस्कन्धे षष्ठोऽध्याय ॥६॥

(विजयध्वजमतेन अध्यायोऽत्र न समाप्यते)

1 A °म

# सप्तमोऽध्यायः

मान्धा[1]तृपुत्त्रप्रवरो योऽम्बरीषः प्रकीर्तितः।
[2]पितामहेन प्रवृतो [3]युवनाश्व[4]स्तु तत्सुतः।
[5]हरितस्तस्य पुत्रोऽभूत् मान्धातृप्रवरा इमे ॥१॥

नर्मदा भ्रातृभिर्दत्ता पुरुकुत्साय [6]योरगैः।
तया रसातलं नीतो भुजगेन्द्रप्रयुक्तया॥२॥

गन्ध[7]र्वान्सोवऽधीत्तत्र [8]वध्यांस्तान् [11]विष्णुशक्तिधृत्।
नागाल्लब्धवरस्सर्पा दभयं स्मरता मिमम् ॥३॥

त्र[11]सदस्युः [12]पौरुकुत्सो योऽनरण्यस्य देहकृत्।
हर्यश्वस्तत्सुतस्तस्मा [13]दरुणोऽथ [14]त्रिबन्धुरः ॥४॥

तस्य सत्यव्रतः पुत्रस्त्रिशङ्कुरिति विश्रुतः।
प्राप्त[15]श्चण्डालतां शापात् गुरोः कौशिकतेजसा॥५॥

सशरीरो गतः स्वर्गमद्याऽपि दिवि दृश्यते।
पातितोऽवाक्शिरा देवैस्तेनैव स्तम्भितो बलात् ॥६॥

त्रैशङ्कवो हरिश्चन्द्रो विश्वामित्रवसिष्ठयो:।
यन्निमित्तमभू द्युद्धं पक्षिणोर्बहुवार्षिकम्॥७॥

सोऽनपत्यो विषण्णात्मा नारदस्योपदेशतः।
वरुणं शरणं यातः पुत्रो मे जायतां प्रभो ॥८॥

### श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

मान्धातुरन्वयः प्रोक्तः सप्तमे यत्र गीयते। पुरुकुत्सस्य चाऽऽख्यानं हरिश्चन्द्रस्य चोत्तमम्॥

---

1 ABGJ °तु 2 MMa मा° 3 ABGHJV यौ° 4 ABGJ श्व 5 ABGJ हारीत , H V हारित 6 MMa चो° 7 ABGJ °नव° 8 ABGJ वध्यान् वै , MMa वध्यश्चान् 9 ABGJMMa धृक् 10 ABGHJV °मिदम् 11 ABGJMMa °द° 12 HVW °कुत्स्यो 13 T W °र्त्यरु° 14 ABGJ बन्धन 15 ABGJ °श्चा

**मान्धातृपुत्रेति।** पुत्रप्रवरः पुत्रश्रेष्टः। स पितामहेन युवनाश्वेन प्रवृनः पुत्रत्वेन स्वीकृतः। अत एव तस्य मान्धातृ-प्रवरत्वम्[1]। मुचकुन्दयोः[2] तत्सुतोऽम्बरीषस्य सुतः। इमे यौवनाश्वाम्बरीषहारीता मान्धातृगोत्रस्य प्रवरा अवान्तरविशेषस्य[3] प्रवर्तका·। यद्वा प्रवृत[4] इति यौवनाश्वविशेषणम्। पितामहेन मान्धात्रा सह आर्षेय[5]प्रवरेण प्रवृत्तो मान्धाता प्रवरो येषां ते इमे अम्बरीष यौवनाश्वहारिताः। यथाऽऽहाऽऽश्वलायन।[6]हारितपुरुकुत्सपिङ्गशङ्खदर्भहैमवतना माङ्गिरसाम्बरीष यौवनाश्वेति मान्धातरं उहैके ब्रुवते। आङ्गिरसं मान्धात्रम्बरीषयौवनाश्वेति[-6]" इति ॥१॥

**नर्मदेति**। पुरुकुत्सस्य वंशं कथयिष्यन् आदौ तावत्तस्य विवाहं प्रभावश्चाऽऽह। उरगैर्भ्रातुभिर्या दत्ता नर्मदा तया ॥२॥

**गन्धर्वानिति**। वध्यान् वधार्हान्। स च पुरुकुत्सो नागाल्लब्धवरोऽभूत्। वरमाह। इदं नर्मदया रसातलानयनादिकं स्मरतां पुंसां सर्पादभयमिति ॥३॥

**त्रसदस्युरिति**। देहकृत्पिता। त्रसदस्यो·[7] सुतोऽनरण्य इत्यर्थः ॥४॥

**तस्येति**। त्रय· शङ्कव इव दु खहेतवो दोषा यस्याऽ सौ त्रिशङ्कु·। तदुक्तं हरिवंशे- "पितुश्चाऽपरितोषेण गुरोर्दोग्ध्रीवधेन च। अप्रोक्षितोपयोगाच्च त्रिविधस्ते व्यतिक्रम" (हरिवंशे.10-17) इति परिणीयमानविप्रकन्याऽपहरणात्क्रुद्धस्य गुरो पितु शापात्। कौशिकस्य विश्वामित्रस्य[8] तेजसा प्रभावेण ॥५॥

**सशरीरीति**। तेनैव कौशिकेन ॥६॥

**त्रैशङ्कव इति**। पक्षिणो आडीबकयो[9]। विश्वामित्रो राजसूयदक्षिणाच्छलेन हरिश्चन्द्रं सर्वस्वमपहृत्य यातयामास। तच्छ्रुत्वा कुपितो वशिष्ठोऽपि विश्वामित्रं त्वमाडी[10] भवेति शशाप। सोऽपि[11] त्वं बको भवेति वशिष्टं शशाप तयोश्च युद्धमभूत् इति प्रसिद्धम् ॥७॥

"हरिश्चन्द्रो ह वैधस ऐक्ष्वाको राजा पुत्र आस"

इत्यादि श्रुतिप्रसिद्धं, हरिश्चन्द्रस्य चरितमाह - **सोऽनपत्य** इत्यादि यावदध्यायपरि[12] समाप्ति। कथं शरणं यातस्तदाह - पुत्रो मे जायताम् ॥८॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

प्रासङ्गिक स्सौभरि[13]वृत्तान्तोऽनुवर्णित। अथ प्रस्तुतं मान्धातु र्वंशपरम्परां तद्वृत्तान्तश्चाऽऽह - **मान्धातृपुत्रप्रवर** इति।

---

1 ABJ प्रवर्ग्यत्वम् 2- -2 ABJ omit 3 ABJ °षप्र° 4 ABJ omits प्रवृत इति 5 ABJ वरणे 6- -6 ABJ " हरितकुत्सपिङ्गदर्भभैमगवानामाङ्गिरसाम्बरीष यौवनाश्वेति मान्धातार ह्यैके ब्रुवते, अतीत्याङ्गिरस मान्धात्रम्बरीष यौवनाश्वेति" 7 ABJ °द° 8 H V omit विश्वामित्रस्य 9 HV गृध्र 10 H V भासो 11 H V स च 12 ABJ यावत्स° 13 AB °रेर्वृ°

मान्धातुः पुत्राणां पुरुकुत्सादीनां मध्ये श्रेष्ठोऽयोऽम्बरीष इति प्रसिद्धः पुत्रः स पितामहेन युवनाश्वेन प्रवृतः पुत्रत्त्वेन स्वीकृतः, अत एव तत्सुतः अम्बरीषस्य सुतः युवनाश्वनामाऽभवत्, पितामहस्य नाम दध्र इत्यर्थः। यौवनाश्वस्तु तत्सुत इति पाठान्तरम्। तदा मान्धातृपुत्रश्रेष्ठोऽप्यम्बरीषः पितामहेन वृतत्वात् तत्पुत्रो अम्बरीष्यादिशब्दाभिधेयतां विहाय यौवनाश्वशब्दाभिधेयो बभूव इत्यर्थः। युवनाश्वस्यानन्तरापत्यं यौवनाश्विरम्बरीषः, "अत इञ्" (अष्टा 4-1-95) तस्याऽपत्यं यौवनाश्वः तस्यापत्य मित्यौत्सर्गिकोऽण् प्रत्ययः। तस्य यौवनाश्वस्य सुतो हरित इति प्रसिद्धो बभूव। इमे अम्बरीषयौवनाश्वहरिताः। मान्धातृप्रवराः मान्धातृसन्तानभूता इत्यर्थः। एवं मान्धातृसुतस्याम्बरीषस्य वंश उक्तः ॥१॥

अथ पुरुकुत्ससन्तानं वक्ष्यन् तावत्तद्वृत्तान्त माह- **नर्मदेति**। भ्रातृभिरुरगैनागैर्या नर्मदाख्या नागकन्यका पुरुकुत्साय दत्ता, तया भुजगेन्द्रै र्भातृभिः प्रचोदितया नर्मदया रसातलं नीतो यः पुरुकुत्सः स विष्णुशक्तिधृत् भगवदाहितबलः अत एवाऽवध्यानपि गन्धर्वानवधीत् हतवान्। ततो नागात् भुजगेन्द्रात् लब्धः प्राप्तो वरो येन तादृशो बभूव। वरस्वरूपं दर्शयति - "सर्पादभयं स्मरतामिममिति" (भाग. 9-7-3) इमं नर्मदया रसातलनयनादिवृत्तान्तं स्मरतां जनानां सर्पादभयं भयाभाव इति मद्वृत्तान्तं स्मरतां सर्पाद्भयं मा भूदित्येवंविधं वरं वृण्वानस्तं लब्धवानित्यर्थः ॥२,३॥

पुरुकुत्सस्यापत्यं पौरुकुत्स्य त्रसदस्यु[1] तं विशिंषन् तत्पुत्रमाह य त्रसदस्युरनरण्यस्य[2] देहकृत् अनरण्यमुत्पादितवा नित्यर्थः। तस्य अनरण्यस्य सुतो हर्यश्वस्तस्मात् हर्यश्वात्त्र्यरुणो[3] जज्ञे इति शेषः। अथ अत्र्यरुणात्त्रिबन्धुरः[4] ॥४॥

तस्य पुत्रस्सत्यव्रत, स एव त्रिशङ्कुरिति विख्यातः स च गुरोर्वसिष्टस्य शापात् चण्डालतां प्राप्तः गतः[5] पश्चात्कौशिकस्य विश्वामित्रस्य तेजसा तप· प्रभावेण सशिरीर एव स्वर्गं गत.। अधुनाऽपि दिवि नक्षत्ररूपेण दृश्यते। कथं चण्डालस्य स्वर्लोके अवस्थानम्? इत्यत्राऽऽह- पातित इति, कौशिकतेजसा स्वर्गं प्रापित स्तत्रत्यै· दैवैरवाकृशिराः पातितः पात्यमानः पुन स्तेनैव कौशिकतेजसैव बलात् स्तम्भित· स्वर्गान्तर निर्माणपूर्वकं कौशिकतेजसा दिव्येव स्थापित इत्यर्थः ॥५,६॥

त्रैशङ्कव· त्रिशङ्को· पुत्रो हरिश्चन्द्र :- तद्वृत्तान्तमाह यन्निमित्तं यो हरिश्चन्द्रो निमित्तं कारणं यस्य तत्, बहुवार्षिकं युद्धं पक्षिणोः पक्षित्वं प्राप्तयोःविश्वामित्रवशिष्ठयोः बभूव, विश्वामित्रो राजसूयदक्षिणाच्छलेन सर्वस्वापहारेण हरिश्चन्द्रं यातयामास। तच्छ्रुत्वा कुपितो हरिश्चन्द्रगुरुर्वशिष्ठ· विश्वामित्रं त्वमाडिर्भवेति शशाप, आडि र्बलाका "शरारिराटिराडिश्च बलाका बिसकण्ठिका" (अम. को 2-241) इति कोशात्। विश्वामित्रोऽपि वसिष्ठं त्वं भासो भवेति शशाप। तयोश्च युद्धमभूदिति श्रुतिप्रसिद्धम् ॥७॥

हरिश्चन्द्रस्यैव चरित्रान्तरमाह - स इत्यादिना यावदध्यायसमाप्ति। स हरिश्चन्द्रोऽऽनपत्यः अपुत्रस्सन् अत एव विषण्णः दुःखितःआत्मा मनो यस्य सः नारदस्योपदेशात् वरुणं शरणं गत·। कथं शरणं यातः[6] तत्राऽऽह - पुत्र इत्यादिना यजा इत्यन्तेन। वरुणं शरणमुपगम्य हे प्रभो! मम पुत्रो जायतां, तथा अनुगृहाण ॥८॥

---

1 AB 'द' 2 AB 'द' 3 AB अ' 4 AB अ' 5 TW omit गत 6 A गत ?

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

मातामहेन मातुः पित्रा शशबिन्दुना तस्याम्बरीषस्य सुत. मान्धाता प्रवरो येषां ते तथा ॥१॥

भातृभिः उरगैः पुरुकुत्साय मान्धातृज्येष्ठपुत्राय दत्ता भुजगेन्द्र प्रेरितया तया नर्मदया रसातलं नीतः ॥२॥

सः पुरुकुत्सः तत्र रसातले वध्याश्वान् गन्धर्वानवधीदित्यन्वयः। वधार्हा अश्वा येषां ते तथा तान्वा, नागाः किमस्मै ददुरिति तत्राऽऽह-सर्पादिति। इमं गन्धर्ववधलक्षणं पुरुकुत्सविक्रमं स्मरतां पुंसां सर्पादभयलक्षणं, लब्धवर इत्यर्थ ॥३॥

पुरुकुत्सस्यापत्यं पौरुकुत्स· य स्त्रसद्दस्युरनरण्यस्य देहकृत् पिता। अनरण्यस्त्रसद्दस्युसुत इत्यर्थ· ॥४॥ c

तस्य त्रिबन्धुरस्य सुतस्सत्यव्रत त्रिशङ्कुरिति नामद्वयेन विश्रुत इत्यर्थ.। गुरोर्वसिष्ठस्य शापात् कौशिकस्य विश्वामित्रस्य, तेजसा प्रभावेण ॥५॥

सशरीरः मानुषशरीरसहितः स्वर्गं गत. अद्याऽपि दिवि व्योम्नि, दृश्यते, मनुजैरिति शेष.। स्वर्गं गत कथं मानवैः दृश्यत इति, तत्राऽऽह पातित इति। तेन विश्वामित्रेण बलात्तपश्शक्ते ॥६॥

त्रैशङ्कव त्रिशङ्कोरपत्यं हरिश्चन्द्रो, यो हरिश्चन्द्रो निमित्तं यस्य तद्यन्निमित्तं पक्षिणो· सहायिनोः, "पक्ष. पार्श्व मरु त्साध्य सहायबलिभित्तिषु" (वैज. को.6-1-35) इति यादव ॥७॥

"नाऽपुत्रस्य लोकोऽस्ति" इति शक्यार्थज्ञानात् विषण्णमना अनपत्य· स हरिश्चन्द्रो नारदोपदेशात् हे प्रभो! मे पुत्रो जायतामिति निवेद्य वरुणं शरणं गतः इत्यन्वय· ॥८॥

**यदि वीरो महाराज। तेनैव [1]त्वां यजे इति।**
**तथेति [2]वरुणेनाऽस्य पुत्रो जातस्तु रोहितः ॥९॥**

**[3]जातस्सुतस्त्वनेनाऽङ्ग मां यजस्वेति सोऽब्रवीत्।**
**यदा पशुर्निर्दशः स्या द्रथ मेध्यो भवेदिति ॥१०॥**

**निर्दशे च [4]समागत्य यजस्वेत्याह सोऽब्रवीत्।**
**दन्ताः पशो [5]प्रजायेरन् अथ मेध्यो भवेदिति ॥११॥**

**जाता दन्ता यजस्वेति स प्रत्याहाऽथ सोऽब्रवीत्।**
**यदा पतन्त्यस्य दन्ता [6]ह्यथ मेध्यो भवेदिति ॥१२॥**

---

1 TW यजा 2 MMa नोक्ते 3 ABGJMMa 'स्सुतो ह्यने' 4 ABGJ स आ' 5 ABGJMMa यज्जाये' 6 ABGJMMa अथ

**पशो में पतिता दन्ता यजस्वेत्याह सोऽब्रवीत्।**
**यदा पशोः पुनर्दन्ता जायन्तेऽ थ पशुश्शुचिः ॥१३॥**

**पुनर्जाता यजस्वेति स प्रत्याहाऽथ सोऽब्रवीत्।**
**सान्नाहिको[2] यदा राजन् राजन्योऽथ पशुः शुचिः ॥१४॥**

**इति पुत्रानुरागेण स्नेहयन्त्रितचेतसा।**
**कालं वञ्चयता तं तमुक्तो देवस्तमैक्षत ॥१५॥**

**रोहितस्तदभिज्ञाय पितुः कर्म चिकीर्षितम्।**
**प्राणप्रेप्सुर्धनुष्पाणिररण्यं प्रत्यपद्यत ॥१६॥**

**श्रीध० यदिति।** यदि वीर पुत्रो मे जायेत तर्हि तैनैव पुरुषपशुना त्वां [3]यजे यजामीति[-3] भाषया, तथेत्युक्तवता वरुणेन निमित्तेनाऽस्य रोहितो नाम पुत्रो जात ॥९॥

**जात इति।** [4]जाते पुत्रे[-4], स वरुणो जातस्सुत , मामनेन[5]यजस्व इत्यब्रवीत् यदा पशु र्निर्दशो निर्गतदश[6]दिवस· स्यादित्यत्र स राजाऽब्रवीदित्यनुषङ्ग ॥१०-१२॥

**पुनरिति।** राजन् हेवरुण! राजन्य पशुर्यदा सान्नाहिक कवच[7]बन्धनार्ह सङ्ग्रामसमर्थ·, अथ तदा·शुचि ॥१४॥

**इतीति।** इत्येवं त त कालं वञ्चयता राज्ञोक्त प्रार्थितो देवो वरुण तं तं कालं प्रत्यैक्षतेत्यर्थ ॥१५॥

**रोहित इति।** चिकीर्षितमात्मना पशुना वरुणयजनम् ॥१६॥

**वीर०** हे महाराज! वरुण! यदि वीर मम पुत्रो जायेत तर्हि तेनैव पुरुषपशुना त्वां यजै यजानीति भाषाबन्धेन शरणं गत । ततस्तथैवाऽस्त्विति उक्तवता वरुणेन निमित्तेनाऽन्येन हेतुना अस्य हरिश्चन्द्रस्य पुत्रो जात , स च रोहित इति प्रसिद्ध ॥९॥

ततो वरुण "**तवपुत्रस्तु** जात , तेन पुत्रेण पुरुषपशुना मां यजस्व इत्यब्रवीत्। एव मुक्तवन्तं वरुणं हरिश्चन्द्र आह- यदा पशुर्निर्दश निर्गतदशदिन तदा मेध्यो भवेत् यागयोग्यो भवेदिति ॥१०॥

ततो वरुण· तथैवास्त्वित्युक्त्वा निर्दशे दशस्वहस्सु व्यतीतेषु आगत्य यजस्वेत्याह। ततो हरीश्चनद्र - 'अस्य पुरुषस्य पशोर्दन्ता यदि जायेरन् तदा मेध्यो भवेदित्यब्रवीत् ॥११॥

ततो वरुणस्तथैवाऽ स्त्वित्युक्त्वा, जातेषु दन्तेषु पुनरेत्य दन्ता अस्य जाता· यजस्व इत्युवाच। ततस्स हरिश्चन्द्रो यदाऽस्य पुरुषपशोर्दन्ता पतन्ति तदाऽयं मेध्यो भवेदित्यब्रवीत् ॥१२॥

---

1 ABGJMma °र्निप° 2 MMa °हु° 3- -3 H V यज्ञे यजानीति 4- -4 H V omit 5 HV यज 6 H V दिन 7 ABJ सम्बन्धार्ह

ततस्तथैवेत्युक्त्वा वरुण· पतितदन्तं कुमारमवलोक्य अस्य दन्तास्तु पतिता , मां यजस्व इत्याह। अथ हरिश्चन्द्र·पुन· पशो र्यदा दन्ता जायेरन् तदा पशु· शुचिर्मेध्यो भवेदित्याह ॥१३॥

तत· पुनर्जातदन्तमवलोक्य 'अस्य दन्ता स्तु जाता·, यजस्व' इत्याह वरुण । ततस्स हरिश्चन्द्रो हे राजन्! वरुण! अयं राजन्य , अत एव पुरुषपशुर्यदा सान्नाहिक सन्नाहयोग्यः[1] आयुधग्रहणयोग्य युद्धयोग्य इति यावत्। तदा शुचिर्मेध्यो भवेदिति ॥१४॥

इति इत्थं पुत्रे अनुरागो यस्य, पुत्रे य स्नेहस्तेन यन्त्रितं त वशीकृतं चेतो यस्य, अत एव तं तं निर्दशादिरूपं काल वञ्चयता हरिश्चन्द्रेणोक्तो देवो वरुण· तदस्य सन्नाहयोग्यत्वमैक्षत। प्रत्यवेक्षमाणो बभूव ॥१५॥

एवं स्थिते, तदा रोहित पितुस्तच्चिकीर्षितं आत्मपशुना वरुणयजनमभिज्ञाय प्राणप्रेप्सु जिजीविषु धनु· पाणौ यस्य तथा भूतोऽरण्यं जगाम ॥१६॥

**विज०** एतदेव विवृणोति- यदिति। हे महाराज! यदि वीर पुत्रो जायेत, तर्हि तेन **पुत्रेण** त्वां यजे पुरुषपशुना त्वां यक्ष्ये इति हरिश्चन्द्रेणोक्ते वरुणेनाऽपि तथाऽ स्त्वित्युक्ते नाम्ना रोहित पुत्रो जात इत्यन्वय । 'अथैनमुवाच वरुणं राजानमुपधाय पुत्रो मे जायतां तेन त्वां यजा इति तथेति स वरुणं राजानं उपससार पुत्रो मे जायतां तेन त्वा यजा इति तथेति तस्य ह पुत्रो जज्ञे रोहितो नामा' इति ब्राह्मणश्च इममेवाऽर्थ मनुवदति ॥९॥

अथ वरुण आगत्य हरिश्चन्द्रमवादीदित्याह - जात इति। अङ्ग ! ते सुतो जात , अनेन पुत्रोण गा यजस्वेति। स हरिश्चन्द्रो वक्ति सोऽब्रवीदिति "तं होवाचाऽजनि वै ते पुत्रो यजस्व माऽनेनेति स होवाच यदा वै पशुर्निर्दशो भवत्यथ स मेध्यो भवति निर्दशोऽन्यस्त्वथ त्वा यजा इति" ॥१०॥

तथेति इति निर्दश दशाहातिक्रान्त निर्दशे जाते सह निर्दश आस तं होवच निर्दशोन्वभूत् यजस्व माऽनेनेति यद्यदा पशोर्दन्ता जायेरन्, अथ तदा पशु शुचि स्यात् अनन्तरं त्वा यक्ष्य इत्यब्रवीत् हरिश्चन्द्र सहोवाच यदा वै पशोर्दन्ता जायन्ते अथ स मेध्यो भवति, दन्ता स्वस्य जायन्ताम्, अथ त्वा यजा इति तथेति, इति स वरुण प्रत्याह हरिश्चन्द्रम् अस्य दन्ता जाता अथ मां यजस्वेति तस्य ह दन्ता जज्ञिरे तं होवाचाज्ञतया अस्य दन्ता यजस्व मानेनेति अज्ञत अजायन्त यदाऽस्य पुत्रस्य दन्ता· पतन्ति अथ स शुद्धो भवेत् इत्यब्रवीत् ॥११,१२॥

"सहोवाच यदा वै पशोर्दन्ताः पद्यन्ते अथ स" मेध्यो भवति दन्तान्वस्य पद्यन्त्वामथ त्वा निपातिता अथ मां यजस्वेति। वरुण आह तंहोवाच पतिता अस्य दन्ता यजस्वेति मानेनेति। "यदा पशो र्दन्ता पुनर्जायन्ते अनन्तरं पशु· शुद्ध स्यादिति" स हरिश्चन्द्रोऽब्रवी त्सहोवाच यदा वै पशोर्दन्ता ॥१३॥

---

1 A B सा°

पुनर्जायन्तेऽथ स मेध्यो भवति। दन्तान्वस्य पुनर्जायन्तामथ त्वा यजा इति तथेति तस्य दन्ताः पुनर्जज्ञिरे इति अस्य दन्ताः पुनर्जाताः अथ मां यजस्वेति स वरुणो हरिश्चन्द्रमेत्याऽऽह - तं होवाचाज्ञतया अस्य पुनर्दन्ता यजस्व मोऽनेनेति । यदा राजन्य· क्षत्रिय· सान्नाहिक सन्नाहयोग्य शस्त्रास्त्रग्रहणयोग्य· कवचवान्वा राजपशुः शुचिरिति। स हरिश्चन्द्रोऽब्रवीत् ॥१४॥

स होवाच यदा वै क्षत्रिय सान्नाहिको भवत्यथ स मेध्यो भवति, सन्नाहन्तु प्राप्तोऽथ त्वा यजा इति तथेति सह सन्नाहं प्राप तं होवाच सन्नाहं तु प्राप्तो यजस्व मानेनेति इति। ननु हरिश्चन्द्र· किमर्थं कालमक्षिपत् इति तत्राऽऽह इतीति। स्नेहपाशबद्धचेतसा दशाहादिलक्षणं तं तं कालं वञ्चयता हरिश्चन्द्रेणोक्तो वरुणो देव· तमैक्षत प्रत्याह चेत्यन्वयः। तथात्मयागकाल मैक्षतेति वा ॥१५॥

स तथेत्युक्त्वा पुत्रं आमन्त्रयामास तथाऽयं वै मह्यं त्वामददाद्धन्ता त्वयाऽहमिमं यजा इति सह नेत्युक्त्वा धनुरादायाऽरण्यमुपात्तस्थौ स संवत्सरमरण्ये सञ्चचार इति ब्राह्मणप्रसिद्धं पितुश्चिकीर्षितं वरुणमुद्दिश्याऽऽत्मयजनं कर्तुमिष्टं तत्कर्माऽभिज्ञाय प्राणप्रेप्सुरात्मजीवनेच्छु· रोहितो धनुरादाय वनं प्राप ॥१६॥

**पितरं वरुणग्रस्तं श्रुत्वा जातमहोदरम्।**
**रोहितो ग्राममेयाय तमिन्द्रः प्रत्यषेधत ॥१७॥**

**भूमेः पर्यटनं पुण्यं[1] तीर्थक्षेत्रनिषेवणैः।**
**रोहितायाऽऽदिशच्छक्रः सोऽप्यरण्येऽ[2]वसत्समाम्[2] ॥१८॥**

**एवं द्वितीये [3]तार्तीये चतुर्थे पञ्चमे तथा।**
**अभ्येत्याभ्येत्य स्थविरो विप्रो भूत्[4]वाऽथ वृत्रहा ॥१९॥**

**षष्ठं संवत्सरं तत्र चरित्वा रोहितः पुरीम्।**
**उपव्रजन्नजीगर्ता दक्रीणान्मध्यमं सुतम् ॥२०॥**

**शुनश्शेपं पशुं पित्रे प्रदाय समवन्दत।**
**ततः पुरुषमेधेन हरिश्चन्द्रो महायशाः ॥२१॥**

---

1 W पुण्यती॰ 2--2 MMa चरत्समा , W ॰ऽवसत्समा 3 ABGJMMa तृतीये 4 ABJMMa ॰त्वाऽऽह

**मुक्तोदरोऽयजद्देवान् वरुणादीन्[1] महत्कथः।**
**विश्वमित्रोऽभवत्तस्मिन् होता[2]ध्वर्यु रथात्मवान् ॥२२॥**
**जमदग्नि[3]र्वसिष्ठोऽभूत् ब्रह्मा[3]ऽऽयास्यस्तु सामगः।**
**तस्मै तुष्टो ददाविन्द्रः शातकौम्भमयं रथम् ॥२३॥**
**शुनश्शेपस्य माहात्म्यमुपरिष्टात्प्रव[4]क्ष्यते॥**
**[5]सत्यसारां धृतिं दृष्ट्वा सभार्यस्य च भूपतेः ॥२४॥**

**श्रीध० पितरमिति।** ततश्च कुपितेन वरुणेन ग्रस्तमत एव जातं [6]महोदराख्यरुग्यस्य[6] तं पितरं श्रुत्वा ॥१७॥

**भूमेरिति।** समां वर्षम् ॥१८॥

**एवमिति।** द्वितीये [7]तृतीयादौ च वर्षे वृत्रहा अभ्येत्याभ्येत्य तथैव तं प्रत्यषेधत किञ्चित्किञ्चिदुक्त्वा प्रत्यषे-धतेत्यर्थः ॥१९-२२॥

**मुक्तेति।** वरुणेन मुक्तमुदरं [10]पूर्वोक्तमहोदरव्याधिः[10] यस्य महत्सु कथा यस्य सः। आत्मवान्। जमदग्निरध्वर्यु रभूत् ॥२२॥

**जमदग्निरिति।** [11]आयास्यो मुनिः सामग उद्गाता अभूदित्यर्थः ॥२३॥

**शुनश्शेपस्येति।** उपरिष्टाद्विश्वामित्रसुताख्यान[12]प्रसङ्गेन ॥२४॥

**वीर०** ततः कुपितेन वरुणेन ग्रस्तम्, ग्रासस्वरूपमेवाऽऽह- जातमहोदर मिति। क्रुद्धेन वरुणेनोत्पादितमहोदरमित्यर्थः। एवम्भूतं पितरं वरुणग्रस्तं श्रुत्वा रोहितः ग्राममेयाय आगन्तुमुद्यतः, तमिन्द्रः प्रत्यषेधत मागा इत्युक्तवान्॥१७॥

एवं मुक्त्वा शक्रः पुण्यानां तीर्थानां क्षेत्राणाञ्च निषेवणैः भूमेः पर्यटनं रोहितायाऽऽदिशत्। ग्रामं मा गाः, किन्तु, [13]भूमण्डलपर्यटनेन उपायेन अनृतदोषजं पितुर्महोदरं निवर्तयेत्याहेत्यर्थः। सोऽपि रोहितः शक्रेण यथोक्तं तथैवारण्ये पुण्यतीर्थक्षेत्रेषु कतिचिद्वत्सरानचरत् ॥१८॥

---

1 MMa महाक्रतौ, W महायशा । 2 ABGJ °ता चाध्वर्यु रात्म°, MMa °ताऽथाऽध्वर्युरात्म° 3--3 ABGJMMa °रभूद्ब्रह्मा वसिष्ठोऽयास्य 4 ABGJ °चक्ष्यते, MMa °चक्षते 5 M Ma सरि 6--6 ABJ महदुदरयस्य 7 ABJ omit तृतीयादौ 8.ABJ प्रतिषेधन् 9 ABJ °दाह॥ 10--10 ABJ omit 11 ABJ अ° 12 H v प्रसङ्गे। 13 TW भूप°

एवं द्वितीये, तृतीये, चतुर्थे पञ्चमे चेत्येवं प्रतिवर्षं वृत्रहा इन्द्र· स्थविरो वृद्धो विप्रो भूत्वा अभ्येत्याभ्येत्य प्रत्यषेधत। ग्रामं मागा·, किन्तु भूमण्डलं पर्यटेत्युक्तवानित्यर्थ· ॥१९॥

ततो रोहित· षष्ठं संवत्सरं चरित्वा पुरीमुपगच्छन् अजीगर्ताद्भार्गववंशजात्तन्मध्यमसुतं शुनश्शेपमक्रीणात् ॥२०॥

तश्च पित्रे हरिश्चन्द्राय प्रदाय स्वप्रतिनिधितया यागार्थं दत्वा समविन्दत ग्रामं प्राप्य सुरवं स्थितो बभूवेर्त्थ.॥ ततो महायशा महारथो हरिश्चन्द्र· पुरुषमेधेन क्रतुना ॥२१॥

वरुणादीन् देवानयजत्। मुक्तोदर मुक्तमपगतमुदरं महोदरं यस्य तथाभूतश्च बभूवेत्यर्थ । तत्र पुरुषमेधे विश्वामित्रो होता, बभूव। भृगुवंशज आत्मवान् ॥२२॥

जमदग्निरध्वर्युरभवत्। वसिष्ठो ब्रह्मा बभूव। अगस्त्यो मुनि सामग· उद्गाता बभूव एवं महर्षिभि कारितेन पुरुषमेधेनाऽराधित· इन्द्रस्तुष्ट· तस्मै हरिश्चन्द्राय शातकुम्भमयं स्वर्णमयंरथ मदात्। कथं शुनश्शेप· पित्रा प्रचोदितोऽपि आत्मवध मन्वमन्यत? कथन्तरां विश्वामित्रादयो ब्रह्मर्षय· ब्रह्मर्षिसुतं शुनश्शेपमालब्धवन्त ? इत्यपेक्षायामाह शुनश्शेपस्येति। उपरिष्टात् षोडशेऽध्याये शुनश्शेपस्य माहात्म्य स्वप्राणरक्षणाय विश्वामित्रशरणवरणं, तेन संस्तुतानां वरुणादीनां देवतानामनुग्रहा दनालम्भनमित्यादिकं सर्वं वक्ष्यते इत्यर्थ । तत सभार्यस्य भूपते. हरिश्चन्द्रस्य सत्य मननृतमेव सारो वलं यस्यां तां धृतिं दृष्ट्वा ॥२३,२४॥

**विज०** तदनन्तरं पितरं वरुणग्रस्तमित्यारभ्य, प्रदाय समवन्दत इत्यन्तेन ग्रन्थेनाऽथ हैक्ष्वाकं वरुणो जग्राह, तस्यो दरं जज्ञे इत्यादि ब्राह्मणप्रसिद्धोऽर्थोऽनूद्यते। एयाय आजगाम प्रशंसाया रूपप्प्रत्ययविधानात् प्रशस्तपुरूषरुप. विप्र इति यावत्। इन्द्रो वृद्धविप्रो भूत्वा तं रोहितमेत्य प्रत्युवाच "अपपरी वर्जने" अष्टा 1-4-88 इति सूत्रान्निषेधवचनं कृतवान् न गन्तव्यमित्युक्तवान् इत्यर्थ ॥१७॥

तत्र युक्तिमाह - भो रोहित' नानाश्रन्ताय पुण्यतीर्थक्षेत्रनिषेवणेन नानाविधेन श्रान्तस्य जनस्य श्री ऐहिकामुष्मिकसम्पदस्तीति नृषद्वर अनुक्तकारी गुर्वादिवचनमशृण्वन् स्तम्भवत्तिष्टन् चर्मकारो वा जन पाप इति शुश्रुम· तर्हि सञ्चरमाणस्य एकाकिनश्चोरादिभयं स्यादिति नाऽऽशङ्कनीयम्। चरत· पुंस इन्द्र एव सखा भवतीति। अत चरैव त्वं अटनं कुरुष्व एवं कश्चित् ब्राह्मणोऽय मवोचत् कथश्चरैवेति नृषद्वरोऽनुक्तकारी चर्मकृच्च प्रकीर्तित इति इन्द्रेणोपदिष्टो रोहित· किं चकारेति तत्राऽऽह सोपीति। समा वत्सरान् ॥१८॥

एवं कति वत्सरान् अरण्ये चचारेति तत्राऽऽह-एवमिति। द्वितीयं संवत्सरमरण्ये चचारेति आदिब्राह्मणश्चाऽस्मिन्नर्थे

मानं[1] पुष्पिण्यौ जङ्घे. चरत· पुष्पिणो गर्भिणी जङ्घयोर्बलाच्चरति अटति नैकत्राऽऽ स्ते तथा भूष्णुर्बुभूषु पुरुष· आत्मा सततं पर्यटन्[2]फलग्राहिः फल गृह्णाति यथा किं तत्फलमाप्नोतीति तत्राऽऽह शेर इति। प्रपथे महामार्गे तीर्थयात्राश्रमेण हता अस्य पुंस सर्वे पाप्मान· शेरे शीर्णा भवन्तीति। अतस्त्वमपि चरन् फलं लभस्वेत्यर्थ·। चरैवेत्युक्तार्थं आसीनस्य निर्व्यापारस्य भगो भाग्यमप्यास्त आसीनं भवति समृद्धं न भवति तिष्ठत उत्थानं कुर्वतो भग ऊर्ध्व स्तिष्ठति उत्थानं करोति पुरुषच्छायेव निपद्यमानस्य[3] निकृष्टं गच्छतो भगश्शेते निद्रां करोति निकृष्टो[-3] भवतीत्यर्थ । चरत पुण्येन यथा सञ्चरमाणस्य पुंस भगश्चरति चरति प्राप्नोति तमिति शेष·। "भगो योन्यां भगो यत्ने यशोवीर्यार्कभूतिषु" (वैज को· 6-5-58) इति। कलि शयान इत्यादिना कारणगुण कार्यपरो योजनीय·। तथा हि - कलौ जातः शयान· तामसत्वेन शुभप्रवृत्तिशून्यो भवति। द्वापरे जात· सञ्जिहान संशयान· इदं वा अदो वेति तत्त्वं न निश्चिनोति। "सम्बन्धिपुत्रौ दायादौ द्वापरौ युगसंशयौ" (वैज· को 7-1-30) इति। त्रेतायां जात· उत्तिष्ठन् धर्मार्थकामलक्षण कार्योद्योगी भवति। कृतयुगे जात कृतं विहितं चरन् सम्पद्यते ज्ञानसम्पन्नो भवतीति अतस्त्वं चरको भवेत्यर्थ·। "युगेऽक्षपाते पर्याप्ते कृतं क्लीबे हितेऽर्थवत् (वैज को 6-5-21) इति। भूमौ चरन् पर्यटन् मधु सुखं विन्दति वै। अशनक्लेशोऽपि नाऽस्तीत्याह- स्वादिष्ठ मुदुम्बरं फलविशेषं चरन् भक्षयन् भूमिपर्यटनं कुर्वत इत्थम्भावमाह चरन्निति। श्रवणमननाभ्यां स्वादु पुन· पुनस्सेवाबुद्धिजनक मुदुम्बरम् अत्युत्तमं वरं वरणीयं सर्वगुणाभिरामं हरिं चरन् शरणं गच्छन्, नत्वेति वा नित्य मटन् कोऽस्तीति तत्राऽऽह-सूर्यस्येति। यश्चरन् अविरतमटन् न तन्द्रयते आलस्यं न करोति। तस्य सूर्यस्य श्रेमणं अव्याहतगमनशिक्षां पश्य। तवाऽप्येवमरण्ये चरत· जीवनक्षेम स्यादिति वृत्रहा रोहितमशिक्षतेत्यन्वय ॥१९॥

एवं शिक्षितस्तत्राऽरण्ये षष्ठं संवत्सरं चरित्वा पुरीमुपगच्छन् रोहितोऽजीगर्तात् मध्यमं सुतं शुनश्शेपमक्रीणात् गवां शत दत्वा स्वीकृतवान् ॥२०॥

स्वीकृत्य शुनश्शेपाख्यं पशु हरिश्चन्द्राय पित्रे प्रदाय पितर समवन्दतेत्यन्वय । षष्ठं संवत्सर मरण्ये चचार। सोऽजीगर्तं सौयवसिमृषि अशनयापरीतमरण्यमुपेयाय। तस्य ह त्रय· पुत्रा आसु· शुन· पुच्छ , शुन शेप , शुनो लाङ्गूल इति। तं होवाच ऋषेऽहं ते शतं ददाम्यह मेषामेकेनाऽऽत्मानं निष्क्रीणा इति। स ज्येष्ठं पुत्रं निगृह्णात् उवाच नन्विममिति नो एवेममिति कनिष्ठं माता तौह मध्यमे सम्पादयाञ्चक्रतु । शुनश्शेपे तस्य ह शतं दत्वा स तमादाय सोऽरण्याद्राममेयाय, स पितरमेत्योवाच तत ! हन्ताह मनेनात्मानं निष्क्रीणा इति स वरुणं राजानमुपससारानेन त्वा यजा इति तथेति भूयान्वै ब्राह्मण क्षत्रियादिति वरुण उवाचेति तत पुरुषपशुप्राप्त्यनन्तरं महायशा हरिश्चन्द्र पुरुषमेधेन पुरुषपशुहिंसालक्षणयज्ञेन ॥२१॥

वरुणादीन् यजं स्ततस्स राजा मुक्तोदरो जलोदररोगरहितोऽभवदित्यन्वय । तस्मा एतं राजसूयं यज्ञक्रतुं प्रोवाच

---

1 MMa इयाय 2 ABM ^न 3- -3 M omits

तमेतमभिषेचनीये पुरुषं पशुमालेभे[1] इति सोऽभिषेचनीय इति तादर्थ्ये सप्तमी, वरुण मुद्दिश्येति आलेभे[2] आलम्भनं उपक्रान्तवान् तस्य ह विश्वामित्रो होता [3]आसीत् जमदग्नि रध्वर्युर्वसिष्ठो ब्रह्मा, [4]आयास्य उद्गातेति ब्राह्मणार्थत्वेनाऽस्मिन् यज्ञे होत्रादीनाह विश्वामित्र इति ॥२२॥

[5]आयास्य एव सामग· [6]आयास्यसामग. साम गायतीति सामग उद्गातेत्यर्थ·। आत्मा परमात्मा अस्याऽस्तीति आत्मवान् तस्मै शुनश्शेपाय ॥२३॥

उपरिष्टाच्चतुर्दशेऽध्याये भूपतेर्भार्यया। सहितस्य सत्यसारं सज्जनहितकरं वाक्यं धृतिं लौकिकमार्गादचलनं दृष्ट्वा ॥२४॥

**विश्वामित्रो भृशं प्रीतो ददावविहतां गतिम्।**
**मनः पृथिव्यां तामद्भिस्तेजसाऽऽपो[7]ऽनिलेन तत् ॥२५॥**

**खे वायुं धारयंस्तच्च भूतादौ[8] तं महात्मनि**
**तस्मिञ्ज्ञानकलां ध्यात्वा तयाऽज्ञानं विनिर्दहन् ॥२६॥**

**[9]पीत्वा तां स्वेन भावेन निर्वाणसुखसंविदा।**
**अनिर्देश्याप्रतर्क्येण तस्थौ विध्वस्तबन्धनः ॥२७॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
नवमस्कन्धे सप्तमोऽध्याय ॥७॥

**श्रीध०** अविहतां गतिं ज्ञानम् ता मेव गति माह - सार्धद्वाभ्याम्[10] विश्वामित्र इति। मन· पृथिव्यां धारयन् ज्ञानकलां ध्यात्वा तयाऽज्ञानं विनिर्दहन्, तांश्च हित्वा [11]मुक्तबन्धनस्तस्थावित्यन्वयः "मनो मूलो हि संसार·, मनश्चान्नमयम्। "अन्नमयं हि सौम्य मन·" छान्दे:उः 6-5-4 इति श्रुतेः। अतोऽन्नशब्दवाच्यायां पृथिव्यां मनो धारयन् एकीकुर्वंस्तां पृथिवी मद्भिरेकीकुर्वन् अपस्तेजसा, तत्तेजोऽनिलेन ॥२५॥

---

1 AB °ल° 2 AB °ल° 3 A omits आसीत् 4 AB अ° 5 AB अ° 6 AB अ° 7 MMa साऽम्भो 8 MMa शब्दादौ 9 ABGJMMa हित्वा 10 ABJ सार्धाभ्या
11 H V omit मुक्त्वा

**खे इति**। तश्च खे आकाशे[1], तच्च भूतादौ अहङ्कारे, तञ्च[2] भूतादिमहङ्कारम्। महात्मनि महत्तत्त्वे तस्मिन्विषयाकारं व्यावर्त्य ज्ञानकलां ज्ञानांशमात्मत्वेन ध्यात्वा, तया ध्यानवृत्तिरूपया आत्मावरकमज्ञानं विनिर्दहन् ॥२६॥

**पीत्वेति**। निर्वाणसुखसंविदा, ताञ्च हित्वा मुक्तबन्धनस्सन् अनिर्देश्येनाऽप्रतर्क्येण स्वेन भावेन स्वस्वरूपेण तस्थौ ॥२७॥

इति श्रीमद्भागवते महापुराणे
श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्यख्यायां नवमस्कन्धे सप्तमोऽध्याय.॥७॥

**वीर०** विश्वामित्रो नितरां प्रीतस्तस्मै अविहतां गतिं सावधानां गतिमात्मज्ञानरूपां ददौ। स्वात्मपरमात्मयाथात्म्य ज्ञानयोगमुपदिश्य तन्निष्ठमचीकरदित्यर्थः। अत्र सभार्यस्य सत्यसारां धृतिं दृष्ट्वेत्यनेन ब्रह्मसुतालम्भनप्रवृत्तहरिश्चन्द्रविषयक कोपेन तद्यज्ञे आर्त्विज्यं प्राप्य दक्षिणाच्छलेन सर्वस्वमपहृत्य पीडयमानस्याऽपि तस्य सत्यानुवर्तित्वं दृष्ट्वा इति। इति हासार्थोऽभिप्रेतः। अवहितां गतिमेवाऽऽह-मन इति सार्धाभ्याम्, हरिश्चन्द्रो विश्वामित्रोपदिष्टज्ञानयोगनिष्ठाप्रभावेन मन आदीन् पूर्वपूर्वानुत्तरोत्तरेषु पृथिव्यादिषु धारयन् ध्यायन् तया [3]ज्ञानकलया[-3] अज्ञानं विनिर्दहन् निश्शेषं दहन् ॥२५, २६॥

तां ज्ञानकलां हित्वा निर्वाणसुखसंविदा अनिर्देश्याप्रतर्क्येण स्वेन भावेन ध्वस्तबन्धनस्तस्थावित्यन्वय·। **मनः** पृथिव्यामित्यादेरयमर्थः। "अन्नमयं हि सोम्य मन·" छान्दो· उ 6-5-4 इति प्रकारेण मनसोऽन्नशब्दवाच्यपृथिव्याप्या**यितस्यैव** व्यापारक्षमत्वा न्मनोव्यापारः पृथिव्यायत्त इति मनोनियमनार्थं पृथिव्यां तत्संश्लिष्ट मनुसन्दधे। अयाप्ययक्रमानुसन्धानमाह **तामिति**। तां पृथिवीमद्भिः सह संश्लिष्टामापस्तेजसा तत्तेजोऽनिलेन वायुना तञ्च खे आकाशे संश्लिष्टं तच्चस्वंभूतादौ तामसाहङ्कारे, **तमहङ्कारं** महात्मनि महत्तत्त्वस्याऽऽत्मनि तद्व्यापके प्रधाने, कार्यं हि कारणत्वव्याप्यं महत्तत्त्वद्वारा तत्कारणे लयमनुसन्दधान **इत्यर्थः**। तस्मिन् प्रधाने स्थितां ज्ञानकलां ज्ञानशब्दवाच्यस्य् जीवस्य कलां विद्यां ध्यात्वा उपासनात्मकविद्याविशिष्टं **प्रत्यगात्मान** मनुसन्धायेर्थः। तया विद्यया अज्ञानं देहात्माभिमानस्वतन्त्रात्माभिमानरूपं विनिर्दहन् अपनयन् तां हित्वा उपासनरूपकलां **हित्वा** स्मृतिसन्ततिरूपोपासनविशिष्टवेषस्य स्वाभाविकत्वाभावादुपायभूतकलाविशिष्टत्वं न स्वरूपान्तर्भूतमिति मत्वेत्यर्थः। **ध्वस्तं** पुण्यपापात्मकं बन्धनं यस्मात् तथाभूत· निर्वाणसुखसंविदा निर्दुःखसुखस्वरूपज्ञानाख्येनानिर्देश्येन दृष्टवस्तुसजातीयतया

1 Hv omit आकाशे 2 HV पश्च 3--3 TW omit

निर्देष्टुमशक्येनाऽप्रतर्क्येण देवोऽयं मनुष्योऽयमिति तर्कितुमशक्येन, अनेन पदद्वयेन प्राकृतनामरूपाभ्यामनिर्देश्यत्वमुक्तम्। स्वेन भावेन भावशब्द स्तद्वत्पर अपहतपाप्मत्वादिस्वभावविशिष्टेन स्वरूपेणेत्यर्थ । तस्थौ मुक्तो बभूव ॥२७॥

इति श्रीमद्भागवते नवमस्कन्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्याया सप्तमोऽध्याय ॥७॥

**विज०** अविहतामप्रतिषिद्धा गतिं ज्ञानलक्षणा विद्यां भार्याया· एतदूद्वयमप्यस्तीति प्रकाशनाय सभार्यस्येत्युक्तम्। उपासनाकाले मन आदितत्त्वाना जडाना स्वस्वकारणे विलयस्तदभिमानिदेवतानां भिन्नानां भिन्नेषु प्रवेशलक्षणो विलयः स्वरूपाणां स्वस्वरूपेष्वेकीभावलक्षणश्चिन्तनीय इत्यतस्तं प्रकारमाह - मन पृथिव्यामिति "अन्नमयं हि सोम्य' मन आपोमय· प्राण स्तेजोमयी वाक्" छान्दो उ 6-5-4 इति श्रुते । अन्न पृथिवीत्यत पार्थिवम्मन पृथिव्यां विलीयतेति चेतनं मनो धारयत्तां पृथिवीमद्भीरप्सु अम्भस्तेजसा सह्रियते तत्तेजोऽनिलेन ग्रस्यते त वायु खे आकाशे लीनं तच्च खं शब्दादावहङ्कारे तमहङ्कारं महात्मनि महत्तत्त्वे तदभिमानिन तदभिमानिन्यात्मनि चतुर्मुखे ब्रह्मणि प्रविष्टम् ॥२५॥

तस्मिन्महत्तत्त्वे ज्ञानकलां बुद्धितत्त्व लीयते। तदभिमनिनो सरस्वतीतत्सायुज्येन स्थीयते इति ध्यात्वा तया बुद्धिकलया ज्ञानमस्वरूपचैतन्यं निर्दहन् ॥२६॥

ताम्बुद्धि अस्वरूपविषया हित्वा विध्वस्त बन्धन येन स तथा स[1] हरिश्चन्द्र स्वभावेन स्वमहिम्ना निर्वाणे शरीररहिते सुख संविदौ। यस्य स तथा। तेन सच्चिदानन्देन अनिर्देश्यश्चाप्रतर्क्यश्च तत्तथा। तेन ब्रह्मणा सह तस्थौ - "सह ब्रह्मणा विपश्चिता"। इति श्रुति । "आत्मन आकाशस्सम्भूत (तैत्ति उ 2-1-1) इति च श्रुतेः। शब्दादौ शब्दकारणे महति आत्मनि हरौ ज्ञानकलां ज्ञानलक्षणकामधेनुं ज्ञानपूर्ण इति ध्यात्वा तया तथा ध्यातया अज्ञानं तन्निमित्तसंसारं भस्मीकुर्वन् तां संसृतिं हित्वा परित्यज्य निर्वाणसुखसविदा अशरीरानन्दज्ञानलक्षणेन मादृशैरनिर्देश्याप्रतर्क्येण स्वेन स्वभावेन स्वरूपभूतैश्वर्येण तस्थाविति वा ॥२७॥

इति श्रीमद्भागवते महापुराणे पारमहस्यां संहिताया
श्रीविजयध्वजतीर्थविरचिताया पदरत्नावल्यां टीकायां
नवमस्कन्धे सप्तमोऽध्याय ॥६॥

---

1 AB omit स

# अष्टमोऽध्यायः

श्रीशुक उवाच-

हरितो रोहितसुत[1]श्चम्प[-1]स्तस्माद्विनिर्मिता।
चम्पापुरी सुदेवोऽतो विजयो यस्य चाऽऽत्मजः ।।१।।

[2]भरुकस्तत्सुतस्तस्माद्वृ[3]कस्तस्माच्च बाहुकः।
सोऽरिभिर्हृत[4]भू राजा सभार्यो वनमाविशत् ।।२।।

वृद्धं तं पञ्चतां प्राप्तं महिष्यनुमरिष्यती।
और्वेण जानताऽऽत्मानं प्रजावन्तं निवारिता ।।३।।

आज्ञायाऽस्यै सपत्नीभिर्गरो दत्तो[5]ऽन्धसा सह।
सह तेनैव सञ्जातः सगराख्यो महायशाः ।।४।।

सगरश्चक्रवर्त्याऽऽसीत् सागरो यत्सुतैः कृतः।
यस्तालजङ्घान् यवनाञ्छकान् हैहयबर्बरान् ।।५।।

नाऽवधीद्गुरुवाक्येन चक्रे विकृतवेषिणः।
मुण्डान् श्मश्रुधरान् कांश्चिन्मुक्तकेशार्धमुण्डितान् ।।६।।

अनन्तर्वाससः कांश्चिदबहिर्वाससोऽपरान्।
सोऽश्वमेधैरयजत सर्व[6]वेदसुरात्मकम् ।।७।।

और्वोपदिष्टयोगेन हरिमात्मानमीश्वरम्।
तस्योत्[7]सृष्टं पशुं यज्ञे जहाराश्वं पुरन्दरः ।।८।।

### श्रीश्रीधरस्वामिविरचिता भावर्थदीपिका

अष्टमे रोहितस्योक्तो वंशो यत्राऽभवन्नृप । सगर कपिलाक्षेपान्निर्दग्धा यस्य सूनव

**हरित** इति। चम्पस्तस्मादभूत्, येन चम्पापुरी विनिर्मिता। अतश्चम्पात् सुदेव ।।१।

---

1--1 MMa 'ता दासीत् च' 2 HV रुरुक , TW भेरुक , MMa तरुक 3 ABGJMMa 'स्तस्यापि 4 MMa 'राज्यस्तु , TW भूराज्य 5 HV ०ऽम्भसा सहा। , Mma 'ऽत्र साहस । 6 HV देव सुरोत्तमम्। 7 HV 'त्सृष्टप'

**भरुक** इति। हृता भूर्यस्य ॥२॥

**वृद्धमिति**। और्वेण ऋषिणा। आत्मानं देहम्। प्रजावंतं सगर्भम् ॥३॥

**आज्ञायेति**। गरो विषम्। तेन गरेण सहैव जात· ॥४,५॥

**नेति**। गुरुवाक्येन और्ववचनेन कांश्चिदहत्वैव विकृतवेषिणश्चक्रे। तदेवाऽऽह-मुण्डानिति। मुक्तकेशान् अर्धमुण्डितांश्च ॥६,७॥

**और्वेति**। और्वेणोपदिष्टो योग· उपायः तेन ॥८॥

## वीरराघवविदुषालिखिता भागवतचन्द्रचन्द्रिका

रोहितस्य सुतो हरित तस्माच्चम्पो, जज्ञे इति शेषः। तं विशिनष्टि - चम्पापुरी विनिर्मितेति, चम्पेनेति शेषः। अथ चम्पात्सुदेवो जज्ञे तस्य सुतं [1]वदन्[1] तं विशिनष्टि - यस्य सुदेवस्याऽत्मजो विजय ॥१॥

तस्य विजयस्य सुतो भेरुक। तस्माद्भेरुकात् वृक·। तस्याऽपि वृकस्याऽपि बाहुकः पुत्र·। तस्य वृत्तान्तमाह - स बाहुक शुत्रुभिर्हृ-तभू हृतराज्यश्च सभार्यो वनं प्राविशत् ॥२॥

तत्रैव वृद्धं स्थविरं पञ्चतां मरणं प्राप्तं बाहुकं तत्पत्नी अनुमरिष्यती अनुमरणं कर्तुमुद्युक्ता सती। आत्मानं स्वदेहं प्रजावन्तं [2]सगर्भं जानता और्वेण ऋषिणा निवारिता ॥३॥

तत [3]एव तामन्तर्वन्ती माज्ञाय प्रत्यभिज्ञाय अस्यै सपत्नीभिः गरो विषमन्धसा अन्नेन सह दत्तः। तत स्तेन गरेण सहैव सञ्जात सगराख्य पुत्र गरेण सह जातत्वात्सगर इति प्रसिद्ध स च महद्यशो यस्य तथाभूतः ॥४॥

चक्रवर्ती सप्तद्वीपाधिपतिरासीत्। तं विशिंषन् तद्वृत्तान्तमाह - यस्य सगरस्य सुतै· सागर· समुद्र· कृत·। करणं अत्र खनन न तु निर्माणं प्रियव्रतरथचरणनेमिकृतत्वस्य पञ्चमे कथितत्वात्। सागरै· कृतत्वात् समुद्रोऽपि सागराख्यो बभूव। किञ्च य सगर तालजङ्घादिसंज्ञान् यवनान् म्लेच्छान् गुरुवाक्येन गुरोरौर्वस्य वचनगौरवेणेत्यर्थ· [4]नाऽवधीत् न[4] हतवान्। किन्तु विकृतवेषिणः विरूपिण चक्रे। तदेवाऽऽह- मुण्डानिति। कांश्चिन्मुण्डान् कांश्चित् श्मश्रुमात्रधरान्, कांश्चिच्च मुक्तकेशान् अर्धमुण्डितान् ॥५,६॥

कांश्चिच्च न विद्यतेऽन्तर्वासोऽन्तरीयवस्त्रं येषां तान्, कांश्चित् न विद्यते बहिर्वासो बहि·परिधानीयं वासो येषां तथाभूतां श्चक्रे इति पूर्वेणाऽन्वय ॥७॥

---

1- -1 W omits 2 W omits सगर्भं 3 B T W omit एव 4- -4 W omits

किञ्च स सगरः और्वेणोपदिष्टो योग उपायस्तेनाश्वमेधैः सर्ववेदात्मकं सर्वदेवतात्मकं सर्वान्तरात्मानं सर्वस्य नियन्तारञ्च हरिमयजत आराधितवान्। तस्य सगरस्य यज्ञे शततमे उत्सृष्टं पशुमश्वं इन्द्रो जहार हृतवान् ॥८॥

**श्रीविजयध्वजतीर्थकृता पदरत्नावली**

तस्माद्धरिताच्चम्पः। तस्माच्चम्पा निर्मिता पुरी चम्पा नाम। अतश्चम्पात् यस्य सुदेवस्य ॥१॥

स बाहुकः ॥२॥

अनुमरिष्यती अनुमरणं कर्तुमिच्छन्ती प्रजावन्तं पुत्रवन्तं तस्या आत्मानं देहं जानता इयमन्तर्वत्नीति विदुषेत्यर्थः ॥३॥

सहसा हन्तीति साहसो गरोऽत्र गर्भे पुत्रमाज्ञाय सपत्नीभिरस्यै बाहुकपत्न्यै दत्त इत्यन्वयः। तेन गरेण विषेण सह वर्तत इति सगरः ॥४॥

"यस्य स्यादाज्ञया पृथ्वी चक्रवर्ती स ईर्यते" इति सगरपुत्राः सागरा तैः कृतत्वात् सागरः समुद्रः तालजङ्घादयो द्वीपान्तरवासिनो निर्देश्याः ॥५॥

पामरान् मा वधी रिति गुरोर्वाक्येन उत्सृष्टं मन्त्रयित्वेति शेषः, उपाकृतमित्यर्थः ॥६-८॥

**सुमत्यास्तनया दृप्ताः पितुरादेशकारिणः।**
**हयमन्वेषमाणास्ते समन्तान्न्यखनन्[1] महीम् ॥९॥**

**प्रागुदीच्यां दिशि हयं ददृशुः कपिलान्तिके।**
**एष वाजिहरश्[2]चोर आस्ते मीलितलोचनः ॥१०॥**

**हन्यतां हन्यतां पाप इति षष्टिसहस्रिणः।**
**उदायुधा अभिययुरुन्मिमेष तदा मुनिः ॥११॥**

**स्वशरीराग्निना तावन्महेन्द्रहृतचेतसः।**
**महद्व्यतिक्रमहता भस्मसादभवन् क्षणात् ॥१२॥**

**न साधुवादो मुनिकोपभर्जिता नृपेन्द्र पुत्रा इति सत्त्वधाम[3]नि।**
**कथं तमो रोषमयं विभाव्यते जगत्पवित्रात्मनि खे रजो भुवः ॥१३॥**

1 HV 'न्तादख' 2 ABGJ श्चैर 3 W यथा

**यस्येरिता सांख्यमयी दृढेह नौर्यया मुमुक्षु स्तरते दुरत्ययम्।**
**भवार्णवं मृत्युपथं विपश्चितः परात्मभूतस्य कथं पृथङ्मतिः ॥१४॥**

**योऽसमञ्जस इत्युक्तः स केशिन्या नृपात्मजः।**
**तस्य पुत्रोंऽशुमा न्नाम पितामहहिते रतः ॥१५॥**

**असमञ्जस आत्मानं दर्शयन्नसमञ्जसम्।**
**जातिस्मरः पुरा सङ्गात् योगी योगाद्विचालितः ॥१६॥**

**श्रीध०** तस्य द्वे भार्ये सुमति केशिनी च। तत्र सुमत्याः **पुत्राणां** प्रभावं मृत्युश्चाऽऽह - **सुमत्या**[1] इत्यादिना षड्भि· ॥९,१०॥

**हन्यतामिति**। एष वाजिहर इति ब्रुवन्तोऽभिययु । षष्टिसहस्राणि परिच्छेदकतया सन्ति येषाम्। उन्मिमेष लोचनोन्मीलनं चकार ॥११,१२॥

केचित्तु कपिलस्य कोपाग्निना दग्धा इति वर्णयन्ति तन्निराकरोति - **नेति** । कुत इत्यत आह। सत्त्वधामनि शुद्धसत्त्वमूर्तौ। जगत· पवित्र [2]विशुद्धिकर· आत्मा यस्य तस्मिन् कथं विभाव्यते [3]न सम्भाव्यत[3] इत्यर्थ·। असम्भावनायां दृष्टान्त· भुवो रजः खे कथं सम्भाव्यते इति ॥१३॥

किञ्च, **यस्येति**। यस्य येनेरिता प्रवर्तिता तस्य विपश्चितः सर्वज्ञस्य कथं पृथङ्मतिः अरिमित्रादिभेददृष्टिः ॥१४॥

तदेवं सुमत्या पुत्रेषु मृतेषु केशिन्या पौत्रेणाश्च समानीत·। पितृव्योद्धरणप्रयत्नश्च कृत इति दर्शयितुमाह - य इति [4]योऽसमञ्जस· इति[4]उक्तः केवलमज्ञै । वस्तुतस्तु समञ्जस एव सतुकेशिन्या· सुतः क्षेत्रजत्वमिव[5]प्रतीतं वारयति। तस्यैव नृपस्याऽऽत्मनो देहाज्जात· ॥१५॥

तस्य कथामाह चतुर्भि **असमञ्जसेति**। असमञ्जसः पुरा पूर्वजन्मनि योगी सन् सङ्गाद्धेतो· योगाद्विचालितः। अत इदानीं जातिस्मरस्सन् सङ्गपरिहाराय जनमुद्वेजयन् लोके गर्हितं ज्ञातीनाञ्च विप्रियं कर्माऽऽचरन् क्रीडतो बालान् सरय्वां प्रास्य त्प्राक्षिपदिति द्वयोरन्वयः ॥१६॥

**वीर०** सगरस्य द्वे भार्ये सुमति केशिनी च तत्र सुमत्याः **पुत्राणां** षष्टिसहस्रसंख्यानां प्रभावं मृत्युश्चाऽऽह - सुमत्या

---

1 ABJ इति 2 ABJ omit वि 3--3 ABJ सम्भाव्यते? 4--4 HV omit 5 HV प्रतीति°

इति षड्भिः। सुमत्यास्तनाया दृप्ता बलेन गर्विता ते च पितुराज्ञाकारिणो यज्ञियमश्वमन्वेषमाणा समन्ततो महीं न्यखनन् ॥९॥

एवं खनन्त प्रागुदीच्यां ऐशान्यां दिशि रसातलस्थस्य कपिलस्यान्तिके, इन्द्रेण स्थापितमिति शेष । चरन्तं हयमश्वं ददृशुः। ततोऽयमेव अस्य हर्ता [1]चोरस्सन्नपि मीलिते लोचने यस्य तादृश आस्ते ॥१०॥

अतोऽ यं पापात्मा हन्यतां हन्यतामित्येवं वदन्त षष्टिसहस्रिण सगरात्मजा उद्यतायुधास्सन्तोऽभिमुख माययु । तदा मुनि कपिल उन्मिमेष लोचनोन्मीलनं चकार ॥११॥

महेन्द्रेण हृतं चेतो येषान्ते महति कपिले व्यतिक्रमेणापराधेन हताश्च अत स्वशरीरेष्वेवोत्पन्नेनाऽग्निना क्षणाद्भस्मसा दभवन् भस्मीभूता बभूवुः ॥१२॥

केचित्तु कपिलस्य कोपग्निना दग्धा इति वर्णयन्ति। तान्निराकरोति- नेति द्वाभ्याम्। नृपेन्द्रस्य सगरस्य पुत्रा मुने कपिलस्य कोपाग्निना भर्जिता दग्धा इति न साधुवाद , अपि तु स्वापराधान्नष्टा इत्येव वादेस्साधुरित्यभिप्राय । कुत ? इत्यत आह सत्त्वधामनि केवलशुद्धसत्त्वाश्रये जगत पवित्र शुद्धिकर आत्मा देहो यस्य तस्मिन् कपिले रोषात्मकं तम कथं विभाव्यते सम्भाव्यते? असम्भावनायां दृष्टान्त रज., भुव इति शेष । भुव स्सम्बन्धि रज खे आकाशे यथा न सम्भाव्यते तद्वत्। नहि रज आश्रयं अपितु पादाहत्यादिवशादुत्थितं सत् खमिवाऽऽभाति, तथा सागराणामपराध एव मुनिस्थतया प्रतीत न तु तस्मिन् दोषस्य प्रसक्तिरिति दृष्टान्ताभिप्राय ॥१३॥

किञ्च। यस्य येन कपिलेनेह लोके ईरिता प्रवर्तिता सांख्यात्मिका नौर्नौका साङ्ख्यस्य भवार्णवतारणोपायत्वात् नौकात्वेन निरूपणम्। यस्याऽऽस्यत इति पाठान्तरम्। तदा यस्य आस्यतो मुखात् प्रादुर्भूता साख्यात्मिका दृढा नौरित्यर्थ । नावं विशिनष्टि। यया नावा मुमुक्षव संसारबन्धान्मोक्तुमिच्छवो जना दुरतिक्रमणीय मृत्योस्सकाशात् भय यस्मिन् तं भवार्णवं तरन्ति तस्यैवम्भूतस्य विपश्चितस्सर्वज्ञस्य परात्मन परानुग्रहैकमनस· परमात्मभूतस्य वा कथं पृथङ्मति शत्रुमित्रादिबुद्धि र्विभाव्यते इत्यनुषङ्ग ॥१४॥

तदेवं सुमत्या पुत्रेषु मृतेषु केशिन्या पौत्रेणाऽश्वस्समानीत । पितृणामुद्धरणोद्योगश्च कृत इति दर्शयितुमाह - य इत्यादिना यावदध्यायसमाप्ति। योऽसमञ्जस इत्युक्त केवलमज्ञै , वस्तुतस्तु समञ्जस स तु केशिन्या सुत , क्षेत्रजत्वप्रतीतिं वारयति- तस्यैव नृपस्य सगरस्याऽऽत्मनो देहाज्जात तस्याऽसमञ्जसस्य पुत्रोंऽशुमानिति प्रसिद्ध पितामहस्य सगरस्य हिते रत अंशुमत· पितामहहितेरतत्वकथनेन असमञ्जसस्य तत्प्रतिकूलत्वं सूचितम् ॥१५॥

---

1 A चौ°

तदेव दर्शयन् तद्वृत्तान्त माह - **असमञ्जस** इति चतुर्भिः। असमञ्जसः पुरा पूर्वजन्मनि योगी सन् सङ्गाद्धेतोः योगाद्विचालितः। अत इदानीं पौर्वदैहिकयोगप्रभावेन जातिस्मरः स्वजन्म स्मरन् पुनः सङ्गपरिहाराय समञ्जसमप्यात्मानं असमञ्जसमिव लोकस्य दर्शयन् ॥१६॥

**विज०** सगरस्य सुमतिः केशिनीति द्वे भार्ये। तत्र सुमतिर्गरुडस्य स्वसा तस्याः पुत्राः ॥९,१०॥

षष्टिसहस्रसंख्या येषामस्तीति षष्टिसहस्रिणः उन्मिमेष नेत्रविकासं कृतवान् ॥११॥

महेन्द्रेण हृतं चेतो येषां ते तथा मुग्धा इत्यर्थः। महतो व्यतिक्रमेण हताः। चोरो हन्यतामित्यादि वचनलक्षणा पराधेनैव स्वकृतदोषहताः नृपपुत्राः न तु मुनिकोपदग्धाः ॥१२॥

शारदजलवन्नित्यप्रसन्नमूर्तौ हरौ तमोगुणकारणस्य क्रोधस्य प्रवेशदुष्प्रदत्वात् क्रोधसम्भूतपापाटवीदहनत्वाच्चेत्याह - **न साधुवाद** इति। नृपेन्द्रपुत्रा मुनिकोपभर्जिता· इत्ययं साधुवादो नाऽस्ति, असम्भवात्। कथमिति तत्राऽऽह- सत्त्वधामनीति। शुद्धस्फटिकविशदज्ञानमूर्तौ श्रीकपिलदेवे रोषमयं तमः कथं विभाव्यते, उत्पत्तुमवकाशं लभते, न कथमपि। किञ्च। जगत्पवित्रीकरण समर्थस्वभावे। "आत्मा जीवे धृतौ देहे स्वभावे परमात्मनि" वैजः कोः 6-1-6 इति यादवः। कथमिव भुवो रजः पार्थिवो धूलिः खेयथेत्ययं लुप्तोपमः वेदे दृष्टत्वात् ॥१३॥

इतोऽपि तमोगुणकार्यस्य कोपस्य हरावनवसर इत्याशयेनाऽऽह-**यस्येति**। इह जगति सदनुग्रहाय यस्य येनेरिता ग्रन्थरूपेण कथिता दृढा अपेक्षितफलदानाय समर्थाऽन्यत्र नूतनत्वेन बलिष्ठा सांख्यमयी सम्यग् ज्ञानमयी नौस्तरी यया ज्ञाननावा मुमुक्षुर्मुक्तियोग्य· पुरुषो मृत्युपथं मृत्योर्मार्गं दुरत्ययं ज्ञाननावमन्तरेणाऽत्येतुमशक्यं भवार्णवं तरते, तादृशी येन सन्दृष्टेत्यर्थः। तस्य परात्मभूतस्य साक्षान्नारायणावतारस्य विपश्चितः शुद्धज्ञानवत· श्रीकपिलस्य पृथङ्मतिः रोषरूषिता मतिः कथं सम्भाव्यते इत्यन्वयः ॥१४॥

योऽसमञ्जस इत्युक्तः, हे नृप! स केशिन्याः सगरभार्याया[1] आत्मजः पितामहः सगरः ॥१५॥

पुरा पूर्वजन्मनि योगी योगाभ्यासनिपुणोऽसमञ्जसः सङ्गाद्धेतोः योगादीश्वरोपासनालक्षणाद्वि[2] चालितो हि यस्मात्तस्मात् पूर्वजातिं स्मरतीति जातिस्मरः आत्मानमसमञ्जसम् असमचेतस्सङ्गतमनतिरमणीयं दर्शयन् **सङ्गं** जहाविति शेष· ॥१६॥

1 A.B 'या' 2 B M Ma 'च'

आचरन् गर्हितं[1] लोके ज्ञातीनां कर्म विप्रियम्।
सरय्वां क्रीडतो बालान् प्राऽस्यदुद्वेजयञ्जनम् ॥१७॥

एवंवृत्तः परित्यक्तः पित्रा स्नेहमपोह्य वै।
योगैश्वर्येण बालांस्तान् दर्शयित्वा ततो ययौ ॥१८॥

अयोध्यावासिनस्सर्वे बालकान्पुनरागतान्
दृष्ट्वा विसिस्मिरे राजन् राजा चाथान्वतप्यत[2] ॥१९॥

अंशुमांश्चोदितो राज्ञा[3] तुरगान्वेषणे ययौ।
पितृव्यखातानुपथं भस्मान्ते[4] ददृशे हयम् ॥२०॥

तत्राऽऽसीनं मुनिं वीक्ष्य कपिलाख्यमधोक्षजम्।
अस्तौत् समाहितमनाः प्राञ्जलिः प्रणतो महान् ॥२१॥

[5-]अंशुमानुवाच[-5]-

न पश्यति त्वां परमात्मनोऽजनो न बुध्यतेऽद्यापि समाधियुक्तिभिः।
कुतोऽपरे यस्य[6] मनश्शरीरधी[7]र्विसर्गसृष्टा[8] वयमप्रकाशाः ॥२२॥

ये देहभाजस्त्रिगुणप्रधाना गुणान् विपश्यन्त्युत वा तमश्च।
यन्मायया मोहितचेतसस्ते विदुः स्वसंस्थं न बहिःप्रकाशाः ॥२३॥

तं त्वा महं ज्ञानघनं[9] स्वभावप्रध्वस्तमायागुणभेदमोहैः।
सनन्दनाद्यैर्मुनिभिर्विभाव्यं कथं विमूढः[10] परिभावयामि ॥२४॥

**श्रीध॰ एवमिति**। एवं विधं वृत्तं कर्म यस्य सः ॥१७-१९॥

**अंशुमानिति**। पितृव्यैः[11]खातमनु यः पन्था तं ययौ। भस्मान्ते[12] भस्मसमीपे ॥२०,२१॥

**नेति**। * "अजानन्तो ऽवजानन्तोऽप्यनुकम्प्या वयन्त्विति। तुष्टाव षड्भिरीशान मंशुमानेवमाशय "।

---

1 H V °तो 2 ABGJMMa चाप्य° 3 ABGJMMa °रज्ञा° 4 ABGJ °स्मान्ति , MMa °स्माऽपि 5--5 H M Ma T V W omit 6 ABGJMMa तस्य 7 Mma omit °धी 8 MMa °ष्टाऽवयव° 9 MMa घनस्स्वभाव 10 ABGJ हि 11 ABJ °तृव्यखा 12 ABJ °स्मान्ति * श्रीधरीयोऽय श्लोक

अजनोऽजो ब्रह्माऽपि त्वामद्याऽपि न पश्यति न च बुध्यते। कथम्भूतम्? आत्मन स्वस्मात् परं परमेश्वरम्। कैर्हेतुभि·। समाधियुक्तिभि· समाधिनाऽप्यपरोक्ष न पश्यति युक्तिभि· परोक्षमपि सम्यक् न बुध्यत इत्यर्थ । अपरे अर्वाचीनास्तु कुतस्त्वां पश्येयु । अर्वाचीनत्वे हेतु । तस्य ब्रह्मणो मनश्च शरीरश्च धीश्च सत्त्वतमोरज·कार्याणि ताभिर्ये विविधा देवतिर्यङ्नराणां सर्गास्तेषु सृष्टास्तत्राऽपि वयमप्रकाशा अज्ञा कुत· पश्यामेत्यर्थ· ॥२२॥

अपरे तर्हि किं पश्यन्ति? तदाह य इति। ये देहभाजस्ते स्वस्मिन् सम्यक् स्थितमपि त्वां न विदु·। किन्तु गुणानेव विपश्यन्ति। अथवा न गुणान् अपि तु तम एव पश्यन्ति। यतस्त्रिगुणा बुद्धिरेव प्रधानं येषां, अतो बहिरेव प्रकाशो ज्ञानं येषाम्। बुद्धिपरतन्त्रतया जाग्रत्स्वप्नयोर्विषयान्पश्यन्ति सुषुप्तौ तम एव केवलं, न तु निर्गुणं त्वाम्। सर्वत्र हेतु· यद्यत यस्य तव माययेति वा मोहितं चेतो येषां ते ॥२३॥

तथाऽप्यहं विचारेण ज्ञास्यामीति चे त्तत्राऽऽह **तमिति**। त त्वामहं विमूढ कथं परिभावयामि विभावयामि। कथम्भूतम्? ज्ञानघनं शुद्धज्ञानमूर्तिम्। स्वत एव प्रध्वस्तौ मायागुणनिमित्तौ भेदमोहौ येषां तैर्विभाव्यं विचिन्त्यम्। अयं भाव·। ज्ञानघनत्वान्न तावज्ज्ञानविषयत्वम्। विचारविषयत्वेऽपि मायागुणैरभिभूतोऽ हं न विचारेऽसमर्थ इति ॥२४॥

**वीर०** लोके गर्हितं ज्ञातीनाञ्च विप्रियं कर्माऽऽचरन् कुर्वन् जनमुद्वेजयन् भीषयन् क्रीडतो बालानादाय सरय्वां नद्यां प्रास्यत् प्राक्षिपत् ॥१७॥

एवंविधवृत्तोऽत एव पित्रा पुत्रास्नेहमपोह्य परित्यक्त निर्यापित· पुनर्योगप्रभावेन तान् प्रक्षिप्तान् बालान् दर्शयित्वा ययौ ॥१८॥

तदा पुन रागतान् बालकान्[2] दृष्ट्वा अयोध्यावासिनस्सर्वे जना विसिस्मिरे विस्मयं गतवन्त । हे राजन्! राजा सगर· अन्वतप्यत। अहो बत! तत्प्रभावमजानता मया स निर्यापित इत्यनुतप्तवान् ॥१९॥

अथांऽशुमत कथामाह - राज्ञा सगरेण तुरगान्वेषणे निमित्ते चोदित· आदिष्टोंशुऽमान् पितृव्याणां सम्बन्धी यः खात· तमनु य पन्थास्तं ययौ। तत्र भस्मान्ते (न्ति) भस्मसमीपे हयमश्वं ददृशे ॥२०॥

तत्रोपविष्ठमधोक्षजावतारभूतं कपिलाख्यं मुनिमवलोक्य महात्मा अंशुमन् प्रणत· कृतप्रणाम· प्राञ्जलि· समाहितमनाः तुष्टाव ॥२१॥

---

1 HV पश्येमे॰ 2 AB बालान्

स्तुति मेवाऽऽह - **नेत्यादिभिष्षड्भि** । तावत्त्वत्प्रभावमजानन्तोऽपि वयं त्वयाऽनुकम्प्या इत्यभिप्रयन् द्रुर्ज्ञेयत्वेन स्तौति। यस्य परमात्मनस्तव तत्त्वं याथात्म्यं जन· समाध्यादिभिरुपायैरद्धा स्फुटं न बुध्यते न जानाति, यतो योगिजन एव न बुध्यते। कुत· कथमपरेऽन्येऽयोगिनो वयं तस्य तव मन आदिभिर्विशेषेण सृज्यन्ते इति मनश्शरीरधीविसर्गा हिरण्यगर्भादय तै सृष्टा अप्रकाशा देहावयवमात्रगोचरज्ञानवन्त बुध्यन्ते। तत्र शरीरं प्रधानं धी सङ्कल्पविशेष । अजन इति पाठान्तरम्। तत्र अजनोऽजो ब्रह्मा समाध्युपायैस्त्वामद्याऽपि न जानाति कुतस्तस्याऽजनस्य मनश्च शरीरश्च धीश्च ताभि यैर्विविधा देवतिर्यङ्नरादीनां सर्गा तेषु सृष्टा । तत्राऽपि वयमज्ञाः न जानीम इत्यर्थ. ॥२२।

अपरे तर्हि किं बुध्यन्ते इत्यत्राऽऽह-**य** इति। ये देहभाजस्ते त्रिगुणप्रधाना गुणत्रयपरवशा गुणान् शब्दादीन् पश्यन्ति विषयानेवानुध्यायन्तीत्यर्थ.। उत वा अपि च तमश्शब्द प्रधानपर प्रधानकार्यं शरीरञ्च पश्यन्ति न तु स्वसंस्थं स्वात्मनि स्थितं त्वां विदु·। तत्र हेतुं वदन् देहभाजो विशिनष्टि - यस्य तव मायया मोहितं चेतो येषान्ते अत एव बहि प्रकाशा परागर्थज्ञानिन गुणत्रयपरवशत्वात् भगवन्मायामोहितत्वेन परागर्थैकज्ञानित्वाच्च न त्वां विदु·, अपि तु देहं तदुपभोग्यान् विषयांश्च विदु रित्यर्थ ॥२३॥

एवं सामान्यतो लोकस्य परमात्मयाथात्म्यावेदित्वमुक्तं, स्वस्मिन्नुपसंहरन् उक्तानुक्तगुणैर्विशिषंन् स्तौति - **तमिति** तमुक्तविधं ज्ञानघनमानन्दात्मकज्ञानैकरसं स्वभावत उत्पत्तेरारभ्य प्रध्वस्त मायामयभेदेषु प्रकृतिकार्यशरीरभेदेषु मोहभ्रान्ति ज्ञानम् आत्माभिमान इति यावत्। स येषां तै । सनन्दनाद्यैर्मुनिभिरपि केवलं विभाव्यं चिन्तनीयं न तु दृष्टमित्यभिप्राय । त्वामहं मूढ· कथं परिभावयामि मनसा विचारयामि ॥२४॥

**विज०** असमञ्जसत्वं दर्शयति - आचरन्निति। किं तत् ज्ञातीना विप्रियङ्कर्मेति तत्राऽऽह- सरय्वा मिति। जनमुद्वेजयन् कम्पयन् तीरे क्रीडतो बालान् सरय्वां नद्यां प्रास्यत् प्राक्षिपदित्यन्वय ॥१७॥

तत किमभूदिति तत्राऽऽह- एवमिति। योगैश्वर्येण युष्मद्बाला एते इति तान्नदीजलमग्नान् बालान् दर्शयित्वा तत· स्थानात् ययावित्यन्वयः ॥१८॥

विसिस्मिरे विस्मयं चक्रु अथाऽसमञ्जसे गते राजा चाऽन्वतप्यत पश्चात्तापं प्राप्त इत्यन्वय ॥१९॥

पितरि गतेंऽशुमता किमकारीति तत्राऽऽह- अंशुमानिति। पितृव्या असमञ्जससहोदरा तेषामनुमार्गं पितृव्याणां शरीरभस्म हय मपि ददृशे इत्यन्वय·। भस्मान्ति इति पाठे भस्मसमीपे हयं दृष्टवानित्यर्थ ॥२०॥

अस्तौत् स्तुतवान् ॥२१॥

स्तुति द्वेधा - विद्यमानगुणविषया, अविद्यमानगुणविषया च। तत्र द्वितीयाऽपि विद्वदविद्वद्विषयभेदेन द्विविधा। उभयस्याऽपि स्तुतिफलं न लभ्यते विदुष आत्मन्यविद्यमानगुणकथनेन ह्रिया स्तोतरि द्वेषसम्भवादविदुषोऽज्ञानेन मुखविकासादि सम्भवेऽपि स्तोतुः स्तुतिफलप्रदानशक्तिसामग्र्यभावात्, अतः प्रथमैव श्रेयसीति भावेन स्तौति - न पश्यतीति। अजनोऽजो विरिञ्चः यस्य परमात्मनोंऽशं त्वां न पश्यति अनन्तत्वेन साक्षादपरोक्षीकर्तुं न शक्नोति तर्हि परोक्षतो जानाति किं नेत्याह - नेति। समाधियुक्तिभिरेकाग्रीकृतचित्तयोगैरद्याऽपि न बुध्यते सम्यक् न जानातीत्यन्वय·। "पश्यन्तोऽपि न पश्यन्ति मेरोरूपं विपश्चित·" इतिवत्। न यस्य तत्त्वमिति पाठे परमात्मनो यस्य तव तत्त्वं न बुध्यत इति न, किन्तु बुध्यते। तथाऽपि सम्यक् न जानातीत्यर्थः। "कश्छन्दसां योगमावेद धीर· को धिष्ण्या प्रतिवाचं पपाद" इति श्रुतेः। न पश्यतीति रूपस्य नानोपायविशारद ज्ञानस्य परमात्मनस्तव तत्त्वं न बुध्यते इति वा। एकस्याऽभावेऽप्यन्यस्य सम्भव· किं न स्यात्, तथा दृष्टत्वात् इत्याशङ्क्य इतरविषयोच्यं न्यायो न परमात्मविषय इति भावेनाऽऽह- कुत इति। अपरे विरिञ्चादितरे समाधियुक्तिरहिताः कुतो हेतो· पश्यन्ति? जानन्ति दर्शनादिसद्भावेन किमपि लिङ्गमित्यर्थ·। अनेन चोद्यं कथं परिहृतं इति तत्राऽऽह- तस्येति। तस्य विरिञ्चस्य मनस· शरीराच्च विसर्ग· विशिष्टा सृष्टि येषां मरीच्यादीनां ते मन·शरीरविसर्गा तै सृष्टेषु शरीरावयवेषु श्रोत्रादिषु प्रकाश·। अभिमानित्वेन स्थितिलक्षणो येषां दिक्सूर्यादीनां ते मनशरीरविसर्गसृष्टावयवेप्रकाशा । [1]अनेन इन्द्रादयो मरीच्यादयः उभयेऽपि प्रत्युक्ता·। अत्र जनो न पश्यति न बुध्यते इत्यङ्गीकारे कुतोऽपरे इत्येतद्गतार्थत्वेनाऽसङ्गतं स्यादिति बहुवचनमेवाऽवशिष्यते इति पदच्छेदेन विरिञ्च एव ग्राह्य ॥२२॥

ये देहभाजश्शरीरिण· ते त्रिगुणप्रधाना· सत्त्वप्रधाना· रज·प्रधाना· तम प्रधाना· इति त्रिविधा.। तत्र रज·प्रधानाः राजसाः, मानुषा·, त्रिगुणप्रधानाः धर्मार्थकामपरायणा गुणान् सर्गादीनेव पश्यन्ति न मोक्षं तम·प्रधानास्तामसा असुराः यस्य हरेर्मार्यया बन्धशक्त्या मोहितचेतस· अन्यथाज्ञानपूर्णबुद्धयः तमो वा अन्धं तम एव विशिष्टं पश्यन्ति अनुभवन्ति। अत्र निमित्तमाह - त इति। ते स्वसंस्थं स्वहृदि स्थितं विष्णुं न विदुरिति यत्तस्मादिति शेष । तर्ह्यचेतना· किन्ते? इति नेत्याह - बहिरिति। बहिर्देहादा वेव प्रकाशो येषां ते तथा अनात्मज्ञानिन इत्यर्थ। "आत्मैव महैप्य" इति श्रुतेः। ज्ञानाश्रयत्वेन चेतनत्वेऽपि यथार्थज्ञानं नाऽस्तीति भाव· ॥२३॥

ये सत्त्वप्रधानाः सात्त्विकप्रकृतय· तै· सनन्दनाद्यैर्मुनिभि र्विभाव्यं उपास्यं तं तत्तद्योग्येभ्यस्तत्फलदातारं त्वामहं कथं परिभावयामि चिन्तयामि चिन्तने काऽनुपपत्तिरिति तत्राऽऽह - विमूढ इति। सामान्यज्ञाते वस्तुनि विशेषजिज्ञासा सञ्जाघटीति। मम तु तदेव नाऽस्ति। अत त्वद्विषयज्ञानाभाव एवाऽनुपपत्तिरित्यर्थ । सनन्दनादीनामपि देहभाक्त्वाविशेषान् तत्परिभावना कथं

1 A B omit अनेन

स्यादिति तत्राऽऽह - प्रध्वस्तेति। प्रध्वस्तो मायामय· प्रकृतिहेतुक· भेदमोह· अनात्मन्यात्मत्वमोहो यैस्ते तथा तैः निरस्तमिथ्याज्ञानै रित्यर्थ । अनेन देहभाक्त्वेऽपि विशेषोऽस्तीति दर्शितम्। "कार्यते ह्यवशः कर्म सर्व· प्रकृतिजैर्गुणै·" (भ गीः3-5) इति स्मृति ॥२४॥

प्रशान्तमायागुणकर्मलिङ्गमनामरूपं सदसद्विमुक्तम्।
ज्ञानोपदेशाय गृहीतदेहं[1] नमामहे त्वां पुरुषं पुराणम् ॥२५॥

[2]यन्मायारचिते लोके वस्तुबुद्ध्या गृहादिषु
भ्रमन्ति कामलोभेर्ष्यामोहविभ्रान्तचेतसः ॥२६॥

अद्य नः सर्वभूतात्मन् कामकर्मेन्द्रियाशयः[3]।
मोहपाशो दृढश्छिन्नो भगवंस्तवदर्शनात् ॥२७॥

श्रीशुक उवाच

इत्थं गीतानुभावस्तं भगवान् कपिलो मुनिः।
अंशुमन्तमुवाचेदमनुगृह्य धिया नृप ॥२८॥

श्रीभगवानुवाच

अश्वोऽयं नीयतां वत्स पितामहपशुस्तव।
इमे च पितरो दग्धाः गङ्गाम्भोऽर्हन्ति[4] नेतरत् ॥२९॥

[5-]श्रीशुक उवाच[5]

तं परिक्रम्य शिरसा प्रसाद्य हयमानयत्।
सगरस्तेन पशुना क्रतुशेषं समापयत् ॥३०॥

राज्यमंशुमति[6] न्यस्य निःस्पृहो मुक्तबन्धनः।
और्वोपदिष्टमार्गेण लेभे गतिमनुत्तमाम् ॥३१॥

---

1 MMa लिङ्ग 2 ABGHJV त्व° 3 W °श्रय 4 MMa °र्हति 5- -5 ABGJMMa omit 6 MMa °मते

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
नवमस्कन्धे अष्टमोऽध्याय ॥८॥

**श्रीध० प्रशान्तेति**। हे प्रशान्त। तस्मात्त्वां पुरुषं पुराणं केवलं नमाम[1]हेत्यन्वयः। पुराणपुरुषत्वे हेतुः, मायाया गुणाः कर्माणि च विश्वसृष्ट्यादीनि लिङ्गानि च ब्रह्मादिरूपाणि यस्य तम्। प्रशान्तत्वे हेतु· - सदसद्भ्यां कार्यकारणाभ्यां पुण्यपापाभ्यां वा विमुक्तम्। अतोऽनामरूपं त[2]त्तत्कृतनामरूपशून्यं, किन्तु ज्ञानोपदेशाय गृहीत प्रकटितो देहः शुद्धसत्त्वमूर्तिर्येन तम्। यद्वा हे प्रशान्तमाय इति हे अगुण इति च सम्बो[3]धनं, कर्मभि सृष्ट्यादिकार्यैर्लिङ्गानि यस्येति योज्यम्। यद्वा प्रशान्ता मायागुणादयो यस्मिन्नित्येकमेव पदम् ॥२५॥

स्वभाग्य श्लाघते **यन्मा येति** द्वाभ्याम्। कामादिभि विभ्रान्तानि चेतांसि येषां ते। इमे सर्वे गृहादिषु भ्रमन्ति॥२६॥

**अद्येति**। हे सर्वभूतात्मन्। नोऽस्माकं त्वत्कृपयैव घटितात् त्वद्दर्शनात् अद्य दृढोऽपि मोहमयः पाशश्छिन्न· कथंम्भूतः कामादीनामाशय आश्रय·। त्वत्प्रसादेन कृतार्थोऽस्मीत्यर्थ ॥२७,२८॥

**अश्वइति**। अश्वं लब्ध्वाऽपि साकाङ्क्षं प्रत्याह - इमे चेति ॥२९॥

[4]**तंपरिक्रम्येति**। शु[-4]कोक्ति ॥३०,३१॥

इति श्रीमद्भागवते महापुराणे
श्रीधरस्वामिविरचितायां भावार्थदीपिकाया
व्याख्यायां नवमस्कन्धे अष्टमोऽध्याय·॥८॥

**वीर०** यतोऽहं भावयितुमप्यनर्ह ततस्त्वां केवलं नमस्करोमीत्याह - **प्रशान्तेति**। मायागुणा· प्रकृतिगुणाः सत्त्वादयः कर्मलिङ्गं कर्मकृतदेहश्चेत्येते यस्य प्रशान्ता न विद्यन्ते स प्रशान्तमायागुणकर्मलिङ्ग· तं अनामरूपं जात्यादिभिस्तत्प्रयुक्त देवादिनामभिश्च वर्जितं सदसद्विमुक्तं शुभाशुभफलमुक्तं चेतनाचेतनधर्मैरस्पृष्टं वा ज्ञानोपदेशाय न तु सुखदुःखानुभवाय गृहीतं स्वेच्छोपात्तं लिङ्गं शरीरं येन तं पुराणं पुरुषं त्वां नमामहे ॥२५॥

**यन्मायेति**। यस्य मायारचितेषु गृहादिषु वस्तुबुद्ध्या भोगस्थानादिबुद्ध्या भ्रमन्ति तं त्वं नमामहे इति पूर्वेणान्वय·। भ्रमणे हेतुं वदन् तत्कर्तॄन् विशिनष्टि - कामादिभिर्विभ्रान्त चेतो येषां ते इति। तत्र कामो राग , लोभोऽनलम्बुद्धिः, ईर्ष्या

---

1 ABJ 'मेत्य' 2 HV तत्कृ' 3 ABJ 'ध्य 4--4 HV omit

कामोपभोगविरोधिष्वक्षम· मोहश्चित्तविकार ॥२६॥

तद्दर्शनात्स्वस्य कृतार्थतामाविष्करोति - **अद्येति**। हे सर्वभूतात्मन्! हे भगवन्! तव दर्शनात् अद्याऽधुना नोऽस्माकं कामा·[1] काम्यन्त इति कामाः शब्दादयो विषया·, विषयस्पृहा वा काम·, कर्माणि पुण्यापुण्यात्मकानि तत्करणानीन्द्रियाणि तेषा माश्रयो मूलभूतो मोह देहात्मभ्रान्त्यादिरूपो दृढो निर्मोच्य छिन्न·, आशय इति पाठान्तरम्। तदा कर्मेन्द्रियाणि ज्ञानेन्द्रियाणि श्रोत्रादीनि तेषां शब्दादिकामानां ग्राहकत्वात् कर्मेन्द्रियाणि वागादीनि तेषां तत्प्रभवत्वात् तान्येवाशयमाश्रयो यस्य स मोहात्मकः पाश मोहस्याऽऽत्मगतऽत्वेपि उभयेन्द्रियप्रवृत्तिमूलकत्वेन उभयेन्द्रियाश्रयत्वमुक्तम् ॥१७॥

हे नृप! इत्थं गीत· सङ्गीत संस्तुतोऽनुभाव प्रभावो यस्य स· भगवान् कपिलो मुनिस्तमंशुमन्तं मनसा अनुगृह्य इदं वक्ष्यमाणमुवाच ॥२८॥

तदेवाह-**अश्व** इति। हे वत्स! अंशुमन्! अयमश्वस्तव पितामहस्य सगरस्य यज्ञिय· पशु· नीयताम्। भस्मराशीन् दर्शयित्वा इमे च तव पितर· पितृव्या· दग्धास्ते च गङ्गाम्भ एवाऽर्हन्ति नेतरच्चाऽम्भ। गङ्गाम्भसैवैषां क्रिया कार्या नेतरेण। अनेनैषामुत्तारणमित्यर्थः ॥२९॥

एवमुक्तवन्तं कपिलं प्रदक्षिणीकृत्य शिरसा प्रसाद्य प्रणिपत्यांऽशुमान् हयमानीतवान्। तेन पशुना हेतुना क्रतुशेषं सगरस्समापयत् ॥३०॥

ततो राज्यमंशुमति न्यस्य निधाय निस्पृह देहतदनुबन्धिषु स्पृहारहित मुक्तं बन्धन बन्धकमहम्ममत्वादिकं येन तादृश और्वेणोपदिष्टो मार्गः स्वात्मपरमात्मयाथात्म्यज्ञानरूप , तेन न विद्यते उत्तमा यस्यास्तां गतिं मुक्तिं लेभे लब्धवान्॥३१॥

इति श्रीमद्भागवते नवमस्कन्धे

श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां

व्याख्याया अष्टमोऽध्याय ॥८॥

**विज०** त्वां नमामह इत्यन्वय । त्वामिति क इति तत्राऽऽह- पुरुषमिति। तर्हि देवदत्तवच्चिरन्तन· कश्चिदयं स्यादिति नेत्याह - अनामरूपमिति। प्राकृतनामादिरहितम्। तत्कुत इति तत्राऽऽह- **प्रशान्तेति**, प्रशान्तानि उपरतानि मायागुणा सत्त्वादय । कर्माणि तन्निमित्तव्यापारा , लिङ्गं शरीरं यस्य स तथा तत्कारणत्वेन मृद्वदभिन्नत्वम्। एतत्कथं घटते?

---

1 W omits कामा

इति तत्राऽऽह- सदिति। सतो ब्रह्मणः, असतः परमाण्वादे. "विमुक्तं भिन्नं रुक्मवर्णम्" इति श्रुतेः। शरीरत्वेन नामरूपदर्शनात् तदभावकथनं कथमिति तत्राऽऽह - ज्ञानेति लोकानुग्रहार्थं शरीरग्रहणं, न तु कर्मनिमित्तम्। अत एव नित्यदु·-खाभाव· ॥२५॥

त्रिविधानां जीवानां स्वभावाभिभवो नाऽस्तीति दर्शनाय मानुषस्वभावमाह - **यन्मायेति**। यस्य हरेर्मायया कृत्या इच्छया वा रचिते निर्मिते लोके भूम्यादौ रचितगृहादिषु वस्तुबुद्ध्याऽनश्वराणीति मनसा भ्रमन्ति परिवर्तन्ते के, मानुषा इति शेषः। निमित्तमाह - कामेति । कामो विषयाभिलाष , लोभो धर्मादिविषयार्थत्यागानिच्छा, ईर्ष्या अक्षमा, मोहो वैचित्यम्, एतैर्विभ्रान्तं चेतो येषां ते तथा। अनेनाऽन्यद् द्वयं व्याख्यातम् ॥२६॥

उपसंहरति - **अद्येति**। अद्य नोऽस्माकं पुत्रादिषु दृढो मोहपाश· अज्ञानहेतुकः स्नेहपाशश्छिन्न इत्यर्थः। काम कर्मेन्द्रियेषु आशेत इति कामकर्मेन्द्रियाशय· ॥२७,२८॥

अर्हति अपेक्षते ॥२९-३१॥

इति श्रीमद्भागवते महापुराणे पारमहस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
नवमस्कन्धे अष्टमोऽध्याय ॥८॥

# नवमोऽध्यायः

[1] श्रीशुक उवाच [-1]

अंशुमांश्च तपस्तेपे गङ्गा[2]नयनकाम्यया।
कालं महान्तं नाशक्नोत् ततः कालेन संस्थितः ॥१॥

दिलीपस्तत्सुतस्तद्वदशक्तः कालमेयिवान्।
भगीरथस्तस्य सुत[3]स्तेपे स सुमहत्तपः ॥२॥

दर्शयामास तं देवी प्रसन्ना वरदाऽस्मि ते।
इत्युक्तः स्वमभिप्रायं शशंसावनतो [4]नृपः ॥३॥

[5]कोऽपि धारयिता वेगं पतन्त्या मे महीतले।
[6-]न चेद्भूमितलं[-6] भिच्वा नृप यास्ये रसातलम् ॥४॥

किञ्चाहं [7]न भुवं यास्ये नरा मय्यामृजन्त्यघम्।
मृजामि तदघं [8]क्वाहं राजंस्तत्र [9]विचिन्त्यताम् ॥५॥

[10-] भगीरथ उवाच [10]

साधवो [11]न्यासिनश्शान्ता [12]धर्मिष्ठा लोकपावनाः।
हरन्त्यघं तेऽङ्गसङ्गात् [13-]तेष्वाऽऽस्ते ह्यघभिद्धरिः[-13] ॥६॥

धारयिष्यति ते वेगं रुद्रस्त्वात्मा शरीरिणाम्।
यस्मिन्नोतमिदं प्रोतं विश्वं शाटीव तन्तुषु

श्रीशुक उवाच

[14-]इति तस्य वचश्श्रुत्वा गङ्गा तं पुनरब्रवीत्[14] ॥७॥

---

1-1 MMa omit 2 MMa °गमन 3 ABGJMMa °पुत्र° 4 MMa भृशम् 5 MMa को विधा°, W कोऽनु° 6--6 ABGJMMa अन्यथा भूतल 7 MMa दुर्गतिं या° 8 ABGJ कुत्र, Mma क्रूर 9 MMa विविच्यताम् 10--10 HTVW राजोवाच 11 MMa निराशिष° 12 ABGJMMa ब्रह्मिष्ठा 13--13 MMa ये प्राता स्वह्रदाहरिम्। 14- -14 This half verse is found in H T V W edns It is commented by Veer Raghava only

गङ्गोवाच

[1-] प्रसादय महेशानं धारणार्थं मदम्भसाम् [-1]।
तच्छ्रुत्वा स नृपो देवं तपसाऽऽराधयच्छिवम्।
कालेनाऽल्पीयसा राजन् तस्येशानस्त्वतुष्यत ॥८॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

नवमेंऽशुमतो वंशः खट्वाङ्गावधि वर्ण्यते। गङ्गां भूतलमानिन्ये यस्य पौत्रो भगीरथः॥

**अंशुमानिति**। यथा सगरः पौत्राय राज्यं दत्वा तपस्तेपे तथांऽशुमांश्च स्वपुत्राय राज्यं दत्वा महान्तं कालं तपस्तेपे इति चकारस्यार्थः। नाशक्नोत्, गङ्गामानेतुमिति शेषः। संस्थितो मृतः ॥१॥

**दिलीप** इति। कालं मृत्युमेयिवान् प्राप्तः ॥२॥

**दर्शयामासेति**। तं प्रति आत्मानं दर्शयामास। ते वरदाऽस्मीति गङ्गयोक्तःसन् स्वमभिप्रायं पूर्वजोद्धरणं शशंस कथयामास ॥३॥

**क इति**। आह गङ्गा कोऽपि गगनात्पतन्त्या मे वेगं धारयिता धारयिष्यति ॥४॥

**किमिति**। किञ्च। आमृजन्ति क्षालयिष्यन्ति[2]। तत्रोपायो विचिन्त्यताम् ॥५॥

**साधव इति**। [3]अघं हरिष्यन्ति। अघं भिनत्तीत्यघभित् ॥६॥

**धारयिष्यतीति**। आत्मा कथम्भूतः यस्मिन्निदं विश्वमोतं ग्रथितमूर्ध्वतन्तुषु शाटीव पट इव प्रोतश्च तिर्यक्तन्तुषु पट इव। असौ सर्वाधारस्त्वद्वेगं धारयिष्यतीत्यर्थः ॥७॥

[4-]**प्रसादयेति**। इत्येवं गङ्गामुक्त्वा। तच्छ्रुत्वेति पाठे श्रावयित्वेत्यर्थः[-4] ॥८॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

एवमानीताश्वः पितामहदत्तराज्योऽपि अंशुमान् पितॄणां समुत्तरणार्थं गङ्गामानेतुमिच्छया महान्तं कालं तपस्तेपे चक्रे। नाशक्नोत् गङ्गामानेतुं न प्रबभूव। किन्तु कालेनोपसंहृतो मृतो बभूव ॥१॥

अथ तस्यांऽशुमतः सुतो दिलीपोऽपि तद्वत् पितृवत्तपःकुर्वन् गङ्गामानेतुमशक्त एव कालं मृत्युमेयिवान् प्राप्तवान्। अथ

---

1--1 This half verse is found in H T V W edns It is commented by Veeraraghava only 2 ABJ °यान्ति 3 H V omit अघ 4--4 H V omit

**तस्य दिलीपस्य सुतो भगीरथः स सुमहत्तपश्चक्रे ॥२॥**

**ततस्तेन तपसा प्रसन्ना गङ्गा दर्शयामास, आत्मानमिति शेषः। ते तुभ्यं वरदाऽस्मीति तं भगीरथमुवाचेति शेषः। इत्थं गङ्गयोक्तो नृपो भगीरथः प्रणतः स्वकीयमभिप्रायं शशंस उक्तवान् ॥३॥**

पुनस्तं गङ्गोवाच - **कोन्विति** द्वाभ्याम्। महीतले पतन्त्या मम वेगं कोनुधारयिता? कोपीति पाठे - अपि शब्द सम्भावनायां, को वा धारयितेत्यर्थः। न चेद्धारयिता कोऽपि न विद्यते चेत् तर्हि, हे नृप! भूमितलं भित्त्वा रसातलं यास्ये गमिष्यामि ॥४॥

भूमितल एव किं न प्रवहसीत्यत्राऽऽह - **किञ्चेति**। किञ्चाऽहं भुवं न यास्ये? भूमौ न प्रवहामीत्यर्थः। तत्र हेतुः - नरा भूमिष्ठाः अघं पापं मय्यामृजन्ति शोधयन्ति प्रक्षिपन्ति। तन्नरैस्त्यक्तमघमहं क मृजामि प्रक्षिपामि? हे राजन्। तत्र विचिन्त्यताम् उपाय इति शेषः ॥५॥

ततो भगीरथ आह - **साधव** इति द्वाभ्याम्। न्यासिन काम्यकर्मत्यागिनः शान्ता जितेन्द्रियाः, ब्राह्मणाः ब्राह्मणश्रेष्ठाः यद्वा, अतिशयितं ब्रह्म ब्रह्मिष्ठं तेन तदुपासका लक्ष्यन्ते, ब्रह्मविदग्रेसरा इत्यर्थः। अत एव लोकपावनाः साधवस्तवाघं नरै - स्त्यक्तमङ्गसङ्गात् स्नानरूपाद्धरन्ति, तर्हि ते क मृजन्तीत्यत्राऽऽह - तेष्वाऽऽस्ते ह्यघभिद्धरिरिति। तेषु साधुषु अघभिद्धरिरास्ते हि, तर्हि हरिरपि क मृजतीत्याशङ्काऽघभिदित्यनेन परिहृता। अघं भिनत्ति निरस्यति नाशयतीति यावत्, नत्वघमादायाऽन्यत्र प्रक्षिपतीति अभिप्रायः ॥६॥

एवं किञ्चाऽहमित्यादेरुत्तरमुक्तमथ कोन्वित्यादेरुत्तरमाह - **धारयिष्यतीति**। रुद्रो रुद्रशरीरः परमात्मा तव वेगं धारयिष्यति। तस्य धारणायामसामर्थ्यशङ्कां वारयन्विशिनष्टि - शरीरिणां ब्रह्मादिस्थावरान्तानामात्मा अन्तःप्रविश्य प्रशासनेन धारकः। किं बहुना? यस्मिन् परमात्मनि इदं विश्वं प्रोतं शरीरतया समवेतं यथा तन्तुषु शाटी तद्वत्कृत्स्नविश्वधारकत्स्य अकलितश्रम एव बिभर्त्यसावित्युक्तविधस्य त्वद्वेगधारणायां सामर्थ्यं कैमुत्यन्यायसिद्धमिति भावः। इत्येवंविधं तस्य भगीरथस्य वच आकर्ण्य तं भगीरथं पुनर्गङ्गोवाच ॥ ७ ॥

तर्हि मदम्भसां धारणार्थं महेशानं रुद्रशरीरकं परमात्मानं प्रसादय प्रसन्नं कुर्विति तद्गङ्गावच श्रुत्वा स नृपो भगीरथ स्तपसा शिवमतोषयत्। हे राजन्! अल्पीयसैव कालेन तस्य भगीरथस्य ईशानो रुद्रः प्रसन्नो बभूव ॥८॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

महदपराधपङ्कप्रक्षालनेन आत्मजनोद्धाराय महान्तं काल तपस्तेप इत्यन्वयः। संस्थितो मृतः ॥१॥

कालमेयिवान् मरणं प्राप्त ॥२॥

प्रसन्ना देवी ते वरदाऽस्मीति निगद्य स्वात्मानं तमुद्दिश्य प्रदर्शयामास ॥३,४॥

किञ्च। रसातलप्रवेशलक्षणानर्थ एव न, अन्योऽप्यस्तीत्याशयेनाऽऽह - **किञ्चेति**। कुतो नरकप्राप्तिरिति तत्राऽऽह- नरा इति। पापिनो नरा· स्नानादिना मय्यघमामृजन्ति शोधयन्ति पापं निक्षिप्य स्वयं शुद्धा भवन्ति। हे राजन्! तदघं मृजामि शोधयामि, क्वेति शेष·। क्व निक्षिप्य शुद्धा भवामि। अत्राऽस्मिन्नर्थे विविच्यतां नराणामघसंहृत्यहं मदघसंहर्ता क इति विवेकः क्रियतामित्यन्वय ॥५॥

उत्तरमाह - **साधव** इति। शमदमादिलक्षणसम्पन्नाः साधवोऽत एव निराशिषः स्वर्गादिसुखलक्षणाशारहिताः कुत इति तत्राऽऽह- ब्रह्मिष्ठा इति, इष्ठन् प्रत्ययान्तं चैतच्च ब्रह्मणि पूर्णा, भगवद्भक्त्येति शेष·। अमी अतिशयेन ब्रह्मपूर्णाः ब्रह्मिष्ठाः ब्रह्मण्येव स्थिता इत्ययं छान्दस। तथात्वे ब्रह्मस्था इति स्यात्। तस्मादयमिष्ठन्नतस्तमनुसृत्यैवं कृतम्। लोकपावना एवंविधा ये स्वहृदा हरिं प्राप्तास्ते अङ्गसङ्गात्पादप्रक्षालनादिना हस्ताद्यङ्गसम्बन्धात्पापिनामघं हरन्तीति शेषः तेषां स्वहृदि स्थितहरिसान्निध्यात्पापं नास्त्येव तव किं वक्तव्यमनवरतपद्मनाभपादसरोजनिजवासाया इत्यर्थः ॥६॥

द्वितीयं प्रश्नं परिहृत्य प्रथमं परिहरति - **धारयिष्यतीति**। शरीरिणामात्माऽहङ्कार रूपेणस्वरूपभूत इव शाटी कन्था गुणितद्विपुटिका वा ॥७॥

तथाऽल्पीयसा कालेन शिव आशु अतुष्यतेति॥८॥

**तथेति राज्ञाऽभिहितः[1] सर्वलोकहितश्शिवः।**
**दधाराऽवहितो गङ्गां पादपूतजलां हरेः ॥९॥**

**भगीरथोऽथ[2] राजर्षिर्निन्ये भुवनपावनीम्।**
**यत्र स्वपितॄणां देहा भस्मीभूताश्च[3] शेरते ॥१०॥**

**रथेन वायुवेगेन प्रयान्तमनुधावती।**
**देशान्[4] पुनन्ती निर्दग्धानसिञ्चत्[5]सगरात्मजान् ॥११॥**

**यज्जलस्पर्शमात्रेण ब्रह्मदण्डहता अपि।**
**सगरात्मजा दिवं जग्मुः केवलं देहभस्मभिः ॥१२॥**

---

1 ABGJ °तम 2 ABGJ °रथ स , MMa रथोऽपि 3 ABGJMMa °ता स्म 4 H V °हान् 5 ABGJMMa °नाऽसि°

भस्मीभूताङ्गसङ्गेन स्वर्यातास्सगरात्मजाः[1]।
किं पुनः श्रद्धया देवीं ये सेवन्ते धृतव्रताः ॥१३॥

न ह्येतत्परमाश्चर्यं स्वर्धुन्या यदिहोदितम्।
अनन्तचरणाम्भोजप्रसूताया भवच्छिदः ॥१४॥

सन्निवेश्य मनो यस्मिन् श्रद्धया मुनयोऽमलाः।
त्रैगुण्यं दुस्त्यजं हित्वा सद्यो यातास्तदात्मताम् ॥१५॥

श्रुतो भगीरथाज्जज्ञे तस्य नाभा[2]ऽवरोऽभवत्।
सिन्धुद्वीपसुत[3]स्तस्मादयुतायुस्ततोऽभवत् ॥१६॥

**श्रीध० तथेति**। राज्ञाऽभिहितं तथेत्यङ्गीकृत्य। हरे पादेन पूतं जलं यस्या ताम् ॥९-११॥

प्रसङ्गाद्गङ्गामाहात्म्यमाह - **यदिति** चतुर्भिः यस्या जलस्पर्शमात्रेण, तच्च केवल देहभस्मभिरेव न साक्षात्। ब्रह्मणि स्वकृतेन दण्डेन हता अपि ॥१२॥

[4]तदेव प्रपश्यति **भस्मीभूतेति**। भस्मीभूतेनाङ्गेन यस्सङ्गस्तेन तां श्रद्धया ये सेवन्ते ते इति शेषः [5-]एतेषां फलं किं वक्तव्यमिति भाव[-5] ॥१३-१४॥

[6-]अनन्तस्य विशेषणं[-6] **सन्निवेश्येति**। [7]यस्मिन् अनन्ते[7] त्रैगुण्यं देहबन्धनम्[8] ॥१५,१६॥

**वीर०** ततो राज्ञा भगीरथेनाभिहितः गङ्गाया वेगं धारयेति विज्ञापितः सर्वस्य लोकस्य हितकर शिवस्तथेति बिभर्म्यह मित्युक्त्वा अवहितः सावधानः हरेः पादावनेजनेन पूतं जलं यस्यास्तां गङ्गां दधार। अत्र शिवशब्दः शिवमात्रपरो न तु विशेष्यभूतपरमात्मपर्यन्तः गङ्गाया हरिपादपूतजलत्वविशेषणसामर्थ्यात्। यद्वा पूर्वत्राऽपि रुद्रेशानादिशब्दाः विशेषणभूतरुद्र मात्रगोचराः आत्मा शरीरिणामित्यादितु अष्टमूर्तित्वाऽभिप्रायेणोक्तम् ॥९॥

ततो राजर्षिर्भगीरथो यत्र पितृणां देहाः [9]भस्मीभूता शेरते आसते स्म तत्र भुवनपावनीं गङ्गां निन्ये आनयत् ॥१०।

वायोरिव वेगो यस्य तेन रथेन प्रयान्तं भगीरथं अनु॰ ावत्यनुगच्छन्ती गङ्गा देशान् मार्गस्थानपि पुनन्ती निर्दग्धान् सगरात्मजानसिञ्चत् ॥११॥

---

1 W भस्म॰ 2 ABGJ नाभोऽप॰, MMa नाभोव॰ 3 ABGJMMa ॰स्तत॰ 4 ABJ तत्र॰ 5- -5 ABGJ omit 6- -6 H V omit 7- -7 ABJ omit 8 ABJ ॰हसम्बन्धम्। 9 W भस्म

**ब्रह्मदण्डेन ब्रह्मभूते**, ब्रह्मर्षौ वा कपिले यो दण्ड स्वकृतापराधरूप तेन हता दग्धा अपि सगरात्मजाः यस्या गङ्गाया जलस्पर्शमात्रेण हेतुना केवलं देहभस्मभिरेव निमित्तभूतै· यज्जलस्पृष्टदेहभस्मभिर्हेतुभूतै दिवं जग्मु·। ब्रह्मदण्डहता अपीत्यनेन - "न **ब्रह्मदण्डदग्धस्य न** भूतभयदस्य च। नारकाश्चाऽनुगृह्णन्ति या यां योनिमसौ गत." (भाग 3-14-42) इति तार्तीयवचनो क्तरीत्या ब्रह्मदण्डहतानां नारकैरपि निन्द्यत्वं, तेषामप्युत्तारकत्वेन गङ्गाजलस्य निरतिशय पावनत्वञ्चोक्तम् ॥१२॥

एतदेव किम्पुनर्न्यायेन दर्शयति - **भस्मेति**। भस्मभूतानामङ्गानां यस्सङ्गो गङ्गाम्भस्सङ्गः तेनैव हेतुना सगरात्मजाः स्व स्वर्गं याता ये धृतं व्रत गङ्गाम्भस्स्नानरूपं यै ते श्रद्धया देवीं गङ्गां सेवन्ते, ते दिवं यान्ति इति किम्पुनर्वक्तव्य **मित्यर्थ**· ॥१३॥

सकलाघापहारेण मुक्तिहेतुभूतजलस्पर्शाया गङ्गाया स्वर्गप्राप्तिमात्रहेतुत्वेनाऽऽश्चर्यं कार्यमित्याह - **नहीति**। अनन्तस्य भगवतः **चरणाम्भोजप्रसूताया** अत एव भवच्छिद पापनिवर्तनसम्यज्ज्ञानप्रवर्तनद्वारा भवं संसारं भिनत्तीति तथाभूताया· स्वर्धुन्या **स्वर्नद्याः** गङ्गाया यन्माहात्म्यमुदितमुक्तं तदेतत्परमाश्चर्यं नहीति उक्तविधं माहात्म्यमनन्तचरणाम्भोजप्रसूतत्व **प्रयुक्तमित्युक्तम्** ॥१४॥

**अथानन्त**चरणाम्भोजमाहात्म्य दर्शयितुं तद्विशिनष्टि - यस्मिन्निति। अमला· निर्मलान्त करणा· मुनयो यस्मिन्ननन्त **चरणाम्भोजे** श्रद्धया मनो निवेश्य दुस्त्यजं त्रैगुण्यं त्रयो गुणा एव त्रैगुण्यं त्रिगुणान् हित्वा, प्रकृतिसम्बन्धं हित्वेति यावत्। सद्य **स्तदैव तदात्मता**मनन्ततुल्यस्वभावतां मुक्तिमित्यर्थ , याता प्राप्नुवन्तीत्यर्थ ॥१५॥

**भगीरथात्** श्रुताख्य पुत्रो जज्ञे, तस्य श्रुतस्य नाभावर· पुत्रोऽभूत्[1], ततो नाभावरात् सिन्धुद्वीपः, तस्मात् सिन्धुद्वीपात् **अयुतायुः** ॥१६।

**विज०** राज्ञाऽभिहित· शिव· ॥१,१०॥ –

प्रयान्तं भगीरथं अनुधावती पृष्ठत आद्यान्ती ॥११॥

देहभस्मभिस्साकम्॥१२॥

भस्मीकृताङ्गस्य स्वर्धुन्या स[2]ङ्गेन ॥१३॥

श्रीनारायणचरणसङ्गलब्धमेवाऽस्या माहात्म्यं नाऽन्यतोऽतो नैतच्चित्रमित्याह - **नहीति**। इह सगरात्मजकथाप्रसङ्गे

1 W बभूव 2 AB 'स्स'

गङ्गामाहात्म्यमुदितं अत एव भवच्छिद· संसारच्छेत्र्याः जन्मच्छेत्र्या. वा "भवो भद्रे हरे प्राप्तौ सत्तासंसारजन्मसु" (वैज. को 6-1-41) इति ॥१४॥

संसारच्छेदनमाहात्म्यं श्रीहरिनिष्ठं गङ्गायां उपचार इत्याशयवाऽह - **सन्निवेश्येति**। तदात्मतां तत्सायुज्यलक्षणां मुक्तिं तत्स्वामिकतां वा ॥१५॥

एवं भगीरथस्य गङ्गानयनादिमाहात्म्यमुक्त्वा तत्सन्ततिं कथयति - **श्रुत इति**। तस्य श्रुतस्य नाभस्य वरः सुत· तत· अयुतायोः ॥१६॥

**ऋतुपर्णो नलसखो योऽश्वविद्यामयान्नलात्[1]।**
**दत्त्वाऽक्षहृदयं[2] तस्मै सर्वकामस्तु तत्सुतः ॥१७॥**

**ततस्सुदासस्तत्पुत्रो मदयन्तीपतिर्नृप।**
**आहुर्मित्रसहं यं वै कल्माषाङ्घ्रिमुत[3] क्वचित्।**
**वसिष्ठशापाद्रक्षोऽभूदनपत्यः स्वकर्मणा ॥१८॥**

**[4]विष्णुरात उवाच[4]**

**[5]यंनिमित्तो गुरोश्शापः सौदासस्य महात्मनः।**
**एतद्वेदितु[6]मिच्छामि कथ्यतां न रहो यदि ॥१९॥**

**श्रीशुक उवाच**

**सौदासो मृगयां किञ्चिच्चरन् रक्षो जघान ह ।**
**[7]शुशोच भ्रातरं [8]भ्राता गतः प्रतिचिकीर्षया ॥२०॥**

**स चिन्तयन्नघं राज्ञः सूदरूपधरो गृहे।**
**गुरवे भोक्तुकामाय पक्त्वा निन्ये नरामिषम् ॥२१॥**

**परिवे[9]ष्यमाणं भगवान् विलोक्याऽभक्ष्यमञ्जसा।**
**राजानमशपत्क्रुद्धो रक्षो ह्येवं भविष्यसि ॥२२॥**

---

1 H V 'मधा', W 'मगा' 2 ABGJ 'यश्चास्मै 3 H V श्रि·कृत. 4- -4 ABGJMMa राजोवाच 5 ABGJMMa किं नि° 6 ABGJMMa 'म 7 ABGJTW मुमोच 8 ABGJMMa स्तोऽथ 9 ABGJ °क्ष्य

रक्षः कृतं तद्विदित्वा चक्रे द्वादशवार्षिकम्।
सोऽप्यपोऽञ्जलिनाऽऽदाय गुरुं शप्तुं समुद्यतः ॥२३॥

वारितो मदयन्त्याऽऽपो रुशतीः पादयोर्जहौ।
दिशः खमवनीं सर्वां[1] पश्यञ्जीवमयं नृपः ॥२४॥

**श्रीध० ऋतुपर्ण** इति। नलस्य सखा अधात्प्राप्त·। तत्सुत· ऋतुपर्णस्य सुत· ॥१७॥

**तत** इति। तत्पुत्र· सौदास ॥१८॥

**यदिति**। न रहो न रहस्यम् ॥१९॥

**सौदासेति**। मृगयां चरन् [3-]किञ्चिद्रक्ष·[-3] कञ्चिद्राक्षसं जघान। तस्य भ्रातरं शुशोच[4]। स भ्राता पलाय्य गतः ॥२०॥

**स इति** अघमनिष्टम्। सूद , पाचक·, तद्रूपधरस्सन् राज्ञो गृहे वर्तमान· ॥२१॥

**यदीति**। अभक्ष्यमञ्जसा विलोक्य, एवं नरमांसाभ्यवहारेण[5] ॥२२॥

**रक्ष** इति। वशिष्ठ एव तं शापं द्वादशवार्षिकं चक्रे ॥२३॥

**वारित** इति। रुशतीस्तीक्ष्णा अप· स्वपादयोर्जहौ नाऽन्यत्र, तत्र हेतु·दिश इति। एवमनेन मित्रसहत्वमपि दर्शितम्। **मित्रस्य कल**त्रस्य वाच· सहनात् ॥२४॥

**वीर०** ततोऽयुतायुषः ऋतुपर्णस्सम्बभूव, तं विशिनष्टि यः ऋतुपर्णो नलस्य सखा, तयोः परस्परोपकर्तृत्वरूपं सखित्वं **दर्शयति** नलादश्वविद्यामश्वशिक्षाप्रतिपादिकां विद्यामगात् प्राप्तवान्। किं कृत्वा? तस्मै नलाय अक्षहृदयं द्यूतशास्त्ररहस्यं दत्त्वा। **तस्य** ऋतुपर्णस्य सुत सर्वकाम ॥१७॥

ततस्सर्वकामात्सुदासो जज्ञे इति शेष । तत्पुत्र सुदासस्य पुत्रो मदयन्त्या पति·, हे नृप! यं मदयन्तीपतिं मित्रसह **माहुः**, तमेव कल्माषाङ्घ्रिश्चाऽहु । स एव क्वचित् कदाचित् वसिष्ठस्य शापाद्रक्षोबभूव। स्वकर्मणा अनपत्यः औरसरहितश्च **बभूव**।, क्षेत्रजस्य वक्ष्यमाणत्वात् ॥१८॥

सङ्ग्रहेणोक्तं तद्वृत्तान्तं विस्तरेण बुभुत्सया परिपृच्छति राजा **यन्निमित्त** इति। महात्मनः सौदासस्य गुरुशापः **यदेव** निमित्तं यस्य तादृशो बभूव तदेतच्छापस्य निमित्तं वेदितुमिच्छामि, तद्यदि न रहस्यं कथयितुं योग्यश्चे कथ्यताम् ॥१९॥

1 ABGJ सर्वं 2- ABJ अया॰ 3--3 ABJ omit 4 ABJ मुमोच 5 ABJ °स व्य॰

एवं पृष्ट आह मुनि· - 'सौदास' इत्यादिना "वसिष्ठस्तदनुज्ञात·"(भाग-9-9-38) इत्यतः प्राक्तनेन। मृगयैव शीलं यस्य स सौदासो मित्रसह चरन् रक्षो हतवान्। रक्षसो भ्रातरन्तु न जघान, किन्तु मुमोच। ततस्स रक्षसो भ्राता गतस्सन् राज्ञ स्सौदासस्य अघं भ्रातृहननरूपमपराधं चिन्तयन् प्रतिचिकीर्षया अपकर्तुमिच्छया राज्ञो गृहे यस्सूद पाचक , तद्रूपधरो भोक्तुमिच्छवे गुरवे वसिष्ठाय पक्वं नरामिषं निन्ये ॥२०, २१॥

ततो भगवान् वसिष्ठः परि[1]वेष्यमाणं भोजनपात्रे निक्षिप्यमाणं नरामिषमत एवाभक्ष्य मञ्जसा आशु विलोक्य ज्ञात्वा क्रुद्धो राजानं मित्रसहमशपत्। किमिति? एवम् एवङ्कारयंस्त्वं रक्षो भविष्यतीति ॥२२॥

ततस्तन्नरामिषं सूदरूपधरेण रक्षसा कृतं न तु राज्ञा कारितमिति विदित्वा स्ववाक्यानृतत्वपरिहाराय शापं द्वादश वर्षावधिकं चक्रे। ततस्सोऽपि सौदासोऽप्यञ्जलिना अपः जलमादाय गुरुं वसिष्ठं शप्तुं समुद्युक्त· मदयन्त्या निवारित रुशती· तीक्ष्णास्ता·[3] अपः स्वपादयोर्जहौ तत्याज। तत्र हेतुमाह[4] दिशः खमाकाशं सर्वामवनिं भूमिञ्च जीवप्रचुरं जगत्[5] पश्यन्नेव तत्क्षण एव स्वपादयोर्जहाविति भाव·। नृप सौदास ॥२३,२४॥

**विज०** ऋतुपर्णः अयात्प्राप्तवान् तत्सुत· ऋतुपर्णसुतः ॥१७॥

यं सुदासपुत्रम् ॥१८-१९॥

रक्षो राक्षसं मृतं भ्रातरं प्रतिचिकीर्षया भ्रातृहन्तृहननलक्षणप्रतिकारेच्छया ॥२०॥

सूदरूपधरः पाचकवेषधरः नरामिषं नरमांसम् ॥२१॥

एवंविधः ॥२२॥

रक्ष·कृतं राक्षसकृतम् ॥२३॥

[6] रुषतीः क्रूराः मन्त्रितत्वात्। "रूष रिष हिंसायाम्" हिसंयन्तीर्वा। 'रुश शब्दे' हतं चिकीर्षाम इति शब्दयन्तीर्वा। माघमासे रटदन्त्यापःइति वचनात् ॥२४॥

**राक्षसं भावमापन्नः पादे कल्माषतां गतः।**
**व्यवायकाले ददृशे वनौकोदम्पती द्विजौ ॥२५॥**
**क्षुधार्तो जगृहे विप्रं तत्पत्न्याहाकृतार्थवत्[7]।**
**न भवान् राक्षसःसाक्षादिक्ष्वाकूणां महारथः ॥२६॥**

---

1 AB वेक्ष्य 2 AB add परिवेक्ष्यमाण 3 AB add कमनीय 4 AB हेतु 5 W omits जगत् 6 MMa रूशती 7 TW °वित्

मदयन्त्याः पतिर्वीर नाधर्मं कर्तुमर्हसि ।
देहि मेऽपत्यकामाया[1] अकृतार्थं पतिं द्विजम् ॥२७॥

देहोऽयं मानुषो राजन् पुरुषस्याखिलार्थदः ।
तस्मादस्य वधो वीर सर्वार्थवध उच्यते ॥२८॥

एष हि ब्राह्मणो विद्वान् तपश्शीलगुणान्वितः ।
आरिराधयिषुर्ब्रह्म महापुरुषसंज्ञितम् ।
सर्वभूतात्मभावेन भूतेष्वन्तर्हितं गुणैः ॥२९॥

सोऽयं ब्रह्मर्षिवर्यस्ते राजर्षिप्रवराद्विभोः[2] ।
कथमर्हति धर्मज्ञः वधं पितुरिवाऽऽत्मजः ॥३०॥

तस्य साधोरपापस्य भ्रूणस्य ब्रह्मवादिनः ।
कथं वधं यथा बभ्रोर्मन्यते सन्मतो भवान् ॥३१॥

यद्ययं क्रियते भक्ष स्तर्हि मां खाद पूर्वतः ।
न जीविष्ये विना[3] येन क्षणञ्च मृतकं यथा ॥३२॥

**श्रीध० राक्षसमिति**। तदेवं राक्षसत्वे कल्माषाङ्घ्रित्वे च कारणमुक्त्वा स्वकर्मणाऽनपत्य इति यदुक्तं तत्प्रपञ्चयति व्यवायकाल इत्यारभ्य[4] कर्मणा अप्रजा इत्यन्तेन, वनमोको निवासो ययोस्तौ वनौकसौ च तौ दम्पती चा [5-]वनौकौ दम्पती इति पृथक्पदपाठे अदन्तत्वं आर्षम्[-5] ॥२५॥

**क्षुधार्त इति** । अकृतार्थवत् दीनवत् ॥२६॥

**मदयन्त्या इति**।अकृतार्थं तं असमाप्तरतिम् ॥२७,२८॥

**आरिराधयिषुरिति**। सर्वभूतानामात्मेति भावनया आराधयितुमिच्छुः। यद्वा, सर्वभूतानामात्मभावेन भूतेषु स्थितमपि गुणैरन्तर्हितं, ब्रह्मेति सम्बन्धः। पाठान्तरे अन्तर्हितः सोऽयमित्युत्तरेणाऽन्वयः ॥२९॥

[6-]**स इति**। सोऽयं त्वदधीनो ब्रह्मर्षिवर्यः राजर्षिश्रेष्ठात् वधं नार्हति। यथा पिता पुत्रकर्तुकं वधमिव[-6]॥३०॥

---

1 MMa 'यास्त्वकृ' 2 ABGJMMa द्विभो। 3 W नायेन' 4 ABJ इत्यादिना 5- -5 ABJ पृथक्पदत्वे सकारलोप आर्ष । 6- -6 ABJ omit

**तस्येति**। भ्रूणस्य श्रोत्रियस्य। गर्भस्य सत इति वा। बभ्रोर्गोः। सतां मतो भवान्वधं कथं साधु मन्यते इत्यर्थः ॥३२॥

**यदीति**। क्षणमपि येन विना न जीविष्यामि सोऽयं यदि भक्ष क्रियते तर्हि मृतकं यथा मृतप्रायां मां पूर्वं भक्षय ॥३२॥

**वीर०** राक्षसं भावं रूपमापन्नः प्राप्त , गुरुशापाद्धेतोरिति शेष । पादे कल्माषतां नैल्यं विकारश्च गत· शापार्थजल प्रक्षेपाद्धेतोरिति शेष·। ततः कदाचित् वनमेवौकः स्थानं ययोस्तौ दम्पती भार्यापती द्विजौ मैथुनकाले ददर्श ॥२५॥

तदा क्षुधा अशनायया पीडितः राक्षसरूपस्सौदासो मिथुनीभूतं द्विजं जगृहे, भक्षितुमिति शेषः। तदा तस्य द्विजस्य पत्नी अकृतार्थमसमाप्तरतितृष्णं पतिं वेत्तीति तथाभूता सती उवाच, तदेवाऽऽह - 'नेत्यादिना एवं करुण भाषिण्या' इत्यतः प्राक्तनेन। भवान्न राक्षसः, किन्तु साक्षादिक्ष्वाकूणां महारथ श्रेष्ठ· ॥२६॥

मदयन्त्याः पति· अतो हे वीर ! अधर्मं विप्रहननरूपं कर्तुं नाऽर्हति अपत्यकामायै मे मह्यं पतिं तत्राऽपि द्विजं, तत्राऽप्यकृतार्थं, देहि ॥२७॥

हे राजन् ! अयं मानुषो देह· पुरुषस्य जीवस्य अखिलानां पुरुषार्थानां साधनभूत· यत एवं तस्मादस्याखिलार्थदस्य मानुषदेहस्य वधो हे वीर, सर्वार्थानां वध इत्युच्यते ॥२८॥

किञ्च। एष त्वया गृहीतो मत्पतिर्ब्राह्मणस्तत्राऽपि विद्वान् वेदशास्त्रार्थवित् न केवलं विद्वान् अपि तु तपश्शीलाभ्या मन्यैश्च अक्रोधादिभिः गुणैरन्वितः सर्वभूतानामात्मभावेन अन्तरात्मतया गुणै· सर्वज्ञत्वादिभि· सहैव भूतेषु देवमनुष्यादिषु अन्तर्हितं हृदयकुहरे निविष्टं महापुरुषादिशब्दवाच्यं ब्रह्म आराधयितुमिच्छुः उपासीन इत्यर्थः। सन्नन्तनिर्देशस्तु उपासनदशायामपि ब्रह्मज्ञानस्येष्टतमत्वज्ञापनाय ॥२९॥

सोऽयमेवम्भूतो ब्रह्मर्षिवर्यो राजर्षिश्रेष्ठात् तत्राऽपि विभो· अधिकृतराज्यात्ते त्वत्त कथं वधमर्हति, सर्वथा नार्हत्येवेत्यर्थ । यथा पितुः सकाशात् आत्मजो वधं नाऽर्हति तद्वत् ॥३०॥

तस्योक्तविधस्य पापस्य भ्रूणस्य सूत्रप्रवचनाध्यायिन· "वेदानां किञ्चिदधीत्य ब्राह्मण एकां शाखामधीत्य श्रोत्रियोऽङ्गाध्याय्यनूचानः कल्पाध्यायी ऋषि· कल्पसूत्रप्रवचनाध्यायी भ्रूण·" इत्यादिप्रयोगात् ब्रह्मवादिनः ब्रह्मोपदेष्टुः वेदाध्यापकस्य वा वधं साधूनां सम्मतो भवान् कथं मन्यते, सम्मतमिति शेषः। यथा बभ्रोर्धेनोर्वधं भवान्न सम्मतं मन्यते तथा अस्याऽपि वधं न सम्मतं मन्यस्वेत्यर्थः ॥३१॥

यदि सर्वथा अयं ब्राह्मणस्त्वया भक्षः क्रियते भक्ष्यते इत्यर्थः। तर्हि पूर्वत· तद्भक्षणात् प्रागेव मां खाद अद्धि। अनेन विना अहं क्षणमपि न जीविष्ये यथा मृतकं कुणपं जीवेन विना तद्वदहमपि अनेन विनेत्यर्थ· ॥३२॥

**विज०** कल्माषतां वनमाषवर्णवत्तां। व्यवायकाले सुरतसमये ॥२५॥

द्विजपत्नी राक्षसस्य कृपाजननाय अवध्यत्वे च [1] अनेकानि कारणान्याह - न भवानित्यादिना ॥२६,२७॥

भ्रूणस्य स्वस्य स्वयमेव पुत्रस्य ब्रह्मवादिनः ब्रह्मज्ञानिनः षडङ्गवेधाध्यायिनो वा बभ्र्वाः सौरभेय्याः "माहेयी सौरभेयी च बभ्रु. स्या द्रूषकाङ्क्षिणी" इत्यभिधानम् ॥३१॥

येन पत्या, मृतकं प्राणरहितशरीरं प्राणमन्तरेण ॥३२-३४॥

**एवं करुणभाषिण्या विलपन्त्या अनाथवत्।**
**व्याघ्रः पशुमिवाखादत् सौदासः शापमोहितः ॥३३॥**

**ब्राह्मणी वीक्ष्य दिधिषुं[2] पुरुषादेन भक्षितम्।**
**शोचन्त्यात्मान मुर्वीशमशपत्कुपिता सती ॥३४॥**

**यस्मान्मे भक्षितो[3]ऽपापः कामार्तायाः पतिस्त्वया।**
**तवाऽपि मृत्युरा[4]धानादकृतप्रज्ञ दर्शितः ॥३५॥**

**एवं मित्रसहं शप्त्वा पतिलोकपरायणा।**
**तदस्थीनि समिद्धे[5]ऽग्नौ प्रास्य भर्तुर्[6]गतिं गता ॥३६॥**

**विशापो द्वादशाब्दान्ते मैथुनाय समुद्यतः।**
**विज्ञाप्य[7] ब्राह्मणीशापं महिष्या स निवारितः ॥३७॥**

**तत ऊर्ध्वं स तत्याज स्त्रीसुखं कर्मणाऽप्रजाः[8]।**
**वसिष्ठस्तदनुज्ञातो मदयन्त्यां प्रजामधात् ॥३८॥**

**सा वै सप्तसमा गर्भमबिभ्रन्न व्यजायत।**
**जघ्नेऽश्मनोदरं तस्याः सोऽश्मकस्तेन कथ्यते ॥३९॥**

**अश्मकान्मूलको जज्ञे यः स्त्रीभिः परिरक्षितः।**
**नारी कवच इत्युक्तो निःक्षत्रे मूलकोऽभवत् ॥४०॥**

---

1 M बभवो 2 MMa भर्तार 3 ABGJMMa त पाप। 4 MMa °यातद° 5 H V °द्धाऽग्नौ 6 ABGJMMa भर्तुर्ग° 7 ABGJMMa °य 8 MMa °जाम्।

**श्रीध० ब्राह्मणीति**। दिधिषुं गर्भाधानकर्तारम् ॥३३,३४॥

**यस्मदिति**। आधानात् मैथुनात्। हे अकृतप्रज्ञ मृत्युर्मया दर्शितः ॥३५-३७॥

**तत इति**। तदेवं कर्मणा अप्रजाः ॥३८॥

**सेति**। अबिभ्रत्[1] दधारेत्यर्थः। न व्यजायत न प्रासूयत अतो वशिष्ठ एव तस्या उदरमश्मना जघान। **स उत्पन्नः** सुतोऽश्मकः ॥३९॥

**अश्मकादिति**। स्त्रीभिस्संवेष्ट्य परशुरामात्परिरक्षितोऽतो नारीकवच उक्तः। निःक्षत्रे[2] जगति सति क्षत्रवंशस्य **मूलमभवत्**, **अतो मूलक इति चोक्तः** ॥४०॥

**वीर०** एवं तस्याः करुणभाषिण्याः अनाथवद्विलपन्त्याः सत्याः शापेन मोहितः सौदासो द्विजं व्याघ्रः पशुमिवाऽखादत्। भक्षितवान् ॥३३॥

ततः पुरुषादेन रक्षसा सौदासेन भक्षितं दिधिषुं गर्भाधान कर्तारं पतिं वीक्ष्य ब्राह्मणी आत्मानं प्रतिशोचन्ती कुपिता सती उर्वीशं सौदासमशपत् ॥३४॥

किमति? यस्मात्कामार्तायाः मम पतिरपापो निरपराधस्त्वया भक्षितः तस्मात् हे अकृतप्रज्ञ विवेक शून्य तवाप्याधानान्मृत्युर्दर्शित इति, यदा गर्भाधानं कर्तुमुद्यतोऽसि तदा मरणं प्राप्स्यसीति ॥३५॥

एवं मित्रसहं सौदासं शप्त्वा ब्राह्मणी पतिलोकपरायणा पतिलोकं कामयमानेत्यर्थः। तत्र पत्यु रस्थीनि समिद्धे प्रज्वलितेऽग्नौ प्रास्य पतित्वा भर्तुर्गतिं प्राप्ता ॥३६॥

ततो द्वादशवत्सरान्ते विगतशापस्स सौदसो मैथुनायोद्यतः ब्राह्मणीशापं विज्ञाप्य प्रत्यभिज्ञाप्य महिष्या मदयन्त्या सम्यङ्निवारितः ॥३७॥

तत आरभ्य स सौदासः स्त्रीसुखं तत्याज, मृत्युभयादिति शेषः। अत एवोक्तेन कर्मणा अप्रजाः औरसरहितो बभूव। एवं स्थिते तेन सौदासेनानुज्ञातो वसिष्ठो मदयन्त्यां प्रजामधात् गर्भाधानमकरोत् ॥३८॥

ततः सा वै मदयन्ती सप्तसमाः वत्सरान् गर्भमबिभ्रत् तदाऽपि न व्यजायत, अपत्यमिति शेष। तदा सौदासः तस्या मदयन्त्याः उदरमश्मना पाषाणेन जघ्ने। स उदरान्निर्गतः तेनाऽश्मघातेन निमित्तेन अश्मक इति कथ्यते व्यवह्रियते ॥३९॥

अश्मकान्मूलको जज्ञे, तस्यैव नारीकवच इति नामान्तरम् नामद्वयनिमित्ते दर्शयति योऽश्मकस्य पुत्र निःक्षत्रे भार्गवेण

---

1 ABJ °सूत 2 ABJ जगति 3- -3 W omits

रामेण क्षत्रोत्पाटने क्रियमाणे स्त्रीभिः परिरक्षितः। अतो नारीकवच इत्युक्तः पुनः क्षत्रकुलस्य मूलत्वान्मूलकनामा चाऽभव दित्युक्तः ॥४०॥

**विज०** हे अकृतप्रज्ञ! अशिक्षितबुद्धे! तव मृत्युरेवं गर्भाधानसमये दर्शितो भवेत् आपातादतर्कितात्कालादिति शेषः ॥३५॥

प्रास्य निक्षिप्य ॥३६॥

ब्राह्मण्याः शापं विज्ञाय स मित्रसहः स्त्रीसुखं स्त्रियं दूरीकृत्य कर्मणा मैथुनलक्षणेन प्रजां सन्ततिं तत्याज। तर्ह्यस्य केन विधिना पुत्रोजातः? इति तत्राऽऽह- वसिष्ठ इति। तेन सौदासेन अनुज्ञातः मद्भार्यायां पुत्रमुत्पादयेति ॥३७,३८॥

समाः संवत्सरान् ॥३९॥

निःक्षत्रे परशुरामेण दुष्टक्षत्रियसंहारे कृते सति ॥४०॥

* ततो दशरथस्तस्मात् पुत्र[1] ऐडबिडस्ततः।
राजा विश्वसहो यस्य खट्वाङ्गश्चक्रवर्त्यभूत् ॥४१॥

यो देवैरर्थितो दैत्यानवधीद्युधि दुर्जयः[2]।
मुहूर्तमायुर्ज्ञात्वैत्य स्वपुरं सन्दधे मनः ॥४२॥

न मे ब्रह्मकुलात्प्राणाः कुलदैवान्न चाऽऽत्मजाः।
न श्रियो न मही राज्यं न दाराश्चातिवल्लभाः ॥४३॥

न बाल्येऽपि मतिर्मह्यमधर्मे रमते क्वचित्।
नापश्यमुत्तमश्लोकादन्यत्किञ्चन वस्त्वहम् ॥४४॥

देवैः कामवरो दत्तो मह्यं त्रिभुवनेश्वरैः।
न वृणे[3] तमहं कामं भूतभावनभावनः[4] ॥४५॥

[5]ये विक्षिप्तेन्द्रियधियो देवास्ते स्वहृदि स्थितम्।
न विन्दन्ति प्रियं शश्वदात्मानं किमुताऽपरे ॥४६॥

---

* This half verse is not found in H V edns 1--1 MMa पुत्रो एन्तबिलिस्स्मृत ।, W पुत्रे लबिलस्तत्र । 2 Mma °यान् 3 MMa ह्यवम कर्म 4 MMa °नात् 5 MMa येऽवि°

**श्रीध०** **य** इति प्रसन्नैर्देवैर्वरं वृणीष्वेत्युक्ते खट्वाङ्गेनोक्तं प्रथमं तावन्ममायुः कथ्यतामिति। देवैश्चोक्तं मुहूर्तमात्रमिति। तज्ज्ञात्वा देवैर्दत्तेन विमानेन शीघ्रं स्वपुरमेत्य मनः परमेश्वरे सन्दधे ॥४१,४२॥

एतदेव स्वसाधुवृत्तानुस्मरणपूर्वकं तत्कृतेन निश्चयेन दर्शयति **नेति** सप्तभिःकुलदैवाद्ब्रह्मकुलात्सकाशान्मे प्राणादयो नातिवल्लभा नातिप्रियाः ॥४३॥

**नेति**। मह्यं मम ॥४४॥

**देवैरिति**। भूतभावनो हरिस्तस्मिन्नेव भावना यस्य सोऽहं तं कामं न वृणे ॥४५॥

तत्र हेतुः - **य** इति विक्षिप्तानीन्द्रियाणि धीश्च येषां ते, देवा अपि ॥४६॥

**वीर०** ततो मूलकाद्दशरथः [1]जज्ञे इत्यनुषङ्गः[-1]। तस्माद् दशरथात् ऐलबिलः पुत्रः [2]तत ऐलबिलाद्विश्वसहाख्यो राजा जज्ञे। तत्पुत्रं वदन् तं विशिनष्टि - यस्य विश्वसहस्य [3]खट्वाङ्ग[-3]ाख्यश्चक्रवर्ती सम्बभूव ॥४१॥

अथ खट्वाङ्गं विशिंषन् तद्वृत्तान्तमाह - **य** इत्यादिना। यावदध्यायसमाप्ति। य. रवट्वाङ्गो युधि युद्धे दुर्जय· जेतुमशक्यः अत एव देवैरर्थितः सहायत्वेन प्रार्थितः दैत्यानवधीत्। ततो देवैर्वराय चोदितः स्वस्यायुः मुहूर्तमात्रावशिष्टं ज्ञात्वा स्वपुर मागत्य मनः सन्दधे मनसा आलोच्य निश्चितवानित्यर्थः ॥४२॥

तस्य मनस्सन्धानप्रकारमेव दर्शयति - 'ने त्यादिना' इति व्यवसित इत्यत· प्राक्तनेन। ब्रह्मकुलान्मम प्राणा नाऽतिवल्लभा इत्यन्वय ।ब्रह्मकुलमेव मम प्राणेभ्योऽपि प्रियमित्यर्थ ।एव मुत्तरत्राऽपि द्रष्टव्यम्। कुलदैवाद्भगवत. आत्मजादयो न वल्लभा. ॥४३॥

मह्यं मम मतिर्बाल्येऽपि क्वचिदापद्यपि अधर्मे न रमते नारमत। इह लोके किञ्चिदपि वस्तु उत्तमश्लोका द्भगवतोऽन्यत्पृथग्भूतं नाऽपश्यम्।[4]तत्सर्वं वस्तु भगवदात्मकमेव दृष्टवानस्मीत्यर्थ । नाऽवश्यमिति पाठान्तरम्, तदा किञ्चिदपि वस्तु उत्तमश्लोकाद्भगवतोऽन्यत् नाऽवश्यं नोपादेयमित्यर्थः ॥४४॥

यद्यपि त्रिभुवनेश्वरै देवैर्मह्यं कामानुगुणो वरो दत्तस्तथाऽप्यहं तं कामं वरं न वृणे न वृणुयाम्। तत्र हेतुं वदन् आत्मानं विशिनष्टि - भूतभावनभावनः भूतानि देवादीनि भावयति सत्तादिमन्ति करोतीति भूतभावनो भगवान् तं भावयति भजतीति तथाभूतोऽहमित्यर्थः। "वासुदेवे मनो यस्य जपहोमार्चनादिषु। तस्याऽन्तरायो मैत्रेय देवेन्द्रत्वादिकं फलम्", (विष्णु· पु 2-6-41) इत्युक्तरीत्या देवैर्दीयमानो वरो मम भगवत्प्राप्तिविरोधीति भाव· ॥४५॥

तर्हि देवादयः स्वर्गादिकमेवोत्कृष्टं किमिति मन्यन्ते - इत्याशङ्क्याऽऽह- **य** इति। इमे देवास्ते विक्षिप्तेन्द्रियधिय

---

1--1 A.B omit 2 W omits तत 3- -3 W ङ्ग 4 W omits तत्

देहात्माभिमानिनः। अतस्ते शश्वत् सदा स्वहृदि स्थितमप्यन्तरात्मानं निरतिशयप्रियं न विन्दन्ति, किन्तु वैषयिकमेव सुखं परं मन्यन्ते इति भावः। देवा एव न जानन्ति किमुताऽपरे न विन्दन्तीति ॥४६॥

**विज०** खट्वाङ्गो दैत्यान्निहत्य स्वपुरं गत्वा, आयु. मुहूर्तावधिकं ज्ञात्वैवं मनः सन्दधे ॥४२॥

कथं तदिति तत्राऽऽह - **न म** इति। कुलदैवात् ब्राह्मणकुलात् मे प्राणादयो नातिवल्लभा इत्यन्वयः ॥४३॥

मह्यं मम मतिः वस्त्वप्रतिहतम् ॥४४॥

भूतभावनस्य हरेर्भावनात् उपासनादन्य दपरं कर्म मोक्ष साधनत्वेन न वृणे ॥४५॥

अविक्षिप्तेन्द्रियधियः आत्मानं हरिम् ॥४६॥

**अथेशमायारचितेषु सङ्गं गुणेषु गन्धर्वपुरोपमेषु।**
**रूढं प्रकृत्याऽऽत्मनि विश्वभर्तुर्[1]र्भावेन हित्वा तमहं प्रपद्ये ॥४७॥**

**इदि व्यवसितो बुद्ध्या नारायणगृहीतया।**
**हित्वाऽन्यभावमज्ञानं ततः स्वं भावमाश्रितः ॥४८॥**

**यत्तद्ब्रह्मपरं सूक्ष्ममशून्यं शून्यकल्पितम्।**
**भगवान् वासुदेवेति यं गृणन्ति हि सात्त्वताः ॥४९॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
नवमस्कन्धे नवमोऽध्यायः ॥९॥

**श्रीध० अथेति।** अथ तस्मात् प्रकृत्या स्वभावेन आत्मनि रूढं गुणेषु सङ्गं विश्वकर्तुर्भावेन हित्वा तमेवाऽहं प्रपद्ये ॥४७॥

**इतीति।** अन्यभावं देहाद्यभिमानरूपमज्ञानं हित्वा ॥४८॥

स्वं भावमेवाऽऽह - **यत्तदिति** शून्यवत्कल्पितं, वागाद्यविषयत्वात्। वासुदेव इति यं गृणन्ति। ब्रह्मण एव भक्तानुग्रहार्थमाविष्कृत[2]शक्तेर्वासुदेवत्वात् ॥४९॥

इति श्रीमद्भागवते महापुराणे
श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां नवमस्कन्धे नवमोऽध्यायः॥९॥

1 ABGJ कर्तु 2 ABJ तनो॰

**वीर०** अथ तस्मादहमिह लोके भगवन्मायया रचितेषु गन्धर्वनगरतुल्येषु अनित्येषु गुणेषु शब्दादिविषयेषु प्रकृत्यात्मनि प्रकृत्यात्मके प्रकृतिपरिणामात्मके शरीरे च रूढं सङ्गं त्यक्त्वा विश्वभर्तुर्भगवतः भावेन भक्त्या तं विश्वभर्तारं प्रपद्ये प्राप्स्यामिति ॥४७॥

इत्थम्बुद्ध्या नारायणे गृहीतया तद्विषयया बुद्ध्येत्यर्थः। व्यवसितः निश्चितवान् अन्यभावं अन्यत्र देहादौ भावो येन स्यात्तदन्यथा भावमज्ञानं हित्वा देहं त्यक्त्वेत्यर्थः। ततस्स्वं भावमाश्रित आविर्भूतगुणाष्टकस्वभावः ॥४८॥

अशून्यमियत्ताप्रमाणशून्यं [1]प्रमाणेन सिद्धं नतु शशविषणादिवत् तुच्छमित्यर्थः। यद्वा, शून्यं गर्हितं निर्गुणं नभवतीत्यशून्यम् अनन्तकल्याणगुणाकरमित्यर्थः। शून्यकल्पितं, कल्पितं कल्पना, भावेक्त.। विभूतिगतजात्यादिकल्पना यस्मिन् शून्या तत्तथोक्तम् अनेन हेयगुणराहित्यमुक्तम्। यत्तद्ब्रह्ममयं भगवान् वासुदेव इति गृह्णन्ति सात्त्वतास्तदाश्रिता इत्यनुषङ्गः, स्वं भाव माश्रित इति प्रत्यगात्मन· शुद्धस्वभावाविर्भावः उक्तः। एवं मुक्तोऽभूदित्यर्थ· ॥४९॥

इति श्रीमद्भागवते नवमस्कन्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां नवमोऽध्याय· ॥९॥

**विज०** किमनेन बहुनोक्तेनाऽपि, एवं मम सिद्धान्तः इति सन्दधति - **अथेति**। अथाऽहं तं **श्रीहरिं प्रपद्य इत्यन्वयः**। किं कृत्वा? ईशस्य हरेर्मायया विकृतैः पृथिव्यादिपञ्चभूतै· रचितेषु गुणेषु देहेन्द्रियादिषु गन्धर्वपुरोपमेषु नश्वरेषु आत्मनि मनसि प्रकृत्या स्वत एव रूढं सङ्गं स्नेहलक्षणं पाशं हित्वा। त्यागे साधनमाह - विश्वभर्तुरिति, भावेन भक्त्या ॥४७॥

सर्वस्मादन्यस्य हरेर्भावत्वमेकत्वविषयमज्ञानं हित्वा स्वं भावं स्वतन्त्रं भावं स्थितः ॥४८॥

भावशब्दस्य लीलाद्यनेकार्थेषु वृत्तेः अत्र विवक्षितःकः? इति तत्राऽऽह - **यत्तदिति**। उत्तरलिङ्गविवक्षया यत्तदिति वेदान्तिनो यं भावं परं ब्रह्मेति गृणन्ति योगिनः सूक्ष्ममिन्द्रियागोचरमाकाशवदिति सङ्गिरन्ते, केचिदवैदिकाःशून्यनाम्ना कल्पितं जल्पन्ति न तत्तत्त्वमित्याह - अशून्यमिति। सात्त्वताः पाञ्चरात्रिका यं भगवन्तं वासुदेव इति नाम्ना गृणन्ति तं भावमास्थित इत्यन्वयः "ब्रह्मविदाप्नोति परम्" (तैत्तिः उः2-1-1) तस्यान्ते सुषिरं सूक्ष्मम् (मना. उः9-8) "ब्रह्मेति परमात्मेति भगवानिति शब्द्यते" (भागः 1-2-11) इत्यादेः शून्यं तत्त्वमबाध्यमिति च ॥४९॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
नवमस्कन्धे नवमोऽध्याय· ॥९॥

---

1 AB add इति

# दशमोऽध्यायः

## श्रीशुक उवाच-

खट्वाङ्गाद्दीर्घबाहुश्च रघुस्तस्मात्पृथुश्रवाः।
अजस्[1]ततो महा[2]राजस्तस्मात् दशरथोऽभवत् ॥१॥

तस्याऽपि भगवानेष साक्षाद्ब्रह्ममयो हरिः।
अंशांशेन चतु[3]र्भाऽगात्पुत्रत्वं प्रार्थितस्सुरैः॥
रामलक्ष्मणभरतशत्रुघ्ना[4] इति संज्ञया ॥२॥

तस्याऽनुचरितं राजन् ऋषिभिस्तत्त्वदर्शिभिः।
श्रुतं हि वर्णितं भूरि त्वया सीतापतेर्मुहुः ॥३॥

गुर्वर्थे त्यक्तराज्यो व्यचरदनुवनं पद्मपद्भ्यां प्रियायाः।
पाणिस्पर्शाक्षमाभ्यां मृजितप[5]थरुजो यो हरीन्द्रानुजाभ्याम्।
वैरूप्याच्छूर्पणख्याः प्रियविरहरुषाऽऽरोपितभ्रू[6]विजृम्भ-
त्रस्ताब्धि[-6]र्बद्धसेतुः खलदवदहनः कोसलेन्द्रो[7]ऽवतान्नः ॥४॥

विश्वामित्राध्वरे येन मारीचाद्या निशाचराः।
पश्यतो लक्ष्मणस्यैव हता नैर्ऋतपुङ्गवाः ॥५॥

यो लोकवीरसमितौ धनुरैशमुग्रं सीतास्वयंवरगृहे[8] त्रिशतोप[9]नीतम्।
आदाय बालगजलील इवेक्षुयष्टिं सज्जीकृतं नृप विकृष्य बभञ्ज मध्ये ॥६॥

जित्वानुरूपगुणशीलवयोऽङ्गरूपां सीताभिधां श्रियमुरस्यभिलब्धमानाम्।
मार्गे व्रजन् भृगुपतेर्व्यनयत् प्ररूढं दर्पं [10-] महीमकृत यस्त्रिररा[-10]जबीजाम् ॥७॥

यः सत्यपाशपरिवीतपितुर्निदेशं स्त्रैणस्य चाऽपि शिरसा जगृहे सभार्यः।
राज्यं श्रियं प्रणयिनस्सुहृदो[11] निवासं त्यक्त्वा ययौ वनमसूनिव मुक्तसङ्गः ॥८॥

1 MMa स्तस्मात् 2 H V °जा त° 3 ABGJMMa चतुर्धा° 4 MMa °घ्नाश्चेति 5 MMa °थि 6- -6 MMa °म्भश्रुत्वाविर्बद्ध 7 MMa °तीर्ण 8 MMa मुखे 9 MMa °नेयम् 10- -10 MMa महीं कृतवातो हतराज° 11 MMa दोऽधिवास

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

दशमे प्राह खट्वाङ्गवंशे श्रीरामसम्भवम्। तच्चरित्रञ्च लङ्केशं हत्वाऽयोध्यागमावधि।

* यद्वा :- दशमे रामचरितमाविर्भावपुरस्सरम्। शुकेन वर्ण्यते पुण्यमभिषेकोत्सवावधि॥

**खट्वाङ्गा दिति।** खट्वाङ्गाच्च दीर्घबाहुः ॥१,२॥

**तस्येति।** ऋषिभिर्वाल्मीकिमुख्यैः भूरि वर्णितं त्वया मुहुः श्रुतं, तथाऽपि संक्षेपतः कथ्यमानं शृणु इति शेषः[1] ॥३॥

• "ग्रन्थ कोटिभिराकीर्णमद्भुतं रामविक्रमम्। अध्यायद्वयतो वक्ष्यन्नेकश्लोके समस्यति"। **गुर्वर्थे** इति, **स कोसलेन्द्रः** श्रीरामो नोऽस्मनवतात् पातु। कथम्भूतः? यो गुर्वर्थे पितुः सत्यस्य पालनार्थं त्यक्तराज्यस्सन् पद्मवत् अतिसुकुमाराभ्यां पद्भ्याम्। तदेवाऽऽह - प्रियायाः पाणिनाऽपि स्पर्शो नास्ति क्षमा ययोस्ताभ्यां प्रतिवनं व्यचरत्। हरीन्द्रो हनुमान् सुग्रीवो वा अनुजो लक्ष्मणः ताभ्यां मृजिता अपनीता पथरुजा मार्गश्रमो यस्य। शूर्पणख्या वैरूप्यात् कर्णनासिकाच्छेदाद्धेतोः तया प्रलोभितेन रावणेनापहारात् प्रियेण कलत्रेण विरहः तेन रुट् तथाऽऽरोपितयोः भ्रुवोर्विजृम्भेणैव त्रस्तोऽब्धिर्यस्मात्। तत स्तद्विज्ञापनेन बद्धः सेतुर्येन। ततः खला रावणादय एव तवो वनं दस्य दहनः ॥४॥

संक्षेपतो वर्णितं रामचरितमादित आरभ्य विस्तरेणाऽऽह विश्वामित्राध्वर इत्यारभ्य[2] यावदुत्तराध्यायसमाप्ति **विश्वामित्रेति।** पश्यत एव लक्ष्मणस्य। तमप्यनपेक्ष्यैव हता इत्यर्थः। यच्छब्दानां, स कोसलेन्द्रोऽवतादि[3]ति पूर्वेणैवान्वय[3] ॥५॥

**य** इति। लोके ये वीरास्तेषां समितौ समाजे ऐशं त्रैयम्बकं धनुरिक्षुयष्टिमिव लीलयैवाऽऽदाय सज्जीकृतमारोपितं विकृष्य मध्ये यो[4] बभञ्ज। हे नृप! उग्रं कठिनं गरिष्ठम्। तदाह वाहकानां त्रिभिः शतैरुपनीतम्। बालगजस्य लीलेव लीला यस्य सः॥६॥

**जित्वेति।** अनुरूपाणि स्वयोग्यानि गुणशीलादीनि यस्यास्तां सीतासंज्ञां, पूर्वमुरस्यभिलब्धो मानो यया तां श्रियं जित्वा धनुर्भङ्गमहानादश्रवणक्षुभितस्य[5] भृगुपतेः परशुरामस्य[6] दर्पं व्यनयदपनीतवान्। कथंभूतस्य? त्रिस्सप्तकृत्वो राजबीजशून्यां महीं योऽकरोत्तस्य ॥७॥

इदानीं गुर्वर्थे इति श्लोकं विवृण्वन्नाऽऽह-य इति। कदाचित्कैकेय्यास्तुष्टेन राज्ञा त्वदपेक्षितं दास्यामीति प्रतिश्रुतम्। ततः श्रीरामस्य यौवराज्याभिषेकसमये तया भरतस्य राज्यं, रामस्य च वने वासः प्रार्थितः। तदा मत्यपाशेन परिवीतस्य पितुर्निदेशमाज्ञां शिरसा जगृहे। ततो राज्यादिकं त्यक्त्वा सभार्यो वन ययौ। दुस्त्यजस्याऽपि सहर्ष[7]त्यागे दृष्टान्तः। मुक्तसङ्गो योगी असून्प्राणानिवेति ॥८॥

---

* This verse is found only in H V editions 1 ABJ omit इति शेष । • श्रीधरायोऽयं श्लोक 2 ABJ 'त्यादिना 3- -3 ABJ दित्यनेनैवान्वय 4 ABJ omit य 5 H V कुपितस्य 6 ABJ omit परशुरामस्य 7 H V हर्षं त्या'

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

खट्वाङ्गाद्दीर्घबाहुर्जज्ञे, तस्माद्दीर्घबाहो रघुः, स पृथु विपुलं श्रवो यशो यस्य तथाभूतः, तस्माद्रघोरजः महाराजो जज्ञे, तस्मादजाद्दशरथः सम्बभूव ॥१॥

तस्याऽपि दशरथस्यापि साक्षात्परब्रह्माभिन्नो भगवान् हरि· सुरैः प्रार्थितोंऽशांशेन सह चतुर्धा पुत्रतां प्राप्तः "भगवान् ब्रह्ममयो हरिः पुत्रतां प्राप्त." इत्यनेन श्रीरामस्य षाड्गुण्यपूर्णत्वमुक्तम्। अंशांशेन सहपुत्रतां प्राप्त इयनेन भरतादीनां तदंशावतारत्व मुक्तम्। एवञ्च भरतादीनामपि स्वांशावतारत्वात् तैस्सह चतुर्धा पुत्रातां प्राप्त इत्यर्थ. ॥१॥

चातुर्विध्यमेव दर्शयन् अवताराणां नामान्याह - रामेति। रामादिसंज्ञया चतुर्धा पुत्रातामागादिति पूर्वेणाऽन्वयः ॥२॥

तस्य श्रीरामस्य सीतापतेरनुचरितं हे राजन्! तत्त्वदर्शिभिरवतारयाथात्म्यविद्भिः ऋषिभिर्वाल्मीक्यादिभि भूरि बहुलं यथा भवति तथा, वर्णितं त्वया तन्मुहु· श्रुतम्। अतस्तन्न विस्तरत कथयामः। तथाऽपि सङ्ग्राहेण कथ्यमानं शृण्वित्यभिप्रायः ॥३॥

इतोऽध्यायद्वयेन श्रीरामचरितं विवर्णयिषुः तावदेकेन श्लोकेन सङ्गृह्णन् तत्कर्तृकामात्मरक्षां प्रार्थयते गुर्वर्थ इति। यः श्रीरामः गुर्वर्थे गुरोः पितुरर्थे वचस्सत्यतापालनार्थं त्यक्तं राज्यं येन सः पद्मवदतिसुकुमारभ्यां पद्भ्यां, तदेवाऽऽह- प्रियाया स्सीतायाः पाणेः स्पर्शो नाऽस्ति क्षमा, ययोस्ताभ्यां प्रतिवनमचरत्। हरीन्द्रानुजाभ्यां सुग्रीवलक्ष्मणाभ्यां मृजिता अपनीता पथरुजा मार्गाश्रमो यस्य, शूर्पणख्या वैरूप्यात् कर्णनासिकाच्छेदाद्धेतोः तया प्रलोभितेन रावणेनापहरात् प्रियेण कलत्रेण यो विरहः विश्लेषस्तेन या रुट्, तया आरोपिताया. कुटिलीकृताया· भ्रुवो विजृम्भेणैव त्रस्तो भीतोऽब्धिः समुद्रो यस्मात्। ततः तद्विज्ञापनेन बद्धः सेतुर्येन, ततः खला दुरात्मानः रावणादय एव दवो वनं, तस्य दहनः स एवम्भूतः कोसलेन्द्रो नोऽस्मानवतात् पातु ॥४॥

एवं सङ्गृहीतं श्रीरामचरितं आदित आरभ्य वर्णयति विश्वामित्रेत्यादिना यावदुत्तराध्यायसामाप्ति। विश्वामित्रस्याऽध्वरे यज्ञे मारीचाद्याः निशाचरा. नैर्ऋतपुङ्गवा· राक्षसश्रेष्ठा· लक्ष्मणस्य पश्यत एव, तमप्यनपेक्ष्यैव येन श्रीरामेण हताः। यच्छब्दानां स कोसलेन्द्रोऽवतान्नः इति पूर्वेणान्वयः ॥५॥

य इति। हे नृप! लोके ये वीरास्तेषां समितौ समाजे यः श्रीराम· सीतायाः स्वयंवरगृहे उग्रं कठिनं गरिष्ठं वा। तदेवाऽऽह- त्रिशतोपनीतं किङ्कराणां शतत्रयेण आनीतमैशं रौद्रं धनुरादाय सज्जीकृतमारोपितं विकृष्य बालगजस्येव लीला यस्य सः इक्षुदण्डमिव मध्ये बभञ्ज भग्नमकरोत् ॥६॥

आत्मनः स्वस्य यानि रूपादीनि तेषामनुरूपाणि रूपादीनि यस्यास्तं सीतासंज्ञां पूर्वमुरसि अधिलब्धो मानो यया तां श्रियं जित्वा धनुर्भङ्गेन स्वाधीनां कृत्वा धनुर्भङ्गमहानादश्रवणक्षुभितस्य भृगुपतेर्भार्गवरामस्य[1] प्ररूढं दर्पं मार्गे व्यपनयत् अपनीतवान्। कथम्भूतस्य? यो भृगुपतिः त्रिरित्युपलक्षणम् त्रिस्सप्तकृत्वः अराजबीजां राजबीजशून्यां महीमकरोत्, तस्य ॥७॥

इदानीं गुर्वर्थ इति श्लोकं विवृण्वन्नाऽऽह- य इति। कदाचित् कैकेय्या स्तुष्टेन दशरथेन त्वदपेक्षित वरद्वय दास्यामीति प्रतिश्रुतम्, तत्र श्रीरामस्य यौवराज्याभिषेकसमये तया भरतस्य राज्यं, रामस्य वनवासश्चेति वरद्वयं प्रार्थितं तदा सत्यरूपेण पाशेन परिवीतस्य परिवृतस्य पितुर्दशरथस्य स्त्रैणस्य स्त्रीवश्यस्याऽपि निदेशमाज्ञां शिरसा जगृहे, ततः सभार्यस्सानुजश्च राज्यादीन् त्यक्त्वा वनं ययौ दुस्त्यजानामपि राज्यादीनां सहर्षत्यागे दृष्टान्तः - मुक्तसङ्गोयोगी असून् प्राणानिवेति ॥८॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

ब्रह्ममयः वदेमुख्यार्थभूतः स्वयमंशेन लक्ष्मणादिषु अंशांशेन ॥१,२॥

तत्त्वदर्शिभिः ऋषिभिः वर्णितं तस्य सीतापतेर्भूरिफलतो महत्तरमनुचरितम् ॥३॥

त्वया पुनःपुनः श्रुतमपि शृणुष्व इत्याशयेनाह - गुर्वर्थ इति, गुर्वर्थे पित्रर्थे पद्मपद्भ्यां पद्मोपमचरणाभ्यां मृजित पथिरुजः मार्जितमार्गक्लेशः हरीन्द्रानुजाभ्यां सुग्रीवलक्ष्मणाभ्यां, वैरुप्यात् नासिकाच्छेदलक्षणात् प्रियायाः सीतायाः विरहोद्भूतरुषा आरोपितभ्रूविजृम्भः उन्नमितभूभङ्गः लङ्कायां हनुमतः आविर्भावं श्रुत्वा खला एव दवः खलदवः तस्य खलदवस्य दाहे दहनेऽग्निः "दवो दावो वनारण्यवह्न्योः" (वैज. को.6.1.27) इति यादवः। एवंविधो भगवान् कोसलेन्द्रनाम्ना भुव्यवतीर्ण इत्यन्वयः। अनतान्न इति केचित्पठन्ति ॥४॥

एकपद्येन सूत्रवत्संक्षिप्तरामचरितमादित एव किञ्चत्प्रपञ्चयति - विश्वामित्रेति। येनैव ॥५॥

लोके ये वीरास्तेषां समितौ सभायाम् ईशस्य शिवस्य विद्यमानं त्रिशतैरनेकैः पुरुषैरुपनेयं समीपं आनेतुं योग्यं सज्जीकृतं ज्यया सहितं कृतम् ॥६॥

उरसि अभिलब्धमानां प्राप्तमानां आत्मनः स्वस्य रूपादिभिरनुरूपा या सीताभिधा श्रीर्लमीः तां जित्वा प्राप्य स्वर्जित इति वत्। मार्गे व्रजन् रामो हतराजबीजां निर्मूलितक्षत्रसन्ततिं महीं कृतवतो भृगुपतेः परशुरामस्य प्ररूढं दर्पं उन्नतमदं व्यनय दपनीतावान् इत्यत्वयः ॥७॥

---

1 A.B 'वस्य रा' 2 A B 'त'

यो रामः सत्याख्यपाशेन परिवीतस्य परिवेष्टितस्य पितुर्निदेशमाज्ञां शिरसाऽपि पितृसम्भावनार्थं जगृहे इत्यन्वयः। अपिर्जुगुप्सितार्थो वा जुगुप्सायाम्। किंनिमित्तमित्यत उक्तं, स्त्रैणस्येति। स्त्रीजितस्य, सभार्य इत्यनेन तस्या अपि बहुमानातिशयं सूचयति - असूनिव इत्यनेन। राज्यलक्ष्म्यादीनामशक्यत्याज्यतां दर्शयति, मुक्तसङ्ग इत्यनेन। "असङ्गो ह्ययं पुरुषः" (वृहः उ 4-3-5) इति श्रुतिसिद्धनित्यासङ्गतां दर्शयति। अधिवासमयोध्याम् ॥८॥

रक्षःस्वसुर्व्यकृत रूपमशुद्धबुद्धेस्तस्याः खरत्रिशिरदूषणमुख्यबन्धून्।
जघ्ने चतुर्[1]दशसहस्रमवारणीयकोदण्डपाणिरटमान उवास कृच्छ्रम् ॥९॥

सीताकथाश्रवणदीपितहृच्छयेन सृष्टं विलोक्य नृपते दशकन्धरेण।
[2]जघ्नोऽद्भुतैणवपुषाऽऽश्रमतो[3]ऽपकृष्टो मारीचमाशु विशिखेन [4]यथा कमुग्रः ॥१०॥

रक्षोऽधमेन वृकवद्विपिनेऽसमक्षं वैदेहराजदुहितर्[5]यपयापितायाम्।
भ्रात्रा वने कृपणवत्प्रियया वियुक्तः स्त्रीसङ्गिनां [6-]गतिमि[-6]ति प्रथयंश्चचार ॥११॥

* दग्ध्वात्मकृत्यहतकृत्यमहन् कबन्धं सख्यं विधाय कपिभिर्दयितागतिं तैः।
बुद्ध्वाऽथ वालिनि हते प्लवगेन्द्रसैन्यैर्वेलामगात्स मनुजोऽजभवार्चिताङ्घ्रिः ॥१२॥

[7]यद्रोषविभ्रमविवृत्तकटाक्षपातसम्भ्रान्तनक्रमकरो भयगीर्णघोषः।
सिन्धुश्शिरस्यर्हणं परिगृह्य रूपी पादारविन्दमुपगम्य बभाष एतत् ॥१३॥

[8]तं त्वां विभो जडधियो [9]न विदाम भूमन् कूटस्थमादिपुरुषं जगतामधीशम्।
[10]यत्सत्वतः सुरगणा [11]रजसः प्रजे[12]शा मन्योश्च भूतपतयः स भवान्गुणेशः ॥१४॥

कामं प्रयाहि जहि विश्रवसोऽवमेहं त्रैलोक्य रावणमवाप्नुहि वीरपत्नीम्।
बध्नीघ्नी सेतुमिह ते यशसौ [13]वितत्यै [14]गास्यन्ति दिग्विजयिनो यमुपेत्य भूपाः ॥१५॥

बद्ध्वोदधौ रघुपतिर्विविधाद्रिकूटैः सेतुं कपीन्द्रकरकम्पितभूरुहाङ्गैः।
सुग्रीवनीलहनुमत्प्रमुखै[15]रनीकैर्लङ्कां विभीषणदृशा[16]ऽऽविशदग्रदग्धाम् ॥१६॥

---

1. ABGJ 'पा' 2 MMa 'जघ्नेकृतैण 3 MMa 'प्र 4 MMa 'थारि' 5 MMa 'पि' 6 MMa इतिरति' * This verse is not found in M Ma edns 7- -7 MMa तीव्र परिवृत्त 8 ABGJ न त्वा वय , MMa त त्वावय 9 ABGJ नु 10 MMa त्व सत्व' 11 MMa 'णान् र 12 MMa 'शान्म' 13 W विभूत्यै 14. ABGJMMa गायन्ति 15 MMa 'रनेन्द्रै, , W नरेकैं 16 MMa आशु'

**श्रीध० रक्ष इति।** रक्षसो रावणस्य स्वसु· शूर्पणखायाः अशुद्धबुद्धे सीता जिघृक्षो·[1] कामातुराया इति वा, रूपं[2] व्यकृत विकारमनयत्। तस्याः खरत्रिशिरदूषणमुख्या बन्धवो येषु तांश्चतुर्दशसहस्रं जघान। अवारणीयमलङ्घ्यमसह्यं कोदण्डं पाणौ यस्य सः ॥९॥

**सीतेति।** सीतायाः कथाश्रवणेन दीपितो हृच्छयो यस्य तेन मीतां हरिष्यता स्वस्माद्भीतेन स्वस्याश्रमादपकर्षणार्थे[3] सृष्टं निसृष्टं मारीचं विलोक्य जघान। कथम्भूतम् ? अद्भुतैणवपुषा स्वर्णहरिणदेहेनोपलक्षितम्। अत एव प्रलोभनेन आश्रमत स्तेनाकृष्टस्सन्[4] कं[5] दक्षप्रजापतिं[5] उग्र श्रीरुद्र· ॥१०॥

**रक्षोऽधमेनेति।** ततश्च रक्षोऽधमेन रावणेनाऽसमक्षमपनीतायाम्[6] प्रियायाम्।[6] तथा वियुक्तो भ्रात्रा लक्ष्मणेन सह कृपणवद्वने चचार. किमभिप्रायस्सन् इत्यनेन प्रकारेण स्त्रीसङ्गिनां दु·खोदर्कां गतिं प्रख्यापयन् ॥११॥

**दग्ध्वेति।** आत्मार्थेन कृत्येन कर्मणा रावणेन सह युद्धेन हतस्य कृत्यं शास्त्रीयं दहनादिकं यस्य तं जटायुषं पुत्र इव दग्ध्वा कबन्धं स्वग्रहणाय प्रसारितबाहुं राक्षसमहन्। अथ वालिनि हते तैः कपिभि दयिताया गतिं बुद्ध्वा अजभवाभ्यामर्चितौ अङ्घ्री यस्य, स मनुजो वेलां समुद्रतीरमगात् ॥१२॥

**यदिति।** तत्र त्रिरात्रमुपवासेन प्रतीक्षितोऽपि सिन्धु यदा नोपस्थित तदा यस्य रोषविभ्रमेण क्रोधलीलया विवृत्तो य· कटाक्षस्तस्य पातेन सम्भ्रान्ता नक्रा मकराश्च यस्मिन् भयेन गीर्णो ग्रस्त· स्तम्भितो घोषो येन स सिन्धु , एतद्वक्ष्यमाणं बभाषे। अर्हणमर्घ्यादिकम्।[7] छन्दोभङ्ग· आर्ष·।[7] रूपी मूर्तिमान् ॥१३॥

**भाषणमोह।** न त्वामिति हाश्माम्। एतावत्पर्यन्तं नु निश्चितं त्वां न विदाम न जानांम इत्यर्थ । इदानीं तु ज्ञातोऽसीत्याह। यदिति पृथम्पदम्। यस्येत्यर्थ·। यद्वशभ्य· सत्त्वादिभ्य· सुरणादयो भवन्ति स भवानिति ॥२४॥

**काममिति।** कामं यथेच्छं जलमाक्रम्याऽपि प्रयाहि अवमेहं पुरीषप्रायम्। त्रैलोक्यं रावयत्याक्रन्दयतीति तथा, तं जहि। हे वीर यद्यपितवजलं प्रतिबन्धकं नभवति, तथापीह सेतुं बध्नीहि। तर्हि किमर्थम्। ते यशसो विस्ताराय। तदेवाह - यं सेतुमुपेत्य दुष्करं कर्मविक्ष्य त्वद्यशो गास्यन्ति भूप्रास्तम् ॥१५॥

तद्वाक्यमभिन्द्य यत्कृतं तदाह - **बद्धेति।** विविधैरद्रीणां कूटै शृङ्गै , सेतुं बदद्ध्वा अग्रे सीतान्वेषणे हनुमतैव दग्धां लङ्कामाविशत्। कथम्भूतै : शृङ्गै कपीन्द्राणां करैः कम्पितानि भूरुहाणामङ्गानि शाखादीनि येषु तै· विभीषणस्य दृशा बुद्ध्या। कैस्सहाऽविशत्। सुग्रीवादय· प्रमुखा येषां तैरनीकै· ॥१६॥

**वीर० रक्ष इति।** रक्षसो रावणस्य स्वसुर्भगिन्याः शूर्पणख्या· अशुद्धबुद्धे सीताञ्जिघुक्षो कामातुराया वा रुपं व्यकृत

---

1 ABJ अपा° 2 H V omit असह्य° 3 ABJ °णार्थं 4 ABJ °नापकृ° 5- -5 ABJ दक्ष 6- -6 ABJ प्रियया 7- -7 ABJ omit

विकृतमकरोत्। तस्याः शूर्पणख्याः खरादिप्रमुखाः बन्धवो येषु तान् चतुर्दशसहस्रं सहस्राणि बन्धूनित्यत्र लिङ्गव्यत्ययः सहस्रमित्यत्र वचनव्यत्ययश्चार्षः। जघान हतवान् आर्षत्वात् सापेक्षस्यापि बन्धुशब्दस्य वृत्तिः नित्यसापेक्षत्वाद्वा तथाचोक्तं हरिणा "सम्बन्धिशब्दः सापेक्षो नित्यं सर्वः समस्यते" इति। कथम्भूतः? अवारणीयमलङ्घ्यमसह्यं कोदण्डं धनुः पाणौ यस्य तथाभूतः ततः इतस्ततो[1] वने सञ्चरन् कृच्छ्रमुवास वनवासस्य दुःखरूपत्वप्रदर्शनाय कृच्छ्रमिवोवासेत्युक्तिः नित्यानन्दरूपस्य तस्य दुःखाभावात् ॥९॥

सीतेति। सीतायाः कथाश्रवणेन दीपितः हृच्छयः कामो यस्य तेन दशकन्धरेण रावणेन सीतां जिघृक्षुणा स्वयं तत्र गन्तुं भीतेन सृष्टं प्रेषितं मारीचं विलोक्य हे नृपते! अद्भुतमेणस्यैव वपुर्यस्य तेन सीतया क्रीडार्थमपेक्षितेन मारीचेनाश्रमतः स्वाश्रमादपकृष्टः प्रलोभनपूर्वकमाश्रमतोऽपकृष्टः सन् आशु विशिखेन बाणेन तं मारिचं जघ्ने हतवान् यथा कं दक्षमुग्रो रुद्रस्तद्वत् ॥२१॥

रक्ष इति। तदा रक्षोऽधमेन रावणेनासमक्षं रामलक्ष्मणयोरिति शेषः। मृगानयनार्थं रामस्य तद्वृत्तान्तज्ञानार्थं लक्ष्मणस्य च प्रेषितत्वात् तयोरसान्निध्ये सति वने वृकवत् वृकेनेव वैदेहराजदूहितसीतायामपयापितायापहृत्य लङ्कां प्रति प्रापितायां सत्यां प्रियया वियुक्तो भ्रात्रा लक्ष्मणेन सह कृपणवत् दु·खीव वने चचार, किङ्कुर्वन् ? इति अनेन प्रकारेण स्त्रीसङ्गिना दुःखोदकां गतिं प्रथयन् प्रख्यापयन् ॥२१॥

दग्ध्वेति। आत्मनः श्रीरामस्य यत्कृत्यं प्रयोजनं सीतानिर्मोचनरूपं तेन निमित्तेन हतं रावणेन सह युद्धे हतं गृध्रं जटायुषं दग्ध्वा कबन्धम् अहन् जघान ततः कपिभिर्वानरैः सह सख्यं विधाय कृत्वा अथ वालिनि हते सति तैः कपिभिर्दयिता यास्सीताया गतिं बुद्ध्वा अजभवाभ्यां ब्रह्मरुद्राभ्यामर्चितावङ्घ्री यस्य तथाभूतोऽपि स श्रीराम· मनुजावताररूपत्वात्प्लवगेन्द्राणां कपीन्द्राणां सैन्यैः सह वेलां तीरं समुद्रस्येति शेषः अगात् जगाम ॥१२॥

यदिति। तत्र त्रिरात्रमुपवासेनापि प्रतीक्षितः सिन्धुर्यदा नोपस्थितस्तदा यस्य रोषविभ्रमेण क्रोधलीलया विवृत्तो यः कटाक्षस्तस्य पातेन सम्भ्रान्ताः नक्रा मकराश्च यस्मिन् भयेन गीर्णस्तम्भितो घोषो येन सा सिन्धुरर्हणमर्घ्यादिद्रव्यं शिरसि परिगृह्य निधाय रूपी मूर्तिमान् पादारविन्दमुपगम्य शरणं गत्वा एतद्वक्ष्यमाणं बभाषे ॥१३॥

भाषणमेवाह – तं त्वामिति द्वाभ्यां हे भूमन्! तं प्रायोपविष्टं त्वामेतावत्पर्यन्तं जडधियो वयं कूटस्थं निर्विकारं जगतामधीश मादिपुरुषं न विदामः न जानीमः। इदानीं तु ज्ञातोसीत्याह, यदिति यतिदिति पृथक्पदं लुप्तषष्ठ्यन्तं यस्य तव नियाम्यात् सत्वतः सत्वगुणात् सुरगणा जज्ञिरे[2] इति शेषः। रजसो गुणा प्रजेशाः प्रजापतयः, मन्योस्तमसः भूतपतयो रुद्रादयः स भगवान् गुणेशः

---

1 A.B वनी 2 A.B omit जज्ञिरे

सत्वादिगुणानां नियन्तेत्यधुनाऽहं मन्य इत्यर्थः ॥१४॥

**काममिति**। कामं यथेच्छं जलमाक्रम्यापि प्रयाहि गच्छ विश्रवसः प्रजापतेरवमेहं पुरीषप्रायं त्रैलोक्यं रावयति आक्रन्दयतीति तथा तं दशकन्धरं जहि। हे वीर! पत्नीं सीतां आवाप्नुहि यद्यपि तव मदीयं जलं न प्रतिबन्धकं भवति। तथापि सेतुं बध्नीहि किमर्थमित्यत्राह - ते तव यशसो विभूत्यै विस्ताराय। तथाहि दिग्विजयिनो भूपाः यं सेतुं उपेत्य दुष्करं त्वत्कर्मावेक्ष्य त्वद्यशो गास्यन्ति॥१५॥

तद्वाक्यमभिनन्द्य यत्कृतं तदाह बद्ध्वेति। कपीन्द्राणां करैः कम्पितानि भूरुहाणां अङ्गानि शाखादीनि येषु तैर्विविधानां अद्रीणां कूटैः शिखरैः उदधौ सेतुं बद्ध्वो रघुपतिः, सुग्रीवादयः प्रमुखा मुख्याः[1] येषां तैरनेकैः कपिभिः सह, अनीकैरिति पाठे सैन्यैः सहेत्यर्थः। अग्रे सीतान्वेषणसमये हनुमतैव दग्धां लङ्कां विभीषणस्य दृशा बुद्ध्वा[2] तत्प्रदर्शितमार्गेणेति भावः आविशत् प्रविवेश ॥१६॥

**विज०** रक्षस्स्वसुः शूर्पणख्याः रूपं व्यकृत कर्णनासिकाच्छेदन लक्षणविकारं कारितवान्। अटमानः वन इति शेषः ॥९॥

शूर्पणखीमुखात्सीतायाःसौन्दर्यादिविषयकथायाः श्रवणेन दीपितः प्रज्वलितो हृच्छयः कामो यस्य स तथा तेन दशकन्धरेण रावणेन सृष्टं प्रतिपाद्य प्रेषितम् "उत्सर्जनविसर्जने विश्राणनं वितरणं स्पर्शनं प्रतिपादनाम्" (अमःकोः2.428) इत्यभिधानम्। कृतैणवपुषा विरचितमृगाकारेणाश्रमतः समीपे विचरन्तं विलोक्य सीतया प्रकृष्टः उल्लिखितो भेदितो वशीकृत इति यावत्। आश्रमतोऽपकृष्टः दूरं नीतो रामो विशिखेन मारीचम् आशु जघ्न इत्यन्वयः। उग्रो नरसिंहो हिरण्यकशिपुनामानम् अरिं "उग्रो जज्ञे वीर्याय स्वधावान्" इति श्रुतिः। रुद्रोन्धकाख्यं रिपुं वा "उग्रः कपर्दी श्रीकण्ठः शितिकण्ठः कपालभृत् (अम. को. 1-32) इत्यभिधानम् ॥१०॥

निर्ऋत्यादिराक्षसविवक्षया रक्षोधमेन रावणेन विपिने वृकवत् स्थितेन वृणोत्यावृणोत्यात्मानमिति वेषान्तरेण स्थितेनेत्यर्थः। असमक्षमप्रत्यक्षं रामस्येति शेषः। वैदेहराजदुहितरि सीतायामपयापितायामपनीतायाम् अवने नियुक्तेन भ्रात्रा लक्ष्मणेन रहितायामिति शेषः। प्रियया सीतया वियुक्तः लोकदृष्टयेति शेषः। स्त्रीसङ्गिनां रतिमितीत्थं प्रथयन् प्रख्यापयन् चचार अनेन विटजनशिक्षणार्थमेवं दर्शितमिति ज्ञायते प्रथयन्नित्युक्तेः। किमर्थमेवं कल्पना? तत्स्वभावानुभावत्किं न स्यादिति चेन्न।-

'नित्यपूर्णसुखज्ञानस्वरूपोऽसौ यतो विभुः। ततोऽस्य राम इत्याख्या तस्य दुःखं कुतोऽण्वपि॥

तथापि लोकशिक्षार्थ मदुःखो दुःखवर्तिवत्। अन्तर्हितां लोकदृष्ट्या सीतामासीत्स्मरन्निव ॥'

1 AB omit मुख्या 2 AB बुद्धवा

इति स्मृतिविरोधात् प्रियया वियुक्तत्वदर्शनमपि लोकदृष्ट्यपेक्षयेति ज्ञातव्यम्। तत्कुतोऽवगतमिति चेत् - ''ज्ञापनार्थं पुनर्नित्यसम्बन्धः स्वात्मनः श्रिया। अयोध्याया विनिर्गच्छन् सर्वलोकस्य चेश्वरः। प्रत्यक्षं तु श्रिया सार्धं जगामानादिरव्यः (स्कान्दे)'' इति स्मृत्या ज्ञातव्यम्। एवमन्यत्रापि प्रमाणसामर्थ्यात्सर्वत्राप्यनुसन्धेयोऽन्यार्थ इति विशदं समस्तम् ॥११-१२॥

इतोपि श्रीरामः साक्षान्नारायणावतार एव न देवदत्ताद्यन्यतमः। तस्य प्रियावियोगादिना दुःखप्रकटनमसुरजनमोहनाय मानुषावतारदेवताजनशिक्षणाय चेत्येतदत्रत्यैः श्लोकैरेव ज्ञातुं सुकरमित्याशयेन तन्माहात्म्यं प्रकटयति - यद्रोषेति। यस्य रामस्य रोषेण तीव्रश्च परिवृत्तश्च कटाक्षः यद्रोषतीव्रपरिवृत्तकटाक्षस्तस्य पातेन लक्षवेधवद्विषयीकरणेन सम्भ्रान्ता इतस्ततोऽनवस्थिता नक्राश्च मकराश्च यस्मिन् स तथा भयेन गीर्णो नष्टो घोषो यस्मिन् स तथा अत एव तूष्णीं स्थित इत्यर्थः। अर्हणमर्घ्यपाद्यादि पूजासाधनम्, रूपी करचरणादिविशिष्टावयवोपेतः ॥१३॥

जडवदचेतनवत् धीर्येषां ते तथा, ज्ञानपूर्वप्रवृत्तिशून्या इत्यर्थः. जडाधारा इत्यर्थोपि ग्राह्यः अनेन तावदेवास्मत्तः प्रयोजनमिति सूचयति - वेदान्ते जगत्कारणस्य ब्रह्मत्वं निरणायि रामस्य तदभावात्तत्त्वं कथमिति चेत्तदस्याप्यस्तीत्याह त्वमिति। यस्त्वं सत्त्वगुणात्सुरगणान् अस्राक्षीः रजोगुणात् प्रजेशान् मनुष्यानसृजः। मन्योस्तमोगुणाच्च भूतपतयः भूतपतीन् ब्रह्मराक्षसादिलक्षणासुर उदभावयः स परमाण्वादिमहत्तत्वान्तजगतः कर्ता भवान् नान्यः,गुणैः प्रवर्तमानस्य गुणनिमित्ताभिभवो नाशङ्कनीयः, गुणानां तदधीनत्वात् इत्याशयेनाऽह- गुणेश इति। क्रोधस्य तमःकार्यत्वात्तेन तल्लक्षयति ॥१४॥

यथाऽवमेहो विष्टा शरीरान्निर्गता शुनामुपभोगाय भवति तथाऽयमपि विश्रवसो देहान्निर्गतत्वेनावमेहस्थानीयस्त्वच्छर निर्भिन्नहृदयः शुनामशनाय स्यादित्यतो विश्रवसोऽवमेहमित्युक्तं त्रैलोक्यस्य रोदनकरणत्वात् त्रैलोक्यरावणम्। हे वीर! इह मयि वितत्यै विस्ताराय यं सेतुम् ॥२५॥

विविधाद्रिकूटैर्नानाविधपर्वतशृङ्गैः कपीन्द्रणां करैः कम्पितानि भूरुहाणां वृक्षाणाम् अङ्गानि शाखोपशखालक्षणानि येषु तानि तथा तैः ॥२६॥

**सा वानरेन्द्रबलरुद्धविहारकोष्ठश्रीद्वारगोपुरसदोवलभीविटङ्का।**
**निर्भज्यमानधिषणध्वजहेमकुम्भशृङ्गाटका गजकुलैर्ह्रदिनीव घूर्णा ॥१७॥** [1]

**रक्षःपतिस्तदवलोक्य निकुम्भकुम्भधूम्राक्षदुर्मुखसुरान्तनरान्तकादीन् ।**
**पुत्र[2] प्रहस्तमतिकाय[3]मकम्पनादीन् सर्वानुगान् समहिनोदथ कुम्भकर्णम् ॥१७॥**

1 HV ऋतैः 2 MMa पुत्रान् 3 ABGJMMa 'वि' '

तां यातुधानपृतनामसिशूलचापप्रासर्ष्टिशक्तिशरतोमरखड्गदुर्गाम्[1] ।
सुग्रीवलक्ष्मणमरुत्सुतगन्धमादनीलाङ्गदर्क्षपनसादिभिरन्वितोऽयात्[2] ॥१९॥

तेऽनीकपा रघुपतेरभिपत्य सर्वे द्वन्द्वं वरूथमिभपत्तिरथाश्वयोधैः[3] ।
जघ्नुर्द्रुमैर्[4] गिरिगदेषुभिरङ्गदाद्याः सीताभिमर्शहतमङ्गलरावणेशान्[5] ॥२०॥

रक्षःपतिः स्वबलनष्टिमवेक्ष्य रुष्ट आरुह्य यानकमथाभिससार रामम् ।
स्वः स्यन्दने द्युमति मातलिनोपनीते विभ्राजमानमहनन्निशितैः क्षुरप्रैः ॥२१॥

रामस्तमाह पुरुषादपुरीष यन्नः कान्तासमक्षमसतापहृताश्ववत्[6] ते ।
त्यक्तत्रपस्य फलमद्य जुगुप्सितस्य यच्छामि काल इव कर्तुरलङ्घ्यवीर्यः[7] ॥२२॥

एवं क्षिपन्[8] धनुषि संधितमुत्ससर्ज बाणं स वज्रमिव तद्धृदयं बिभेद ।
सोऽसृग् वमन् दशमुखैर्न्यपतद् विमानाद्धाहेति जल्पति जने सुकृतीव रिक्तः[9] ॥२३॥

ततो निष्क्रम्य लङ्काया यातुधान्यः सहस्रशः ।
मन्दोदर्या समं तस्मिन्[10] प्ररुदन्त्य[11] उपाद्रवन् ॥२४॥

**श्रीध० सेति**। ततश्च सा लंका घूर्णा प्रचलिता बभूव। कथंभूता वानरेन्द्राणां बलै रुद्धा विहारादयो यस्याम्। निर्भज्यमाना धिषणादयो यस्यां सा। तत्र विहारः क्रिडास्थानम्। कोष्टं धान्यागारादि। श्री : कोशः। द्वारं गृहादीनाम्। गोपुरं पुरद्वारम्। सदः सभा। वलभी प्रासादादिपुरोभागच्छादिनी। विटंकः कपोतपालिका। धिषणं वेदिकादि। शृङ्गाटकं चतुष्पथम् ॥२७॥

**रक्षेति**। रक्षसां पति· रावण । पुत्रमिन्द्रजितं प्रहस्तादींश्च समहिनोत्प्रायुंक्त ॥१८॥

**तामिति**। असिशूलादिभिर्दुर्गमां तां यातुधानपृतनां सुग्रीवादिभिरन्वितः श्रीरामः अयात्[12] । मरुसुतो हनूमान्। ऋक्षो जांबवान् ॥१९॥

**त इति**। ते रघुपतेरनीकपा अंगदाद्याः सर्वे रावणस्येभादिभिर्युद्धरूथं सैन्यं तत्र द्वंद्वं यथा भवति तथाऽभिपत्य संगम्य द्रुमादिभिर्जघ्नुः। कान्। सीताया अभिमर्शेन हतं मंगलं यस्य सः रावणः ईशो येषां तान् ॥२०॥

1 MMa जुष्टाम् 2 ABGJ गात् 3 MMa योधम् 4 ABGJMMa 'द्रुमै' 5 MMa 'शम्। 6 MMa स्वय ते। 7 MMa 'म' 8 MMa 'पद्धनु' 9 MMa रक्ष
10 W तत्र 11 ABGJ 'दत्य 12 ABJ अभ्यणात्

**रक्षःपतिरिति।** स्वबलस्य नष्टिं नाशमवेक्ष्य रुष्टः क्रुद्धस्सन् यानकं पुष्पकविमानं, रथं वाऽऽरुह्य[1] श्रीराममभिससार। अथ तं स्वस्यंदने स्वर्गस्थे इंद्रस्य रथे मातलिर्नेद्रसारथिनोपनीते द्युमति दीप्तियुक्ते विभ्राजमानमहनदहन् ॥२१॥

**राम इति।** हे पुरुषादपुरीष राक्षसपुरीषप्राय। यद्यस्मादपहृता। श्ववत् श्वा यथाऽसमक्षं गृहं प्रविश्य किमपि हरति तद्वत्। तस्माज्जुगुप्सितस्य कर्मण. कर्तुस्तेऽद्य काल इवालंघ्यवीर्योऽहं फलं यच्छामि। अधर्मकर्तुः पुंसः कालो यथा यच्छतीति वा ॥२२॥

**एवमिति।** रिक्तः क्षीणपुण्यः सुकृती विमानादिव। विमानात् पुष्पकान्यपतदिति वा ॥२३॥

राक्षसस्त्रीणां विलापमाह **तत** इति पंचभिः। मन्दं स्वल्पमुदरं यस्यास्तया रावणभार्यया सह ॥२४॥

**वीर० सेति।** सा श्रीरामेण सकपिसैन्येन प्रविष्टा लङ्का गजकुलैः ह्रदिनी यथा घूर्णा भवति तद्वत् घूर्णा बभूव, कथम्भूता? वानरेन्द्राणां बलैरुद्धा विहारादयो यस्यां, निर्भज्यमाना धिषणादयो यस्यां सा, तत्र विहारः क्रीडास्थानं कोष्ठं धान्यागारादि, श्रीः कोशः, गृहादीनां, गोपुरं पुरद्वारं, सदः सभाः बलभी प्रासादादिपुरो भागच्छादिनी विटङ्कः कपोतपालिका, धिषणं वेदिकादि, ध्वजहेमकुम्भौ प्रसिद्धौ शृङ्गाटकश्चतुष्पथः ॥१७॥

**रक्ष इति।** रक्षःपतिः रावणः तद्विघूर्णनं दृष्ट्वा निकुम्भादीन् एकैकशः स्वस्वबलसहितान् पुत्रमिन्द्रजितं प्रहस्तादीश्च सर्वाननुगान् भृत्यान् समहिनोत् प्रायुंक्त अथ कुम्भकर्णं च समहिनोत् ॥१८॥

**तामिति।** तामसिशूलादिभिर्दुर्गमां यातुधानानां पृतनां सेनां सुग्रीवादिभरन्वितः श्रीरामोभ्ययात्[2] तत्र मरुत्सुतो हनुमान्, ऋक्षो जाम्बवान् ॥१९॥

**त** इति। ते रघुपतेरनीकपाः सर्वे अङ्गदाद्याः रावणस्येभादीनां गजादीनां यूथैर्यद्वरूथं सैन्यं तत्द्वन्द्वं यथा भवति तथा अभिपद्य सङ्गम्य द्रुमैर्गिरिभिर्गदाभिरिषुभिश्च सीताया अभिमर्शनेन हतं मङ्गलं यस्य स रावण ईशो येषां तान् निकुम्भादीन् जघ्निरे ॥२०॥

**रक्ष इति ।** अथ रक्षःपतिः रावणः स्वबलस्य नष्टिं नाशमवेक्ष्य रुष्टः कुद्धस्सन् यानकं विमानमारुह्य श्रीराममभ्यपतत् अथ स्वस्स्यन्दने इन्द्रस्य रथे मातलिना इन्द्रसारथिना उपनीते समानीते द्युमति दीप्तियुक्ते विभ्राजमानं श्रीरामं क्षुरप्रैः क्षुरधारातुल्याग्रै र्विशिखैर्बाणैरहनत् तताड। तनादित्वादेव सिद्धेकृञ् ग्रहणेन गणकार्यस्यानित्यत्वादार्षत्वाद्वा शपो लुगभावः ॥२१॥

1 ABJ 'कवि' 2 AB 'गात्

तमेवं ताडयन्तं रावणं श्रीराम आह - किमिति। हे पुरुषादपुरीष! राक्षसेषु तेषां वा पुरीषप्राय! यस्मान्नोऽस्माकमसमक्षं कान्ता असता दुरात्मना त्वया शुनेवापहृता शुना यथा असमक्षं गृहं प्रविष्टेन किमपि वस्त्वपह्रियते तद्वदिति दृष्टान्तार्थः, तस्मात् जुगुप्सितस्य, कर्मणः इति शेषः, कर्तुस्ते निर्लज्जस्य तवाद्यकालो मृत्युरिवालंघ्यवीर्योऽहं फलं यच्छामीति ॥२२॥

एवमित्थमधिक्षिपन् धनुषि सन्धितं बाणमुत्ससर्ज प्रायुंक्त स बाणो वज्रमिव तस्य रावणस्य हृदयं बिभेद स रावणः दशभिर्मुखैरसृक् रुधिरं वमन् जने पश्यति जने हाहेति वादिनि सति विमानात् पुष्पकादपतत् यथा सुकृती क्षीणपुण्यः स्वर्लोकात् पतति तद्वत् ॥२३॥

तत इति। ततो यातुधान्यः राक्षस्यो मन्दोदर्य्या सह लङ्कायाः निष्क्रम्य प्ररुदन्त्यस्तत्र रावणसमीपे उपाद्रवन् आजग्मुः ॥२४॥

**विज०** यदा सा लङ्का रामेणाविष्टा तदा गजकुलैः घूर्णा ह्रदिनीव घूर्णाऽभूदिति शेष·। विहरन्त्यस्मिन्निति विहारं क्रीडास्थानं कोष्ठमन्तर्गृहं सद्द्वारं सभाद्वारं, प्रशस्तसाधारणद्वारं वा गोपुरं पुरद्वारं, सदः सभास्थानं, वलभी, गृहाच्छादनान्तर्नाली, दारुभिः परितो निर्मिता गोपानसीति कीर्त्यते विटङ्का[1] पक्षिपट्टिका वानरेन्द्राणां बलेन सेनाया रुद्धा आवारिताः विहारादयो यस्या· सा तथा "आच्छादनं स्याद्वलभीगृहाणां गोपानसी दारुषु वक्रसंस्था। निप्रं वलीकं पटलान्तमाहुः कपोतपाली च विटङ्कसंज्ञाम्॥" हल. को 2.48 -इति हलायुध· "गोपानसी तु वलभीच्छादने वक्रदारुणि। कपोतपालिकायान्तु विटङ्कं पुन्नपुंसकम्।" (अम. को. 2.33) इत्यमरः। निर्भज्यमाना वानरेन्द्रबलेन निर्भिद्यमाना धिषणध्वजाः गृहालङ्कारहेतवः हेमकुम्भाः सुवर्णकलशाः, शृङ्गाटकाः गृहमुखाग्रतोन्नतत्रिशूलाङ्कग्रहैकदेशाः यस्यां सा तथा ध्वजोपरिस्थहेमकुम्भैर्युक्ताः शृङ्गाटकाः चतुष्पथा वा ॥१७॥

तद्वानरेन्द्रबलकृतं कर्म समहिनोदपातयत् ॥१८॥

या रावणेन प्रेरिता तां यातुधानपृतनां राक्षससेनाम् ॥१९॥

रघुपतेस्ते अनीकपाः सेनानायकाः वरूथं रथगुप्तिमभिपत्य प्राप्य इभाश्च पत्तयश्च रथाश्चाश्वाश्च योधाश्च यस्मिन् तदिभपत्तिरथाश्वयोधं, द्वन्द्वं द्वाभ्याम् द्वाभ्याम् इभादिभ्यां क्रियमाणं युद्धम् अभ्युपगम्य राक्षसबलं जघ्नुरित्यन्वय· "रथगुप्तिर्वरूथो ना कूबरो ना युगन्धरः" (वैज. को. 3.7.132) इति यादवः। कीदृशं बलं सीताभिमर्शेन सीतापरामर्शेन सीताया अपहारेणेत्यर्थः। हतं नष्टं मङ्गलं पुण्यं यस्य स तथा स चासौ रावण· सीताभिमर्शहतमङ्गलरावण· स एवेशो यस्य तत्तथा तत् ॥२०॥

द्युमति तेजोवति स्वः स्वर्गादवतीर्णे स्यन्दने रथे विभ्राजमानं क्षुरप्रैरर्धचन्द्रैः "अर्द्धचन्द्रः क्षुरप्रः स्यात्" (वैज. को.

---

1 AB °ङ्क

3.7.182) इति। प्रासः कुन्तः ऋष्टि· प्रसिद्धा शक्ति· शतमारणी तोमरः लोहमयद्विफलः, निस्त्रिंशः खड्गः पट्टिशः लोहदण्ड इत्यर्थः। शतघ्नी चतुस्ताला लोहकण्टकसंचिता केचित् शतघ्नीमयःकण्टकसंछन्नां महाशिलां वदन्ति, भुशुण्डी वृत्तायःकलसश्चिता, दारुमयी हस्तिवरो गजत्रासहेतुरष्टमुनयः देवदण्डोऽश्वत्रासकरोरत्निमात्रः द्रुघणो मुद्गरः, तत्र शक्त्याद्यस्त्रं हस्तमुक्तं, शरादिकं [1] यन्त्रमुक्तं मुक्तामुक्तं नागपाशादिकं अमुक्तं छुरिकादिकमिति चतुर्विधमायुधं प्रसङ्गात्कथितम् ॥२१॥

हे पुरुषादपुरीष! राक्षसाधम! "अपकृष्टं पुरीषं स्यात् [2-]विष्ठनिष्ठ्यूतमप्युत[-2]" इति असता अप्रशस्तकर्मणा त्वया कान्ता सीता नः अस्माकमसमक्षम् अस्मान्वञ्चयित्वाऽपहृतेति यत्तस्मादद्य त्यक्तत्रपस्य निर्लज्जस्य रक्षस्त्वेन जुगुप्सितस्य ते तव तस्य कर्मणः फलं कर्तुं अनेकार्थत्वाद्धातूनां दातुमिच्छामि तवाधुना तल्लङ्घनमशक्यमित्याशयेनाह - काल इति। कालोऽन्तकः "कालो मृत्यौ यमे" इति यादव· "वीर्यं पराक्रमे रेतस्यन्नमाहात्म्ययोरपि" (वैज· को·6.3.32) इति ॥२२॥

स रावण·, सुकृती भुक्तपुण्य·स्वर्गादिव ॥२३-२४॥

**स्वान् स्वान् बन्धून् परिष्वज्य लक्ष्मणेषुभिरर्दितान्।**
**रुरुदुः सुस्वरं दीना घ्नन्त्य आत्मानमात्मना ॥२५॥**

**हा हताः स्म वयं नाथ लोकरावण रावण।**
**कं यायाच्छरणं लङ्का त्वद्विहीना परार्दिता ॥२६॥**

**[3]नवै वेद महाभाग भवान् कामवशं गतः।**
**तेजोऽनुभावं सीताया येन नीतो दशामिमाम् ॥२७॥**

**कृतैषा विधवा लङ्का वयं च कुलनन्दन।**
**देहः कृतो[4]ऽन्नं गृध्राणामात्मा नरकहेतवे ॥२८॥**

**श्रीशुक उवाच**

**स्वानां विभीषाणश्चक्रे कोसलेन्द्रानुमोदितः।**
**पितृमेधविधानेन यदुक्तं साम्परायिकम् ॥२९॥**

**ततो ददर्श भगवानशोकवनि[5]कालये।**
**क्षामां [6]स्वविरह[7]व्याधिं शिंशुपामूलमा[8]स्थिताम् ॥३०॥**

1 AB पत्र 2--2 ABMa विष्ठयनिष्क्रममत्युत 3 ABGJ नैव 4 MMa ०ऽय 5 ABGJMMa 'काश्रमे 6 MMa ०याधे 7 AGMMa 'श' 8 ABGJ 'सथि'

**रामः प्रियतमां भार्यां दीनां वीक्ष्यान्वकम्पत।**

**आत्मसंदर्शनाह्लादविकसन्मुखपङ्कजाम् ॥३१॥**

**आरोप्यारुरुहे यानं भ्रातृभ्यां हनुमद्युतः।**

**विभीषणाय भगवान् दत्त्वा रक्षोगणेशताम् ॥३२॥**

**श्रीध० हेति।** परैरर्दिता पीडिता[1] ॥२५-२७॥

**कृतेति।** गृध्राणामन्नं भक्ष्यः। नरकहेतवे नरकभोगाय ॥२८॥

**स्वानामिति।** सांपरायिकमौर्ध्वदैहिकम् ॥२९-३०॥

**राम इति।** आत्मन· स्वस्य संदर्शनेन य आह्लादस्तेन विकसन्मुखपंकजं यस्यास्ताम् ॥३१॥

**आरोप्येति।** यानं पुष्पकम्। भ्रातृभ्यां लक्ष्मणसुग्रीवाभ्याम् ॥३२॥

**वीर० तत्रेति।** तत्र लक्ष्मणस्य बाणैरर्दितान् हतान् स्वान् स्वान् बन्धून् परिष्वज्य आत्मना आत्मानं घ्नन्त्यः दीनाः दुःखिता· सुस्वरं रुरुदुः ॥२५॥

रोदनप्रकारमेवाह - **हाहेति त्रिभिः।** हेति खेदद्योतकमव्ययं हे नाथ! हे लोकरावण! वयं हताः स्म हतप्राया बभूविम अधुना परै शत्रुभिरर्दिता पीडिता त्वया हीना रहिता लङ्का लङ्कास्थो जन· कं शरणं यायात् ॥२६॥

**न वा इति।** हे महाभाग' भवान् कामवशङ्गतः सीतायास्तेजसः प्रभावं तेजोरूपं वा प्रभावं न वै वेद न ज्ञातवान् येन तेजोऽनुभावेनमां दशां नीतः प्राप्तवानसि ॥२७॥

**कृतेति।** हे कुलनन्दन! वयमेषा लङ्का च विधवा कृता, येनेत्यनुषङ्ग·। अयं शयान· त्वद्देहः गृध्राणां कृत·, भक्ष्य इति शेषः। आत्मा तु नरकहेतवे नरकभोगाय कृत· ॥२८॥

**स्वेति।** ततः कोसलेन्द्रेण श्रीरामेणानुमोदितो विभीषण· पितृमेधविधानेन पितृमेधविधिना यदुक्तं विहितं तत्साम्परायिकं प्रेतकर्म स्वानां रावणादीनां चक्रे ॥२९॥

**तत इति।** ततो भगवान् श्रीराम अशोकवने य आश्रमस्तस्मिन् शिंशुपाया मूलमाश्रितां मूलो स्थितां स्वस्य विश्लेष एव व्याधिर्यस्यास्तामत एव क्षामां कृशाम् ॥३०॥

---

1 H V omit पीडिता

प्रियतमां भार्यामवलोक्यानुकम्पितवान् आत्मनः स्वस्य सन्दर्शनेन आह्लादस्तेन विकसन्मुखं पङ्कजमिव यस्यास्तां सीताम् ॥३२॥

यानं पुष्पकमारोप्य भ्रातृभ्यां वालिरावणभ्रातृभ्यां सुग्रीवविभीषणाभ्यां सह हनुमता युक्तो यानमारुरोह रक्षोगणाधिपत्यम् आकल्पान्तमायुर्लङ्काञ्च विभीषणाय दत्त्वा ॥३२॥

**विज०** अर्दितान् हिंसितान् "अर्द हिंसायाम्" आत्मानं देहम् उदरमिति यावत् आत्मना देहेन हस्तेन ॥२५-२६॥

नीतो येन तं नैव वेद ॥२७॥

वयं च विधवा· कृता· देहः गृध्राणाम्, आत्मा जीवो जीवनाय कृतः गृध्रप्राण रक्षणेनापि पुण्यं स्यादिति तत्राह नरकहेतव इति, नरक दुःखानुभवार्थं भवति।

पितृमेधविधानेन शवदाहादिविधिना साम्परायिकं परलोकसुखसाधनम् ॥२९॥

क्षामामित्यादिकमसुरमोहनार्थम् ॥३०-३१॥

भ्रातृभ्यां लक्ष्मणविभीषणाभ्यां विभीषणस्य भ्रातृत्वमुपचारः ॥३२॥

**लङ्कामायुश्च कल्पान्तं ययौ चीर्णव्रतः[1] पुरीम्।**
**अवकीर्यमाणः कुसुमैर्लोकपालार्पितैः पथि ॥३३॥**

**उपगीयमानचरितः शतधृत्यादिभिर्मुदा।**
**गोमूत्रयावकं श्रुत्वा भ्रातरं वल्कलाम्बरम् ॥३४॥**

**महाकारुणिकोऽतप्यज्जटिलं स्थण्डिलेशयम्।**
**भरतः प्राप्तमाकर्ण्य पौरामात्यपुरोहितैः ॥३५॥**

**पादुके शिरसि न्यस्य रामं प्रत्युद्यता[2]ग्रजम्।**
**नन्दिग्रामात् स्वशिबिराद्गीतवादित्रनिःस्वनैः ॥३६॥**

**ब्रह्मघोषेण च मुहुः पठद्भिर्ब्रह्मवादिभिः।**
**स्वर्णकक्ष्य[3] पताकाभिर्हैमै[4]श्चित्रध्वजै रथैः ॥३७॥**

---

1 MMa तीर्ण 2 A.H V 'द्रुतो , MMa 'द्यता' 3 ABGJ कक्ष , H V कक्ष्या , MMa कक्ष्यै 4 MMa गजैश्चापि हैः'

**सदश्वै रुक्मसन्नाहै र्भटैः पुरटवर्मभिः।**
**श्रेणीभिर्वारमुख्याभि[1-]भृत्यैश्चोपायनो[-1]द्वहैः ॥३८॥**

**पारमेष्ठ्यान्युपादाय [2]पण्यान्युच्चावचानि च।**
**पादयो[3]रपतत् प्रेम्णा प्रक्लिन्नहृदयेक्षणः ॥३९॥**

**पादुके न्यस्य पुरतः प्राञ्जलिर्बाष्पलोचनः।**
**तमाश्लिष्य [4]दृढं दोर्भ्यां [5]स्नपयन् नेत्रजैर्जलैः ॥४०॥**

**श्रीध- लङ्कामिति।** आयुश्च दत्त्वा तेनापि सहैव ययौ ॥३३॥

**उपगीयमानेति।** [6-]गोमूत्रयावकं[-6] गोमूत्रपक्वयव[7]नान्नभोजनं, भ्रातरं भरतम् ॥३४-३५॥

**पादुके इति।** स्वशिबिराद्रामं विनाऽयोध्यामप्रविशन् स्वस्य वासं यत्र निर्मितवांस्तस्मात्पकाशाद्गीतादिभिर्युक्तो रामं प्रत्युद्[8]गतोऽभिमुखं ययौ ब्रह्म[9]घोषेण बृहता घोषेण स्वस्तिवाच[10-]निकादिकं वदद्भि[-10]ः स्वर्णरसा[11]क्ता कक्ष्या प्राता. यासां ताभिः पताकाभि हैमै[12]रिति चत्वारि रथविशेषणानि ॥३६-३७॥

**पारमेष्ठ्यानीति।** पारमेष्ठ्यानि राजार्हाणि छत्रचामरादीनि प्रेम्णा प्रक्लिन्नं हृदयमीक्षणे च नेत्रे यस्य ॥३९॥

**पादुके इति।** नेत्रजैः जलैः [13]तं भरतम् [14]स्नपयन् आश्लिष्य ॥४०॥

**वीर०** चीर्णमनुष्ठितं व्रतं पितुरनुशासनरूपं येन स भगवान् श्रीराम पुरीमयोध्यां विभीषणेन सहैव ययौ, कथम्भूत.? पथि लोकपालैरिन्द्रादिभिरर्पितानि यानि कुसुमानि तैरवकीर्यमाण· ॥३३॥

शतधृत्यादिभिर्ब्रह्मादिभिः मुदा हर्षेण उपगीयमानं चरितं यस्य तथाभूत· पुरीं ययावित्यन्वय·। गोमूत्रपक्वयवान्नभोजनं वल्कलमम्बरं यस्य जटा अस्य सन्तीति तथा स्थण्डिले दर्भैरास्तीर्णे भूप्रदेशे शेत इति तथाभूतं भ्रातरं भरतं श्रुत्वा महाकारुणिको भगवान् अ[15]तप्यत् परितताप भरत प्राप्तं पुरीमागच्छन्तं तं श्रीराममाकर्ण्य पादुके स्वशिरसि निधाय पौरैरमात्यै· पुरोहितैः गीतै वाद्यानां निस्स्वनैः ॥३४-३६॥

ब्रह्म वेदं मुहुर्मुहुः घोषेण उच्चैस्स्वरेण पठद्भि· ब्रह्मादिभि स्वर्णासक्ता कक्ष्या प्रान्ता यासां ताभि· पताकाभि

---

1- -1 ABGJ भृत्यैश्चैव पदानुगै।, MMa भृत्यैशर्चागात्सदोद्यतै। 2 MMa भाण्डान्यु° 3 ABGJMMa °न्य्र° 4 ABGJ चिर 5 ABGJMMa स्ना° 6- -6 ABJ omit 7 AB °चि° 8 ABJ °द्य° 9 ABJ म° 10- -10 ABJ omit 11 ABJ °क्षा 12 HV °रित्यादि 13 ABJ omit त भरतम् 14 ABJ स्ना° 15 AB त°

रथै. स्वर्णकवचधारिभिर्भटैः श्रेणीभिस्ताम्बूलिकैः वाराङ्गनाश्रेष्टाभिरुपायनोद्वहैरुपायनधारिभिर्भृत्यैश्च सह अग्रजं श्रीरामं स्वशिबिरान्नन्दिग्रामात् प्रत्युद्यत अभिमुखं ययावित्यन्वयः। रामं विनाऽयोध्यामप्रविशन् भरतो नन्दिग्रामे स्वस्य वासं निर्मितवान् तस्मात् शिबिरात् ययावित्यर्थ·। कथम्भूतै· रथैर्हैमैः स्वर्णमयैः चित्रा ध्वजा येषु, सन्तः समीचीना अश्वाः येषां, रुक्ममयाः सन्नाहा· बन्धना येषु तैः ॥३७-३८॥

पारमेष्ठ्यानि महाराजार्हाणि नानाविधानि छत्रचामरदीनि उपादाय प्रत्युद्यत इति पूर्वेणान्वयः। प्रेम्णा प्रक्लिन्नमार्द्रीभूतं हृदयमीक्षणे च यस्य स· ॥३९॥

प्रीत्या पादुके पुरतो निधाय पादयोरपतत् तत प्राञ्जलिः बाष्पलोचनस्तस्थाविति शेष·। ततः श्रीरामः तं भरतं दृढं गाढं यथा तथा दोर्भ्यामालिङ्ग्य नेत्रजैर्हर्षाब्बिन्दुभि[1] स्नपयन् ॥४०॥

**विज०** [2]तीर्णव्रत· पूर्णवनवासव्रत· ॥३३॥

शतधृत्यादिभि· ब्रह्मादिभि· गोमूत्रेण सह पक्वयावकाहारं, भ्रातरं भरतम् ॥३४-३६॥

स्वर्णकक्ष्यै· सुवर्णमयी कक्ष्या , उदरबन्धो येषां ते तथा, तैर्हैम्नालङ्कृतैश्चित्रा नानावर्णा ध्वजाः येषां तै· ॥३७॥

रुक्मसन्नाहै· स्वर्णनिर्मिता सन्नाहा कवचानि येषां तै पुरटं सुवर्णं श्रेणीभिरङ्गरक्षकैर्भृत्यैर्दासै पारमेष्ठ्यान्यनर्घत्वेन प्रशस्तानि भाण्डानि अश्वाभरणानि पिठराद्युपकरणानि च ॥३९-४०॥

**रामो लक्ष्मणसीताभ्यां विप्रेभ्योऽ[3]र्हत्तमाश्च ये।**
**तेभ्य स्वयं नमश्चक्रे प्रजाभिश्च नमस्कृतः ॥४१॥**

**धुन्वन्त[4] उत्तरासङ्गान् पतिं वीक्ष्य चिरागतम्।**
**उत्तराः कोसला माल्यैः किरन्तो ननृतुर्मुदा ॥४२॥**

**पादुके भरतोऽगृह्णाच्चामरव्यजनोत्तमे।**
**विभीषणश्च[5] सुग्रीवः श्वेतच्छत्रं मरुत्सुतः ॥४३॥**

**धुनुर्निषङ्गाञ्छत्रुघ्नः सीता तीर्थकमण्डलुम्।**
**अबिभ्रदङ्गदः खड्गं हैमं चर्मर्क्षराण् नृप ॥४४॥**

---

1 A.B स्ना॰ 2 A B ची॰ 3 A B G J येऽर्हसत्तमा।, MMa ये भवस्तत। 4 H M MaVs सङ्ग 5 ABGJMMa 'स्स'

**पुष्पकस्थो[1] वृतः[2] स्त्रीभिः स्तूयमानश्च वन्दिभिः ।**
**विरेजे भगवान् राजन् ग्रहैश्चन्द्र[3] इवोदितः ॥५४॥**

**भ्रातृभिर्नन्दितः[4] सोऽथ[5] सो त्सवां[6] प्राविशत् पुरीम् ।**
**प्रविश्य राजभवनं गुरुपत्नीः स्वमातरम् ॥४६॥**

**गुरून् वयस्या[7]नुचरान् पूजितः प्रत्यपूजयत् ।**
**वैदेही लक्ष्मणश्चाथ[8] [9-]यथावत् समुपेयतुः[-9] ॥४७॥**

**[10-]प्राप्यात्मजान् मातःस्वा न्[-10] प्राणांस्तन्व इवोत्थिताः ।**
**आरोप्याङ्केऽभिषिञ्चन्त्यो बाष्पौघैर्विजहुःशुचः ॥४८॥**

[11]**श्रीध० राम इति** । येऽर्हसत्तमाः कुलवृद्धास्तेभ्योऽपि नमनं चक्रे[11]॥४१-४२॥

अयोध्याप्रवेशप्रकारमाह- **पादुके**[12] इत्यादिसार्द्धैस्त्रिभिः ॥४३॥

**धनुरिति** । धनुश्च निषंगौ च तान् । ऋक्षराट् जाम्बवान् ॥४४-४५॥

**भ्रातृभिरिति** । गुरुपत्नीः कैकेय्याद्याः ॥४६॥

**गुरूनिति** । वयस्याननुचरांश्च[13] । [14-]यथावदनुक्रमेण[-14] समुपेयतु ॥४७॥

**प्राप्येति** । बाष्पौघैरभिषिंचत्य. शुच. शोकान्विजहु । शेषं स्पष्टम् ॥४८॥

**वीर** लक्ष्मणसीताभ्यां सह विप्रेभ्यो ये चार्हत्तमा[15] नमस्कार्या कुलवृद्धास्तेभ्यश्च स्वयं नमश्चक्रेप्रजाभिर्नमस्कृतश्च ॥४२॥

उत्तराः कोसला उत्तरकोसलदेशस्था जना चिरगतं पतिं श्रीराममवलोक्य माल्यै. पुष्पै· किरन्तः उत्तरासङ्गानुत्तरीयान् विधुन्वन्तश्चालयन्तो ननृतुः ॥४२॥

अयोध्याप्रवेशप्रकारमाह सार्द्धै स्त्रिभिः । भरत. पादुके अगृह्णात् विभीषण· सुग्रीवश्च व्यजनोत्तमे[16] अगृह्णतां मरुत्सुतो हनुमान् श्वेतातपत्रम् ॥४३॥

---

1.ABGJ °स्थोऽन्वित , MMa स्थैर्वृत 2 MMa एभि 3 MMa रिन्दुरिवो° 4 MMa °र्वं° 5 ABGJMMa °ऽपि 6 W °त्सव 7 ABGJMMa °वरजान् 8 ABGJMMa °श्चैव 9- -9 MMa यथायोग्य प्रणेमतु 10- -10 ABGJ पुत्रान् स्वमातरस्तास्तु , MMa पुत्रान् स्तन्मातरस्तावत् 11- -11 H V omit 12 ABJ इति 13 ABJ नवजांश्च 14- -14 H V omit 15 AB °र्हसत्तामा 16 TW °वौ

धनुश्च निषङ्गौ च तान् शत्रुघ्न अगृह्णादित्यनुषङ्गः। सीता तीर्थकमण्डलुमबिभ्रत्, हे नृप! अङ्गदः खड्ग, हैमं स्वर्णखचितं चर्म खेटम्, ऋक्षराट् जाम्बवान् अबिभ्रत् ॥४४॥

हे राजन्! भगवान् श्रीराम पुष्पकस्थ. स्त्रीभि· परिवृत. बन्दिभि· स्तूयमानश्च यथोदितश्चन्द्रो ग्रहैर्गुरुशुक्रादिभिर्विराजते तथा विरेजे बभ्राजे ॥४५॥

भ्रातृभिर्भरतादिभि नन्दितोऽनुमोदित उत्सवेन सहितश्च स भगवान् पुरीमयोध्यां प्राविशत् ततो राजभवनं प्रविश्य गुरुपत्नी कैकेय्याद्या· स्वमातरं कौसल्याम् ॥४६॥

गुरून् वसिष्टदीन् वयस्यान् अवरजांश्च कुलीनान् यथायोग्यं तै· पूजित. प्रत्यपूजयत् तश्ग वैदेही लक्ष्मणश्च यथावत् यथायोग्यं पूजयन्तौ पूजितौ च सम्यगुपेयतु राजभवनमित्यनुषङ्गः ॥४७॥

मातरः कौसल्यादय· सुतान् प्राप्य स्वा· स्वकीया तन्वः देहा. प्राणान् प्राप्य यथोत्थिता भवन्ति तद्वदुत्थिताः सत्य अङ्के आरोप्य हर्षजैर्बाष्पबिन्दुसङ्घै सिञ्चन्त्य शुच शोकान् विजहुः ॥४८॥

**विज०** ततस्तत्र ये विप्रा अभवस्तेभ्य ॥४२॥

उत्तरासङ्गम् उत्तरीयवस्त्रं धुन्वन्त कम्पयन्तः ॥४२-४३॥

निषङ्गं तूणीरम्, ऋक्षराट् जाम्बवान् ॥४४-४७॥

गत्वागतान् प्राणानवाप्य तन्व तनव यथोत्थिता भवन्ति तथा विरहशुच· ॥४९॥

**जटा निर्मुच्य विधिवत् कुलवृद्धैः समं गुरुः।**
**अभ्यषिञ्चद्[1] यथैवेन्द्रं चतुःसिन्धुजलादिभिः ॥४९॥**

**एवं कृतशिरःस्नानः सुवासाः[2] सुष्ठ्वलङ्कृतः।**
**स्वलङ्कृतैः सुवासोभिर्भ्रातृभिर्भार्यया बभौ ॥५०॥**

**अग्रहीदासनं भ्रात्रा प्रणिपत्य प्रसादितः।**
**प्रजाः स्वधर्मनिरता वर्णाश्रमगुणान्विताः।**
**जुगोप पितृवद् रामो मेनिरे पितरं च तम् ॥५१॥**

---

1 ABGJ भि॰ 2 ABGJ सम्य॰ , MMa सद॰

**त्रेतायां वर्तमानायां कालः कृतसमोऽभवत्।**
**रामे राजनि धर्मज्ञे सर्वभूतसुखावहे ॥५२॥**

**वनानि नद्यो गिरयो वर्षाणि द्वीपसिन्धवः।**
**सर्वे कामदुघा आसन् प्रजानां भरतर्षभ ॥५३॥**

**नाधिव्याधिजरा[1]क्षुत्तुट् दुःखशोकभयक्लमाः।**
**मृत्युश्चा[2]निच्छतां आसीद् रामे राजन्यधोक्षजे ॥५४॥**

**एकपत्नीव्रतधरो राजर्षिचरितः शुचिः।**
**[3]स्वधर्मान् [4]गृहमेधीयान् [5]शिक्षयन् [6]स्वयमाचरत् ॥५५॥**

**प्रेम्णानुवृत्त्या शीलेन प्रश्रयावनता सती।**
**[7]भिया ह्रिया च भावज्ञा भर्तुः सीताऽहरन्मनः ॥५६॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्या अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहस्या सहिताया
नवमस्कन्धे दशमोऽध्याय ॥१०॥

**श्रीध०** ॥४९-५६॥

इति श्रीमद्भागवते महापुराणे
श्रीश्रीधरस्वामि विरचिताया भावार्थदीपिकाया
व्यख्याया नवमस्कन्धे दशमोऽध्याय ॥१०॥

**वीर०** ततो गुरुर्वसिष्ठ· कुलवृद्धै· समं सह विधिवत् जटा· निर्मुच्य चतुस्सिन्धुजलादिभिः आदिशब्दाद्गङ्गा-यमुनाजलादिभिश्च श्रीरामम् इन्द्रमिवाभ्यषिञ्चत् ॥४९॥

एवं कृतं शिरःस्नानं येन शोभने वाससी यस्य स , सुष्ठु यथा तथा अलङ्कृत· श्रीराम· स्वलङ्कृतैः सुवासोभिः भ्रातृभिः भार्यया च तथाभूतया बभौ ॥५०॥

ततो भ्रात्रा भरतेन प्रणिपत्य प्रसादित· प्रार्थित· सिंहासनमग्रहीत् तदा विषयवासिन्य प्रजा· स्वधर्मनिरता·, तदेवाह

1 ABGJ °ग्लानि 2 ABGJMMa °ता ना° 3 ABGJMMa धर्मं 4 ABGJMMa °य 5 H T V W व्रत° 6 MMa °न् 7 ABGJ धिया

वर्णानामाश्रमाणां च ये गुणधर्मा पञ्चमहायज्ञादयः तैरन्विताः बभूवुः पिता यथा पाति तद्वद्रामः प्रजाः जुगोप ताश्च तं रामं पितरं मेनिरे अमन्यन्त ॥४१॥

तदा त्रेतायां वर्तमानायां त्रिपाद्धर्मयुक्ते त्रेतायुगे प्रवर्तमानेऽपि चतुष्पाद्धर्मयुक्तकृतयुगतुल्यः कालो बभूव भूतानां सुखकरे श्रीरामे धर्मज्ञे राजनि सति ॥५२॥

तदा वनादयः सर्वे प्रजानां कामदुघाः काम्यमानफलादिप्रदा· आसन् तत्र वर्षाणि रम्यकादीनि द्वीपा सिंहलादयः, सिन्धवः समुद्राः हे भरतर्षभ! ॥५३॥

तदा अधोक्षजे श्रीरामे राजनि सति तदा आध्यादय· अनिच्छतां मृत्युश्च नासन् तत्र आधिर्मनःपीडा, व्याधिः शरीरजा दु·खमतीतपुत्रमरणस्मृत्यात्मकं प्रतिकूलं ज्ञानं, शोक वर्तमानेष्टवस्तुविश्लेषजः, भयमागाम्यनिष्टदर्शनजं यद्यप्याधिनिषेधेनैवैतत्रयं निषिद्धं तथापि तत् प्रपञ्चार्थमिदम् क्लमो ग्लानि· ॥५४॥

एकपत्नीव्रतधर· स्त्र्यन्तरपरिग्रहरहित· राजर्षेरिव चरितं यस्य स· शुचिः रागादिप्राकृतगुणरहितः गृहस्थस्य विहितान् स्ववर्णाश्रमानुकूलांश्च[1] धर्मान् लोकस्य शिक्षयन् स्वयमाचरत् लोकसङ्ग्रहार्थमाचरदित्यर्थ· ॥५५॥

प्रश्रयेण विनयेनावनता नम्रा, भावज्ञा अभिप्रायज्ञा सती सीता, प्रेमादिभिर्भर्तुः श्रीरामस्य मनो जहार तत्र प्रेम प्रीतिः अनुवृत्ति· परिचर्या, शीलं सुस्वभाव· सद्वृत्तिश्च, भीर्भयं ह्रीर्लज्जा ॥५६॥

इति श्रीमद्भागवते नवमस्कन्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां दशमोऽध्याय ॥१०॥

विज० गुरुर्वसिष्ठः ॥४९-५०॥

सिंहोपपदमासनम्। ग्रहणे हेतुमाह, - भ्रात्रेति, भ्रात्रा भरतेन ॥५१-५३॥

अनिच्छतां मरणमिति शेषः ॥५४-५५॥

अनुवृत्या शुश्रूषया, शीलेनानुकूलस्वभावेन, प्रश्रयेण विनयेन अवनता ॥५६॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
नवमस्कन्धे दशमोऽध्याय· ॥१०॥

---

1 T.W. 'र्णानु'

# एकादशोऽध्यायः

## श्रीशुक उवाच

भगवानात्मनाऽऽत्मनं राम उत्तमकल्पकैः[1]।
सर्वदेवमयं देवमीज आचार्यवान् मखैः ॥१॥

होत्रे [2]ददौ दिशं प्राचीं ब्रह्मणे दक्षिणां [3]प्रभुः।
अध्वर्यवे प्रतीचीं [4]वा उदीचीं [5]सामगायिने ॥२॥

आचार्याय ददौ शेषां यावती भूस्तदन्तरा।
मन्यमान इदं कृत्स्नं ब्राह्मणोऽर्हति निःस्पृहः ॥३॥

[6-]इत्ययं तदलङ्का[-6][7]रवासोभ्यामवशेषितः।
[8]तथा राज्ञ्यपि वैदेही सौमङ्गल्यावशेषिता ॥४॥

[9]ते तु [10]ब्राह्मणदेवस्य वात्सल्यं वीक्ष्य [11]सज्जनाः।
प्रीताः क्लिन्नधियस्तस्मै प्रत्यर्प्येदं बभाषिरे ॥५॥

अप्रत्तं नस्त्वया किं [12]नु भगवन् भुवनेश्वर।
[13-]यन्नोऽन्तर्हृदयं [-13]विश्य तमो हंसि स्वरोचिषा ॥६॥

नमो ब्रह्मण्यदेवाय रामायाऽकुण्ठमेधसे।
उत्तमश्लोकधुर्याय न्यस्तदण्डार्पिताङ्घ्रये ॥७॥

कदाचिल्लोक जिज्ञासुर्गूढो रात्र्यामलक्षितः।
चरन् [14]वचोऽशृणोद् रामो भार्यामुद्दिश्य कस्यचित् ॥८॥

## श्रीश्रीधरस्वामिविरचिता भावर्थदीपिका

ततश्चैकादशोऽयोध्यामावसन्ननुजैः सह। यज्ञादि यच्चकारेशो रामस्तदनुवर्ण्यते ॥

---

1 W °ल्पितै। 2 ABGJMMa अददात् 3 MMa विभु 4 ABGJMMa च 5 ABGJMMa °य स। 6- -6 MMa इत्यदात्स्वमलङ्का° 7 MMa °र, W °रान्
8 H V तदा 9 H V तत्र 10 ABGJ ब्रह्मण्य 11 ABGJ सस्तुतम्।, W सत्सु तत्। 12 MMa °तु° 13- -13 MMa यतोऽन्तरहृदि सविश्य 14 ABGJ वाचोऽ°

यद्वा- राम एकादशे यज्ञैरीजे राष्ट्रेष्ववासयत्। कुशादीन् वृत्तिरुदिता प्रजानां राघवस्य च ॥१॥

**आचार्यायेति**। तदन्तरा तासां दिशां मध्ये यावती भूस्तां ब्राह्मण एवार्हतीति मन्यमानः ॥१-३॥

**इतीति**। अयं श्रीराम·। तत्तदा। सौमंगल्यमाभरणादिकं तावन्मात्रमवशेषितं यस्याः[1], तव्द्यतिरिक्तं हिरण्यादि सर्वं ददावित्यर्थः ॥४,५॥

**अप्रत्तमिति**। किमप्रत्तं किमदत्तं सर्वं दत्तमित्यर्थ । विश्य प्रविश्य ॥६॥

**नम** इति। न्यस्तदण्डैर्मुनिभिरर्पितौ चित्ते न्यस्तावंघ्री यस्य तस्मै, तेष्वर्पितावंघ्री[2] येनेति वा ॥७,८॥

**वीर०** अथ भगवान् श्रीरामः उत्तमैर्वसिष्ठादिभि· कल्पितै· कारितै· मखैः क्रतुभिः सर्वदेवमयं स्वमात्मानमेव आत्मनैव आचार्यवान् सन् ईजे इयाज ॥१॥

**होत्र इति**। तत्र होत्रे प्राचीं दिशं दक्षिणामदात् ब्रह्मणे तु दक्षिणां दिशं अध्वर्यवे प्रतीचीं सामगायिने उद्गात्रे तूदीचीमदिशत्॥२॥

**तदन्तरं** तासां दिशामन्तरा मध्ये यावती भूमिरवशिष्टा तां सर्वामाचार्याय ददौ, कथम्भूतः? इदं कृत्स्नं भूमण्डलं ब्राह्मणोऽर्हति, प्रतिग्रहीतुमिति शेष·। इतीत्थं मन्यमान· निस्पृहश्चेति तथा समीचीनानलङ्कारांश्चादात् । एवं सर्वं दत्वा केवलं वासोभ्यां परिधानीयोत्तरीयाभ्यामवशेषित·, तथा राज्ञी वैदेही सीताऽपि भर्तुरभिप्रायज्ञा सर्वानलङ्कारान् प्रदाय केवलं सौमङ्गल्यमात्रेणावशेषिता बभूव ॥३,४॥

**तै** होत्रादयो ब्राह्मणा, ब्राह्मणा एव दैवतं यस्य तस्य श्रीरामस्य सत्सु तद्वदान्यत्वयुक्तं वात्सल्यमवलोक्य प्रीताः क्लिन्नधियः आर्द्रचित्तास्सन्त· तस्मै रामाय प्रत्यर्प्य, प्राच्यादिदिश इति शेषः। दिशः प्रतिग्रहीतुं वयं नार्हा इति विज्ञाप्येत्यर्थः, न तु प्रतिगृह्य[3] प्रत्यर्प्येत्यर्थ·, दत्तप्रत्यादानदोषापादनात्। एवञ्च दिशद्ददावित्यादेरपि प्रतिग्रहीतुं होत्रादीन् प्रार्थितवानित्यर्थः। इदं वक्ष्यमाणं बभाषिरे - हे भगवन्! त्वया नोऽस्मभ्यमप्रत्तमप्रदत्तं किन्तु सर्वमपि प्रदातुमुद्युक्तोऽसीत्यर्थः। तत्र हेतुं वदन्तो विशिंषन्तिः परमेश्वर· परो मा यस्मात्स, परम श्चासावीश्वरश्च, स्वत एवावाप्तसमस्तकामस्य तव किमेतैरिति भावः। किञ्च निरतिशय पुरुषार्थरूपमोक्षप्रदानाय तत्साधनसम्यग्ज्ञान विरोध्यज्ञानमस्माकमन्तर्हृदये प्रविश्य हंसि निरस्यसि, केन? स्वरोचिषा स्वप्रकाशेन, तस्यैवम्भूतस्य आत्मपर्यन्तवदान्यस्य कियदेतत्प्राच्यादिदिक् प्रदानमिति भावः ॥५,६॥

---

1 A तस्या 2 H V तात्र्य इति वा 3 W adds द्रव्य

त्वद्गुणान्वर्णयितुं न शक्नुम इत्यभिप्रायेण कैश्चिद् गुणैर्विशिंषन्तो नमस्कुर्वन्ति - **नम** इति। ब्रह्मणि ब्रह्मकुले साधुर्ब्रह्मण्यः। "तत्र साधुः" (अष्टा 4-4-49) इति यत्प्रत्यये "ये चाभावकर्मणो·" (अष्टाः 6-4-168) इति प्रकृतिभावः। स चासौ देवः स्वतेजसा दीप्यमानः ब्रह्मण्यानां देवः श्रेष्ठो वा, अकुण्ठमेधसे नित्यासङ्कुचितापरिच्छिन्नज्ञानाय उत्तमश्लोकानां धुर्योयः मुख्यः न्यस्तदण्डैर्भूतद्रोहरहितैः सर्वभूतसुहृद्भिर्मुनिभिरर्पितौ चित्ते निहितावङ्घ्री यस्य, न्यस्तदण्डेष्वर्पितावङ्घ्री येनेति वा, तस्मै श्रीरामाय तुभ्यं नमः इति ॥७॥

एवं सीतया सह दशवर्षसहस्राणि राज्यमुपास्य श्रीरामः कदाचिल्लोकजिज्ञासुः किंवदन्तीं ज्ञातुमिच्छुः गूढः प्रच्छन्नवेष इतरैरलक्षितो रात्र्यां तत्र तत्र पुर्यां चरन् कस्यचित्पुरुषस्य वचो भार्यामुद्दिशयोच्यमानमशृणोत् ॥८॥

**विज०** आचर्यवानित्यनेन गुरुकुलवासित्वं शिक्षितत्त्वं च सूचयति, "आचार्यवान् पुरुषो वेद" (छान्दोः उः 6-14-2) इति श्रुतेः ॥१-३॥

सौमङ्गल्यं मङ्गलसूत्रमेवावशेषितं यस्याः सा तथा ॥४॥

ब्राह्मणा देवा· पूज्या इति भावो यस्य स तथा तस्य वात्सल्यं स्नेहपारवश्यं भक्तिक्लिन्नधियः द्रवच्चित्ताः प्रत्यर्प्य दत्तं पुनर्दत्वा ॥५॥

ननु, दत्तं नालमिति मत्वा प्रत्यर्पितम्? इतोऽधिकं प्रियमस्मद्योग्यमेव दत्तमतोऽन्यन्नापेक्षितमिति मत्वा वा? न प्रथमः, यदृच्छालाभसन्तुष्टिमतामस्माकं अनलम्बुद्धिदोषो नास्ति यतोऽतो द्वितीय एवाभिमत इत्याशयेनाह - **अप्रत्तमिति**। हे भगवन्! त्वम् अस्मद् भक्त्याऽन्तर्हृदि संविश्य यथा निद्रा सुखसाधनं तथा स्थित्वा स्वरोचिषा ज्ञानलक्षणप्रकाशेनाज्ञानलक्षणं तमो हंसि नाशयसि यतोऽतस्त्वया नोऽप्रत्तमदत्तं किं नु, न किमपि इत्यतोऽधिकं भूदानादिकं न भवति ज्ञानधनस्यानश्वरत्वादहार्यत्वाच्च भूपालत्वात्तत्कर्म तवैव योग्यं तस्मिन्कर्मण्यनधिकारिणो वयं तस्मादयोग्यत्वात्प्रत्यर्पणेन स्वीकारेणापहारदोषपङ्कलेपो नास्ति भवत इति स्वीकृत्य तद्रक्षणं कर्तव्यमधिकृतत्वादिति भावः ॥६॥

त्वमस्मभ्यमनश्वरं धनं दत्तवान् वयं तत्प्रतिकर्तुं न शक्नुम किन्तु तुभ्यं नमनलक्षणं धनं दास्याम इत्येतावदेवेत्याशयेनाह **नम** इति। न्यस्ततत्त्वाय स्वकेषु निक्षिप्तस्वरूपाय अर्पिताङ्घ्रये स्वकेष्विति शेषः। न्यस्तदण्डार्पिताङ्घ्रये इति पाठे न्यस्तमनोवाक्कायदण्डाः संन्यासिनः तेष्वर्पितोऽङ्घ्रिः ज्ञानलक्षणा गतिर्येन स तथा "अघि लघि गत्यर्थौ" इति धातुः। उत्तमश्लोकस्य हरेः धुरं वहतीति उत्तमश्लोकधुर्यस्तस्मै ॥७॥

कस्यचित्पुंसो वचः ॥८॥

नाहं बिभर्मि त्वां दुष्टामसतीं परवेश्मगाम्।
[1]स्त्रैणो हि बिभृयात् सीतां रामो नाहं भजे पुनः ॥९॥

इति लोकाद् बहुमुखाद् दुराराध्यादसंविदः।
[2]पत्या भीतेन सा त्यक्ता प्राप्ता प्राचेतसाश्रमम् ॥१०॥

अन्तर्वत्न्यागते काले यमौ सा सुषुवे सुतौ।
कुशो लव इति ख्यातौ तयोश्चक्रे [3]क्रिया मुनिः ॥११॥

अङ्गद [4]श्चन्द्रकेतुश्च लक्ष्मणस्यात्म[5]जावुभौ।
तक्षः पुष्कल इत्यास्तां भरतस्य मही[6]पते ॥१२॥

सुबाहुः श्रुतसेनश्च शत्रुघ्नस्य बभूवतुः।
गन्धर्वान् कोटिशो जघ्ने भरतो विजये दिशाम् ॥१३॥

तदीयं धनमानीय सर्वं राज्ञे न्यवेदयत्।
शत्रुघ्नश्च मधोः पुत्रं लवणं नाम राक्षसम्।
हत्वा मधुवने चक्रे मथुरां नाम वै पुरीम् ॥१४॥

मुनौ निक्षिप्य तनयौ सीता भर्त्रा विवासिता।
ध्यायन्ती रामचरणौ विवरं प्रविवेश ह ॥१५॥

* तच्छ्रुत्वा भगवान् रामो रुन्धन्नपि धिया शुचः।
स्मरंस्तस्या गुणांस्तांस्तान्नाशक्नोद् रोद्धुमीश्वरः ॥१६॥

श्रीध० [7-]नेति। स्त्रैणः[-7] स्त्रीपरतन्त्रः ॥९॥

इतीति। असंविदोऽज्ञात्। प्राचेतसो वाल्मीकिस्तस्याश्रमं [8]सा सीता [9]प्राप ॥१०॥

अन्तर्वत्न्यीति। अन्तर्वत्नी गर्भिणी [10-]सती प्राचेतसाश्रमं प्रापेति[-10] पूर्वेणान्वयः। क्रियाः जातकर्माद्याः ॥११-१५॥

1 ABGJ स्त्रीलोभी 2 MMa श्रुत्वा 3 A क्रिया 4 ABGJ श्चित्र', MMa 'श्चक्र' 5 ABGJ 'जौ स्मृतौ, MMa 'जौ सुतौ। 6 H V 'पते * This verse is not found in MMa editions 7- -7 ABJ omit 8 ABJ omit सा सीता 9 ABJ प्राप्ता. 10- -10 ABJ omit

**तच्छ्रुत्वेति**। ईश्वरोऽपि शुचो रोद्धुं नाशक्नोत् ॥१६॥

**वीर०** तद्वाचो दर्शयति - **नेति**। परस्य पुरुषान्तरस्य वेश्म गच्छति पुनःपुनरिति तथा अत एव दुष्टामसतीं व्यभिचारिणीं त्वामहं न बिभर्मि। परवेश्मगामपि सीतां रामोऽबिभ्रत्, ततस्त्वं किं श्रेष्ठः? इति वदन्तीं प्रत्याह स्त्रैण इति। हि यस्माद्रामः स्त्रैणः अतः सीतां बिभृयात्, अहं तु पुनः स्त्रीपारवश्यरहितः त्वां न भजामीति ॥९॥

इतीत्थं असंविदः तत्त्वानभिज्ञात् अत एव बहुमुखान्नानाविधावादिनो दुराराध्यात् लोकाद्भीतेन पत्या श्रीरामेण त्यक्ता सा सीता प्राचेतसस्य वाल्मीकेराश्रमं प्राप्ता ययौ, कथम्भूता? अन्तर्वत्नी गर्भिण्येव सती गतेत्यन्वयः ॥१०॥

ततः काले प्रसवकाले सा सीता यमौ सुतौ सुषुवे तौ च कुशो लव इति ख्यातौ, तयोः कुशलवयोर्मुनिः प्राचेतसः जातकर्मादिक्रियाः चक्रे ॥११॥

तथाङ्गदादयो द्वौ द्वौ पुत्रौ लक्ष्मणादीनां सम्बभूवतुः ॥१२॥

दिशां विजये दिग्विजयकाले कोटिशो गन्धर्वान् भरतो हतवान् तदीयं गन्धर्वाणां सम्बन्धि सर्वं धनमादाय राज्ञे श्रीरामायार्पयामास, तथा शत्रुघ्नश्च मधोरसुरस्य पुत्रं लवणाख्यं राक्षसं हत्वा मधुवने मधुरां नाम पुरीं निर्ममे ॥१३-१४॥

मुनौ वाल्मीकौ तनयौ कुशालवौ[1] निक्षिप्य मुन्यधीनौ कृत्वा भर्त्रा श्रीरमेण विवासिता निर्यापिता सीता श्रीरामस्य चरणौ ध्यायन्ती विवरं, भुव इति शेषः। प्रविवेश ॥१५॥

तद्विवरप्रवेशमाकर्ण्य भगवान् श्रीरमस्तस्याः सीतायाः तांस्तान् गुणान् स्मरन् धिया शुचं शोकं रुन्धन्नपीश्वरोऽपि रोद्धुं नाशक्नोत् ॥१६॥

**विज०** बहुमुखादन्योन्यशिक्षानियतत्वेनानेकशब्देन प्रधानादत एव दुराराध्याद् दुःसाध्यात् कार्यनिष्पत्तिरहितादित्यर्थः। अत एवासंविदः अन्यसंवादशून्यात् अर्थादानरहिताद्वा लोकाच्छ्रुत्वा लोकापवादभीतेन रामेण त्यक्ता सा सीता, प्राचेतस प्रचेतसः वरुणस्यापत्यं वाल्मीकिः तस्याश्रमं प्राप्ता ॥९,१०॥

अन्तर्वत्नी गर्भिणी यमौ यमलौ क्रियाः क्षत्रयोग्याः जातकादिकाः ॥११-१४॥

मुनौ वाल्मीकौ विवरं भूबिलम् ॥१५,१६॥

---

1 W omits कुशलवौ

[1]स्त्रीपुंप्रसङ्ग एतावान् सर्वत्र त्रासमावहः ।
अपीश्वराणां किमुत ग्राम्यस्य [2]गृहचेतसः ॥१७॥

तत ऊर्ध्वं ब्रह्मचर्यं धारयन्नजुहोत् प्रभुः ।
त्रयोदशाब्दसाहस्रमग्निहोत्रमखण्डितम् ॥१८॥

स्मरतां हृदि विन्यस्य [3-]विद्धं दण्डककण्टकैः[-3] ।
स्वपादपल्लवं राम आत्मज्योतिरगात्ततः ॥१९॥

नेदं यशो रघुपतेः [4-]सुरयाच्ञयाऽऽत्तलीलातनोरधि[5]कसाम्यविमुक्तधाम्नः ।
रक्षोवधो जलधिबन्धनम[6]स्त्रपाणेः किं तस्य शत्रुहनने कपयः सहायाः ॥२०॥

यस्यामलं नृपसदस्सु [7]यशोऽधुनऽपि गायन्त्यघघ्नमृषयो दिगिभेन्द्र[8]पट्टम् ।
[9]तं नाकपालवसुपालकिरीट[10]जुष्टं पादाम्बुजं रघु[11]पतेश्शरणं प्रपद्ये ॥२१॥

स यैः स्पृष्टोऽभिदृष्टो वा [12]संविष्टोऽनुगतोऽपि वा ।
कोसलास्ते ययुः स्थानं यत्र गच्छन्ति योगिनः ॥२२॥

पुरुषो रामचरितं श्रवणैरुपधारयन् ।
आनृशंस्यपरो राजन् कर्मबन्धैर्विमुच्यते ॥२३॥

[13-]परीक्षिदुवाच[-13]

[14-]कथं स भगवान् रामो[14] [15-]भ्रातॄन् वा स्वयमात्मनः[-15] ।
[16-]तस्मिन् वा तेऽन्वर्तन्त[-16] [17]प्रजाः पौरास्तथेश्वरे[-17] ॥२४॥

**श्रीध०** **स्त्री** इति । न चातिचित्रमतेत् । स्त्रीपुंसोः प्रसंग आसक्तिः । त्रासमावहतीति तथा, विभक्तेरलुगार्षः । [18-]भयावह इति पाठान्तरं सुगमम्[-18] ।किमुतेति प्रासंगिकोक्तिः ॥१७॥

1 ABGJMMa ॰दृक् 2 MMa गृहमेधिन 3--3 MMa बुद्ध पद्ममिवाशुके 4--4 MMa ईह विश्वमूर्ते 5 MMa शान्त 6 ABGHJV पूगै 7 W यशोऽधनापि 8 MMa ॰पाते 9 W य 10 ABGJTW ॰जुष्ट 11 ABGJ ॰पतिं श॰ 12 MMa ॰त्तो 13 ABGJMMa राजोवाच 14--14 W रामो जानपदान् 15--15 H V भ्रातॄन् स्वान्स्वयमात्मन , MMa भ्रातृ बन्धुष्ववर्तत , W भ्रातृश्चाविशदात्मन । 16 MMa प्राजास्वौरसवद्राम 17--17 ABGJ प्रजा पौराश्च ईश्वरे , MMa कथ वा राम ईश्वर । 18- -18 ABJ omit

**तत** इति। अग्निहोत्रमजुहोत्[1] [2]जुहाव। प्रभु· राम·[2] ॥१८॥

**स्मरतामिति**। आत्मज्योतिर्निजं धाम ॥१९॥

**नेति**। जलधिबन्धनमस्त्रपूगैश्च रक्षसां वध इतीदं कविभिराश्चर्यमिव वर्णितमपि यशःस्तुतिर्न भवति। तत्र हेतु· अधिकसाम्याभ्यां विमुक्तं धाम प्रभावो यस्य तस्य, किं कपय· सहाया· अत· सुग्रीवाद्याश्रयणं यथा लीलामात्रं तथैवेदमपि। युक्तं चैतदित्याह। सुराणां याच्ञया आत्ता स्वीकृता लीलार्था तनुर्येन तस्य॥२०॥

एवंविधलीलाप्रयोजनं दर्शयन्प्रणमति यस्येति। यस्य यशो नृपाणां युधिष्ठिरादीनां सदस्सु ऋषयो मार्कण्डेयादयो गायन्ति। दिगिभेंद्राणां पट्टवदावरणरूपम्[3]। तत्पर्यंतं व्याप्तमित्यर्थ । नाकपाला देवा वसुपाला वसुधापालाश्च तेषां किरीटैर्जुष्टं पादाम्बुजं यस्य तं रघुपतिम्। [4]पाठान्तरे तत्तस्य रघुपतेः[4] नाकपालादिभिर्जुष्टं पादाम्बुजं प्रपद्य इत्यर्थः ॥२१॥

**स** इति। स रामः संविष्ट[5] उपविष्टोऽनुगतो यैस्ते कोसलेदशवासिनः सर्वेऽपि यत्र योगिनो गच्छन्ति तत्स्थानं ययु ॥२२॥

**पुरुष** इति। आनृशंस्यपर उपशमनिष्ठ·सन् विमुच्यते ॥२३॥

**कथमिति**। सः रामः स्वयं कथमवर्तत? भ्रातृन्प्रति वा कथमवर्तत? कथम्भूतान् आत्मनः आत्मांशभूतान्। तस्मिन्वा ईश्वरे ते भ्रात्रादयोऽनु अनन्तरं कथमवर्तन्त? इति प्रश्नत्रयम् ॥२४॥

**वीर०** न चातिचित्रमेतदित्याह- ईश्वराणामपि स्त्रीपुंसयो प्रसङ्ग· एतावान् एतादृक्। कीदृक्? सर्वत्रैवं भयावह·, भयशब्द शोकोपलक्षकः, ईश्वराणामपि भयावह· किमुत ग्राम्यस्य, गृह एव चेतो यस्य तस्य ॥१७॥

तत उर्ध्वं विवरप्रवेशश्रवणानन्तरं ब्रह्मचर्यं धारयन् स्त्र्यन्तरपरिग्रहं वर्जयन् प्रभुः श्रीराम त्रयोदशाब्दानां सहस्राणि अग्निहोत्रमविच्छिन्नं यथा तथा अजुहोत् जुहाव। ननु, श्रीरामायणे "दशवर्षसहस्राणि दशवर्षशतनि च। रामो राज्यमुपासित्वा" (राम°1-1-97) इत्येकादशवर्षसहस्राणि श्रीरामावतारावस्थानमुक्तम्, अत्र तु त्रयोदशाब्दसाहस्रमिति तेन विरोध·, मैवं, तत्र हि दशवर्षसहस्राणि इत्यनेन तावन्तं कालं सीतया सहावस्थितिरुच्यते, दशवर्षशतानीत्यनेन तु तावन्तं कालं तया विनाऽवस्थानमुच्यते अत एव हि कोटिद्वयोक्ति·। सीतया विना रामस्य एकैकवर्षशतस्य वर्षसहस्रतुल्यताख्यापनाय सहस्रमिति नोक्तम्[6]। एवं स्थिते च तत्र दशग्रहणं त्रिगुणितानां दशानामुपलक्षणमित्यभिप्रेत्य कात्स्र्न्येनावतारसहचरितकालोऽत्र गणितः ॥१८॥

---

1 ABJ omit जुहाव 2--2 H V omit 3 ABJ °भ° 4--4 H V omit 5 ABJ उपवेशितो° 6 AB चोक्तम्

ततो वनवासदशायां दण्डकारण्यस्थकण्टकैर्विद्धं स्वपादपल्लवं स्मरतां जनानां हृदि विन्यस्य निधाय स्मर्त्तव्यं कृत्वेत्यर्थः। श्रीराम· आत्मज्योतिः स्वयंप्रकाशं ज्योतिर्मयं स्थानं परमपदाख्यमगात् ॥१९॥

अस्त्रपाणेः कोदण्डपाणे रघुपतेः श्रीरामस्य रक्षोवधो जलधिबन्धनश्चेतीदं यशः स्तुतिर्न भवति, तत्र हेतुः अधिकसाम्याभ्यां विमुक्तं धाम प्रभावो यस्य निस्समाभ्यधिकप्रभावस्येत्यर्थ.। तस्य किं कपयो वानरा· सहायाः अत· सुग्रीवाद्याश्रयणं यथा लीलामात्रं तदेदमपि युक्तं चैतदित्यभिप्रयेण विशिनष्टि, सुराणां याच्ञया आत्ता उपात्ता लीलार्था तनुर्येन तस्य ॥२०॥

एवंविधलीलाप्रयोजनं दर्शयन् शरणं व्रजति-यस्य अमलमघघ्नं पापहरं, पादाम्बुजमाहात्म्यमिति विशेष्यमध्याहार्यम्। नृपाणां युधिष्ठिरादीनां सदस्सु यश एव धनं येषां ते तथाभूता। अपि ऋषयो मार्कण्डेयादय· यशोधनापीति सन्धिशर्षः। गायन्ति यन्माहात्म्य दिगिभेन्द्राणां पट्टवदाभरणरूपं तत्पर्यन्तं व्याप्तमित्यर्थ । नाकपाला देवाः वसुपाला· वसुधापालका· वैश्रवणादयो वा, तेषां कीरीटैर्जुष्टं पादाम्बुजं यस्य तं रघुपतिं शरणं प्रपद्ये। पाठान्तरे तत्तस्य रघुपतेः जुष्टं पादाम्बुजं शरणं प्रपद्ये इत्यर्थः ॥२१॥

यैर्जनै श्रीराम· संस्पृष्ट· सन्दृष्ट· संविष्टः उपसेवित·। संवीत इति पाठेऽपि स एवार्थ., अनुगतो वा। ते सर्वे कोसलदेशवसिन· यत्र यत्स्थानं योगिनो गच्छन्ति तत्स्थानं ययु. मुक्ता बभूवुरित्यर्थ ॥२२॥

श्रीरामचरित्रश्रवणफलमाह - **पुरुष** इति। हे राजन्! आनृशंस्यपर· उपशमनिष्ठ पुरुषो रामचरितं श्रवणैरुपधारयन् श्रोत्रेन्द्रियवृत्तिभि परिचिन्वन् कर्मबन्धै[1]· पुण्यापुण्यात्माककर्मरूपबन्धैः संसृतिहेतुभि· प्रमुच्यते मुक्तो भवति ॥२३॥

यद्यपि "अग्रहीदासनं भ्रात्रा प्रणिगत्य प्रसादितः"(भागः9-10-51) इत्यनेन भ्रातृणां रामस्य च परस्परच्छन्दानुवर्त्तनम् एकपत्नीव्रतधर इत्यादिना राज्यपरिपालनदशायां तस्यावस्थान प्रकारश्चेत्यादिकं सर्वमुक्तमेव। तथापि तदेव पुनर्विस्तरेण बुभुत्सुः पृच्छति राजा - कथमिति? स रामः कथं अवर्ततेति शेषः। आत्मनः भ्रातृन् जानपदान् देशवासिनो जनांश्च[2] कथमादिशत्? भ्रतृन् जानपदांश्च कथमन्ववर्ततेत्यर्थ· ते जनाः भ्रातरश्च। पौराः प्रजाश्च तस्मिन्नीश्वरे श्रीरामविषये कथमन्वर्तन्त? इति त्रयः प्रश्ना. ॥२४॥

**विज०** अपिपदेन लोकशिक्षार्थं सम्भावित एव न त्वनुभूत इत्याह - **तत** इति। अस्या भूमेर्निदेशानन्तरं अखण्डितं अग्निहोत्रमजुहोत् पूर्वं क्वचित् खण्डितमित्यर्थो नैव किन्तु तत· पूर्वं च ब्रह्मचर्यं धारयन्नित्यस्याप्यूर्ध्वरेतस्त्वं नार्थः। किन्तु ब्रह्मणा लक्ष्म्या सीतया सहचर्यं चरणवर्तनं धारयन् कुर्वन्नेव "मम योनिर्महद्ब्रह्म" (भ.गी.14-3) इति वचनात् अन्यथा त्रयोदशसहस्रमित्युक्तिरसंगता स्यात् सर्वात्मना राज्यकरणस्य तावत्त्वात्तस्मात्क्षितिमण्डलं त्रयो दशसहस्रशब्दं ब्रह्मलोकसमं कृत्वा-"नक्षत्रमासगणितं त्रयोदशसहस्रकम्। ब्रह्मलोकसमं चक्रे समस्तं क्षितिमण्डलम्"॥ (स्कान्दे) इति वचनाच्चेत्यर्थः।

---

1 AB बन्धनै 2 AB जनाश्च

ऊर्ध्वोधःशब्दयोश्च वैयर्थ्याच्च ॥१७-१८॥

ततोऽयोध्याया अगाद्वैकुण्ठमिति शेषः। अंशुकैः सूर्यकिरणै· बुद्धं विकसितं पद्ममिव शोभमानं स्वपादपल्लवं स्मरतां पुंसां हृदि विन्यस्य निधिवन्निधाय आत्मज्योतिः स्वभावप्रकाश· ॥१९॥

रघुपतेरिदं यशो वक्ष्यमाणलक्षणं न किं तन्निषेध्यमिति तत्राह - रक्ष इति। राक्षसवधो य· यच्च जलधिबन्धनं इदमिति, रघुपतिः कोऽसाविति तत्राह - विश्वेति। किम्प्रयोजनमुद्दिश्य रधुपतिनामरूपग्रहण मित्याशङ्क्य न किमपि प्रयोजनमुद्दिश्येत्याशयेनाह लीलेति। शरीरग्रहणेन किमपि दु खादिकमस्यास्तीत्याशयेनाह - अधिकेति। सर्वस्मादधिकं शान्तमानन्दपूर्णं नित्यमुक्तं धाम स्वरूपं यस्य स तथा तस्य यत एवंविधमाहात्म्यो रघुपतिरतोऽस्त्रपाणेर्धनुष्पाणेस्तस्य कपयः शत्रुहनने सहायाः बलभूताः किं नेत्यर्थ ॥२०॥

न केवलं नृपसभासु गायन्ति अपि तु दिगिभेन्द्रपाते दिग्गजानां पात सञ्चारो यस्मिन् लोकालोकप्रदेशेऽपीत्यनेन सर्वत्रेत्याह, नाकपाला इन्द्रादय , वसुपाला कुबेरादय ॥२१॥

यैः स्पृष्टः नमनादिना, दृष्टो वा चक्षुरादिना, श्रुतो वा श्रोत्रादिना, संवित्तः सम्यक् ज्ञातो वा अनुगतो पृष्ठतो यातो वा कोसला· अयोध्यावासिन इत्युपलक्षणं सर्वेऽपीति ग्राह्यं यत्र योगिनो भक्ति· ज्ञानयोगवन्तो गच्छन्ति तत्स्थानं ययुरित्यन्वय ॥२२॥

पुरुषमात्रस्य श्रुतिमात्रेणापि रामनाम्न कर्मबन्धमोक्ष स्यादित्याशयेनाह - **पुरुष** इति। आनृशंस्यपरो हिंसाकर्मपरोऽपि। अनेन "रामो रामो राम इति सर्वेषामभवत्तदा। सर्वो राममयो लोको यदा रामस्त्वपालयत्॥" (स्कान्दे) इति वाक्यमसूचि ॥२३॥

तत्रैवं राजा पृच्छति - **कथमिति**। स भगवान् भ्रात्रादिषु कथं केन योगेन रामो रमयितृत्वेनावर्तत? औरसवद्यथौरस· स्वदेहोत्पन्नः पुत्र· पित्रादौ कलभाषणादिना रतिप्रदत्वेन जिह्वासुखनाममयत्वेन प्रवर्तते, तथाऽयमपि केन प्रकारेण रामो रतिप्रद· प्रजास्ववर्तत? किञ्च रामो बालवत्क्रीडावान्, कथं केन भावेनेश्वरोऽयमिति सर्वजनबुद्धाववर्तत? इतीदं प्रश्नत्रयं परिहर्तव्यमिति शेषेणान्वय· ॥२४॥

**श्रीशुक उवाच**

**अथादिशद् दिग्विजये [1]भ्रातॄंस्त्रिभुवनेश्वरः[1]।**
**आत्मानं दर्शयन् स्वानां पुरीमैक्षत सानुगः ॥२५॥**

---

1--1 MMa भ्रातृश्च त्रिदशेश्वर ।

**आसिक्तमार्गां गन्धोदैः करिणां मदशीकरैः ।**
**स्वामिनं प्राप्तमालोक्य [1] मत्तां वा सुतरामिव ॥२६॥**

**प्रासादगोपुरसभाचैत्यदेवगृहादिषु ।**
**विन्यस्तहेमकलशैः पताकाभिश्च मण्डिताम् ॥२७॥**

**पूगैः [2] सवृन्तैरम्भाभिः [3] पट्टिकाभिः सुवाससाम् ।**
**आदर्शैरंशुकैः स्रग्भिः कृतकौतुकतोरणाम् ॥२८॥**

**तमुपेयुस्तत्र तत्र पौरा अर्हणपाणयः ।**
**आशिषो युयुजुर्देव पाहीमां प्राक् त्वयोद्धृताम् ॥२९॥**

**[4] ततः प्रजा वीक्ष्य पतिं चिरागतं [5] दिदृक्षयोत्सृष्ट[6]गृहाः स्त्रियो [7] नराः ।**
**आरुह्य हर्म्याण्यरविन्द[8]लोचनं ह्यतृप्तनेत्राः कुसुमैरवाकिरन् ॥३०॥**

**अथ प्रविष्टः स्वगृहं जुष्टं स्वैः पूर्वराजभिः ।**
**[9] अनन्ताखिलकोशाढ्यम[10]नर्घ्योरुपरिच्छदम् ॥३१॥**

**विद्रुमोदुम्बरद्वारैर्वैदूर्यस्तम्भपङ्क्तिभिः ।**
**स्थलै[12]र्मार[13]कतैः स्वच्छैः क्षान्तस्फाटिकभित्तिभिः ॥३२॥**

**श्रीध०** तत्र श्रीरामस्य भ्रात्रादिषु [15] वृत्तिप्रकारमाह **अथेति**। अनेनैव भ्रातृणामपि तदाज्ञानुसारितया [16] वृत्तिरुक्ता। अथ, सिंहासनस्वीकारानन्तरम् ॥२५॥

पुरीं वर्णयति **आसिक्तेति**। त्रिभिः। गंधोदकै[17]र्मदबिन्दुभिश्चासिक्ता मार्गा यस्याम्। सुतरां मत्तामिव [18-] मदसमृद्धामिव [-18]। इति वितर्के। [19] गामिति [20-] सुतरां [-20] कामोन्मत्तां गामिवेत्यर्थ· ॥२६-२८॥

पौराणां तस्मिन्वृत्तिमाह - **तमुपेयुरिति**। वराहरूपेण त्वयोद्धृतामिमां पृथ्वीं पाहीति ॥२९॥

प्रजानां तस्मिन्वृत्तिमाह - **ततः प्रजा इति** ॥३०॥

---

1 W मत्ताना सु° 2 B सवृन्दैर° , W सवृतर°, 3 MMa पालिकाभिसु° , W पट्टिकाभिश्च वा° 4 MMa तता 5 H V क्षयोत्सृज्य MMa क्षवोत्सृज्य 6 H V °हान् स्त्रि° 7 H V वरा 8 ABGJ °चनमतृ° , MMa °चनं न तृ° 9 MMa °न्तागृह° 10 W नर्घोरु° 11 H V °द्व° 12 H.MMa V र्मे 13 H V °कतस्व° 14 AGJ भान्तस्फटिक° , B.MMa भ्राजत्स्फटिक 15 ABJ प्रवृ° 16 ABJ प्रवृ° 17. H V °दै 18--18 ABJ समृद्धाम् 19 ABJ omit गामिति 20-20 ABJ वासितगा वासिता

स्वयं कथमवर्ततेत्यस्योत्तरमाह। [1-]अथेति यावदध्यायपरिसमाप्ति[-1]। स्वगृहं प्रविष्टः सन् तस्मिन् रेमे इति पञ्चमेनान्वयः। गृहं वर्णयति सार्द्धैस्त्रिभिः। अनन्ता येऽखिलानां रत्नादीनां कोशास्तैराढ्यम्। अनर्घ्या उरव परिच्छदा यस्मिन् ॥३१॥

विद्रुमेति। विद्रुममया उदुम्बरा देहल्यो येषु तैर्द्वारैः। [2]मरकतस्वच्छै स्थलैः। तृतीयान्तानां मण्डितामिति तृतीयेनान्वयः ॥३२॥

वीर० तत्र श्रीरामस्य भ्रात्रादिषु वृत्तिप्रकारमाह - अथेति। अथ सिंहासनोपवेशनानन्तरं त्रिभुवनेश्वरः श्रीरामो दिग्वन दिक्पालने निमित्ते भ्रातॄनादिशत् अनेनैव भ्रातृणामपि तदाज्ञानुवृत्तिरुक्ता, ततः स्वानां कौसल्यादीनां आत्मानं दर्शयन् सानुगः पुरीमयोध्यामैक्षत ॥२५॥

पौराणां तस्मिन् अनुवृत्तिं ख्यापयितुं तैरलङ्कृतां पुरीं वर्णयति, आसिक्तमार्गामिति त्रिभिः। गन्धोदैः चन्दनोदकादिभिः स्वामिनं प्राप्तं प्राप्तराज्यमालोक्य सुतरां मत्तानामिव स्थितानां करिणां मदोदकशीकरैश्चासिक्ताः मार्गा, यस्याम्। मत्ता वेति पाठान्तरम्। तत्र सुतरां मत्तामिवेति पुरीविशेषणम्। वाशब्दो वितर्के ॥२६॥

प्रासादादिषु विन्यस्तैः स्वर्णकुम्भैः पताकाभिश्च मण्डिताम् ॥२७॥

पूगैस्संवृताः या रम्भाः कदल्यः ताभिः, नित्यसापेक्षत्वात् संवृतशब्दस्य समासः। यद्वा, पूगैश्च पत्रफलपुष्पादि संवृताभिः रंभाभिश्च वाससां पट्टिकाभिश्च मण्डितामिति पूर्वेणान्वयः। [3-]आदर्शैर्दर्पणैरंशुकैः, स्रग्भिश्च कृतानि कौतुकानि मङ्गलार्थानि तोरणानि[-3] यस्यां तां पुरीमैक्षतेत्यन्वयः ॥२८॥

पैराणां तस्मिन् वृत्तिमाह - तत [4]अर्हणानि पूजासाधनानि पाणिषु येषां तै , पौरास्तत्र तत्र तं श्रीराममुपकुरुपजग्मुः। देव! प्राक् वराहावतारे त्वयोद्धृतां पृथिवीं पाहीति प्रार्थयमानाः आशिषो युयुजुः प्रयुक्तवन्तः ॥२९॥

तस्मिन् प्रजानामनुवृत्तिमाह - तमिति। चिरादागतं [5]तं पतिं श्रीरामं वीक्ष्याऽऽकर्ण्य स्त्रियो नराश्च प्रजाः दिदृक्षया उत्सृष्टा गृहा याभिस्ताः, हर्म्याण्यारुह्य अतृप्तानि नेत्राणि यासां ताः, अरविन्दलोचनं श्रीरामं कुसुमैरवाकिरन्। यद्वा, चिरागतं पतिं द्रष्टुमिच्छया उत्सृष्टगृहाः स्त्रियो नराश्च प्रजा हर्म्याण्यारुह्य वीक्ष्यातृप्तनेत्राः कुसुमैरवाकिरन् इत्यन्वयः ॥३०॥

स्वयं कथमवर्ततेत्यस्योत्तरमाह - अथेति, यावदध्यायसमाप्ति। स्वगृहं प्रविष्टः तस्मिन् भगवान् स्वारामधीराणाम् - त्मारामुनिजनश्रेष्ठानामृषभः [6]अभिनायकः रामः प्रिया चेष्टा यस्यास्तया स्निग्धया निरतिशयानुरागवत्या सीतया सह रेमे इति पञ्चमेनान्वयः। गृहं वर्णयति - पूर्वराजभिरिक्ष्वाकुप्रभृतिभिर्जुष्टं सेवितं प्रीतिविषयीकृतं वा। अनन्ता निरवधिका ये अखि

1- -1 ABJ यावत्समाप्ति 2 ABJ omit मरकत 3- -3 TW omit 4 A.B Add च 5 A.B omit तं 6 A B add अभि

रत्नादीना कोशास्तैराढ्यं समृद्धम् अनर्घा उरवः परिच्छदा यस्मिन्, विद्रुममया उदुम्बरा देहल्यो येषु तैर्द्वारै., तृतीयान्तानां मण्डितामिति तृतीयेनान्वयः। वैदूर्यमणिमयस्तम्भानां पंक्तिभि स्वच्छैरिन्द्रनीलमणिमयै स्थलै प्रदेशै दान्ताः घर्षणेन निर्मलीकृताः स्फटिका. तन्मयीभिर्भित्तिभि ॥३१-३२॥

**विज०** प्रथमतृतीयप्रश्नौ परिहरति - **अथेति**। अथ राज्याभिषेकानन्तरं भ्रात्रादौ स्वाज्ञाकारित्वेनावर्तत त्रिदशेश्वर इत्यनेन मानवेश्वरत्वं किं वक्तव्यमित्यसूचि। तेन लोकानुकरणायेयं क्रीडेति कथितमित्यर्थ·। द्वितीयं परिहरति - आत्मानमिति। स्वात्मसन्दर्शनेन जनस्यामन्दजनकत्वेन राम इति बुद्धिं जनयामासेत्यर्थ·। पुरीनिरीक्षणं च स्वभक्तानुकम्पित्वप्रदर्शनाय ॥२५॥

गन्धोदै. चन्दनादिगन्धद्रव्यमिश्रजलै· लङ्काया नाथं रावणं निहत्य प्राप्तं स्वामिनमालोक्य सुतरां हर्षेण मत्तामिव करिणीं मदशीकरै मदजलबिन्दुभिर्वा मत्तामिव स्थिताम् ॥२६॥

चैत्यं पाषाणादिभिर्बद्धं वृक्षमूलस्थल बद्धशालास्थलं वा ॥२७॥

संवृतैः फलस्तबकसहितै पूगै क्रमुकै· रम्भाभिः कदलीस्तम्भै· आदर्शैः दर्पणैरंशुकैर्वस्त्रैः स्रग्भि मालाभिश्च कृतकौतुकानि रचितमङ्गलानि च तोरणानि यस्यां सा तथा ताम् ॥२८॥

प्राक् वराहाऽवतारे त्वया पातालादुद्धृतां, भुवमिति शेषः ॥२९-३१॥

वैद्रुमैरुदुम्बरैस्ताम्रै कृतद्वारै "ताम्रं शुल्वं मर्कटाख्यं रक्तं कांस्यमुदुम्बरम्" इति ॥३२॥

**चित्रस्रग्भिः[1] पताकाभिर्वासोमणिगणांशुभिः[2]।**
**मुक्ताफलैश्चिदुल्लासैः कान्तकामोपपत्तिभिः[3] ॥३३॥**
**धूपैर्दीपैः[4] सुरभिभिर्मण्डितं[5] पुष्पमण्डनैः[6]।**
**स्त्रीपुम्भिः सुरसंकाशैर्जुष्टं भूषणभूषणैः[7] ॥३४॥**
**तस्मिन् स भगवान् रामः स्निग्धया प्रियचेष्टया[8]।**
**रेमे[9] स्वारामधीराणामृषभः[10] सीतया किल[11] ॥३५॥**
**बुभुजे च यथाकालं कामान्[12] धर्ममपीडयन्।**
**वर्षपूगान् बहून् नृणामभिध्याता[13]ङ्घ्रिपल्लवः ॥३६॥**

---

1 ABGJMMa पट्टि° 2 ABGJTW °कै 3 MMa कान्त 4 ABGJMMa धूपदीपै 5 MMa °तै 6 MMa °ण्डकै 7 W भूर्षितै 8 ABGJ °ययेष्टया , MMa °ययेच्छया। 9 H V रेमेऽभिरा० 10 MMa चा° 11 MMa सह 12 MMa °काम काम ध° 13 MMa °ध्येया°

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहिताया
नवमस्कन्धे एकादशोऽध्याय ॥११॥

**श्रीध०** चित्रेति। वाससां मणिगणानां चांशुभिः[1]दीप्तिभि.। चित् चैतन्यं तदुदुल्लासैरुज्ज्वलैः। यद्वा चिदिति क्वचित् वैदूर्य[2]स्तम्भादिषु यथाशोभमुज्ज्वलैर्मुक्ताफलैर्मण्डितमित्यर्थ.। कान्ता कमनीया। कामोपपत्तयो भोगसाधनानि ताभिः ॥३३॥

**धूपैरिति**। [3]धूपैर्दीपै सुरभिभिर्मण्डितं पुष्पमण्डनै। स्त्रीपुम्भि सुरसंकाशैर्जुष्टं[-3] [4]भूषणभूषणै[-4]:[5]भूषणानां भूषणभूतैः[-5] ३४,३५॥

[6]**बुभुजे** इति। नृणां मध्ये यद्वा नृणां[-6] नृभिः अभिध्यातं अङ्घ्रिपल्लवं यस्य इति ॥३६॥

**वीर०** चित्राभिः स्रग्भि पताकाभिश्च वाससां मणिगणानामंशुकै पङ्क्तिभि, चिच्चैतन्यं तदुदुल्लासैरुज्ज्वलै मुक्ताफलै। यद्वा, चिदिति पृथक्पदमव्ययम्। क्वचिद्वैदूर्यस्तम्भादिषु यथाशोभमुज्ज्वलैर्मुक्ताफलैर्मण्डितमित्यर्थ। कान्ताः कमनीयाः कामोपपत्तयो भोगसाधनानि ताभि सुरभिभिर्धूपैर्दीपैश्च मण्डितं, पुष्पाणि मण्डनमलङ्कारो येषां भूषणैर्भूषितास्तैः, सुरसंकाशैः [illegible]तुल्यैः स्त्रीपुम्भिः। समासान्ताभावस्तस्यानित्यत्वात् आर्षत्वाद्वा। जुष्टं सेवितं कामान् यथाकालमुचितकालमनतिक्रम्य बहून् वर्षगणान् बुभुजे। कथम्भूतस्सन्? स्वधर्मं वर्णाश्रमोचितमपीडयन् अनुपरुन्धन् अत्यजन्नित्यर्थ। नृणामिति शेषे षष्ठी, नृभिरभिध्यातमङ्घ्रिपल्लवं यस्य तथाभूतस्सन् ॥३३-३६॥

इति श्रीमद्भागवते नवमस्कन्धे
श्रीश्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां एकादशोऽध्याय ॥११॥

**विज०** कान्तं शोभितं पट्टिकाभिर्वितानैः ॥३३॥

भूषणानामपि भूषणै· ॥३४॥

**स्वारामाः** शोभनोद्यानानि तत्र चारो येषां ते स्वारामचारास्तेषामृषभ. निरन्तरं चारुतरोद्यानेषु सञ्चरताम् ईश्वर इत्यनेन [illegible]त सौख्यं सूचयति - अनेनापि सीतावियोगो नास्तीत्युक्तं भवति। किञ्च, सीतया नित्यरमणात्स्वयं सुखरुपत्वात्प्रजानां सुखहेतु - त्सर्वजनचित्तविलयत्वेन राम इति भाव ॥३५,३६॥

इति श्रीमद्भागवते महापुराणे पारमहस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
नवमस्कन्धे एकादशोऽध्याय ॥११॥

---

1 ABJ 'शुकै. 2 HV 'दू' 3-3 HV omit 4-4 BHV omit 5-5 A omits 6-6 A omits

# द्वादशोऽध्यायः

## श्रीशुक उवाच

कुशस्य चातिथिस्तस्मान्निषधस्तत्सुतो नभः ।
पुण्डरीकोऽथ तत्पुत्रः क्षेमधन्वाऽभवत्ततः ॥१॥

देवानीकस्[1]ततोऽहीनः पारि[2]यात्रोऽथ तत्सुतः ।
ततो बल[3]च्छलस्तस्माद् वज्रनाभोऽर्कसंभवः ॥२॥

[4]खगणस्तत्सुतस्तस्माद् वि[5]धृतिश्चाभवत् सुतः ।
ततो हिरण्यनाभोऽभूद् योगाचार्यस्तु जैमिनेः ॥३॥

[6]शिष्यः कौसल्य आध्यात्मं याज्ञवल्क्योऽध्यगाद् यतः ।
योगं महोदयमृषिर्हृदय[7]ग्रन्थिभेदनम् ॥४॥

पुष्यो हिरण्यनाभस्य ध्रुवसन्धिस्ततोऽभवत् ।
सुदर्शनोऽथाग्निवर्णः शीघ्रस्तस्य [8]मरुत्सुतः ॥५॥

योऽसावास्ते योगसिद्धः कलापग्रा[9]ममाश्रितः ।
कलेरन्ते सूर्यवंशं नष्टं भावयिता पुनः ॥६॥

[10-]तस्मात् प्रसु[-10]श्रुतस्तस्य सन्धिस्तस्या[11]पिमर्षणः ।
[12]महस्वांस्तत्सुतस्तस्माद् विश्वसा[13]ह्वोऽन्वजायत ॥७॥

ततः प्रसेनजित् तस्मात् तक्षको भविता पुनः ।
ततो बृहद्बलो यस्तु पित्रा ते समरे हतः ॥८॥

### श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

द्वादशे रामपुत्रस्य कुशस्यान्वय उच्यते। एवमिक्ष्वाकुपुत्रस्य शशादस्येरितोऽन्वयः ॥

---

1 ABGJ तोऽनीह 2 MMa पात्रश्च 3 ABGJMMa °स्थल 4 H V शङ्खण , MMa स्वगण 5 MMa °धृत° 6 MMa °ष्यस्सकलमध्या° 7 ABGJ °कम् 8 ABGHJV मरु सुत । 9 MMa °मास्थित 10- -10 H V °त् पशु श्रुकत्तस्य , MMa °त्तु सुश्रुतत्तस्य , T W °त् प्रंशुस्नुतत्तस्य 11 ABGHJV °प्य° 12 TW सुमहास्त° 13 ABGJ °साह्वोऽन्व , MMa °साह्वोव्य°

* यद्वा- आरभ्योक्त्वा कुशं भूपान् ऐक्ष्वाकान्नवमी गतान्।
भविष्यतस्सुमित्रान्तान् बृहद्बलमुखान्वदत्॥

**कुशस्येति**। कुशस्य रामपुत्रस्यातिथिः सुतोऽभवत् ॥१॥

**देवानीक इति**। अर्कसंभवोऽर्कस्यांशात्संभूतः ॥२॥

**खगण इति**। [1-] ततो विधृतेर्हिरण्यनाभः। कथंभूतः। [-1] जैमिनेः शिष्यो योगाचार्यः [2-] तदाह हिरण्यनाभस्य योगाचार्यत्वम् [2] ॥३॥

**शिष्यइति**। यतः सकाशात् कौशल्यो याज्ञवल्क्यऋषिराध्यात्मं योगमध्यगात् महान्त उदयाः यस्मिंस्तम् हृदयग्रन्थेर्भेदनश्च [3] ॥४-५॥

मरुं विशिनष्टि। **योऽसाविति**। पुनर्भावयिता भावयिष्यति ॥६-७॥

**तत इति**। ते [4] प्रित्राऽभिमन्युना ॥८॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

कुशस्य श्रीरामसुतस्यातिथिः सुतोऽभवत्तस्मादतिथेः निषधाख्यः तत्सुतः निषधसुतः नभः, अथ नभात्पुण्डरीकः, तत्पुत्रः पुण्डरीकपुत्रः क्षेमधन्वा ॥१॥

ततः क्षेमधन्वनः देवानीकोऽभवत् ततो देवानीकात् हीनः, अथ तत्सुतो हीनसुतः पारियात्रः ततः परियात्राद् बलस्तस्माद्बलाच्चलः [5] तस्मात् चलात् [6] वज्रनाभः स चार्कस्यांशात्सम्भूतः ॥२॥

तत्सुतो वज्रनाभसुतः खगणः तस्मात्खगणाद्विधृतिः सुतोऽभवत् ततो विधृतेर्हिरण्यनाभः समभवत्। स च योगाचार्यस्य जैमिनेः शिष्यः ॥३॥

यतो हिरण्यनाभादध्यात्मशास्त्रं कौसल्यो याज्ञवल्क्य ऋषिरधिगतवान् अध्यात्मं विशिनष्टि, योगं योगाख्यं महोदयं महानुदयोऽभ्युदयो यस्मात्, हृदयग्रन्थिमज्ञानं भिनत्तीति तथाभूतम् ॥४॥

हिरण्यनाभस्य पुष्यः सुतः ततः पुष्यात् ध्रुवसन्धिरभवत् अथ ध्रुवसन्धेः सुदर्शनस्तस्मादग्निवर्णस्तस्य सुतः शीघ्रः तस्यापि सुतो मरुत् ॥५॥

* मरुतं विशिनष्टि - योऽसाविति। योऽसौ मरुत् योगेन सिद्धः जितकायः कलापग्रामाख्यं ग्राममाश्रितोऽधुनाप्यास्ते

* This Verse is found in H V edns only 1--1 H V omit 2--2 ABJ omit 3 ABJ कन्थु 4. ABJ omit ते 5 AB स्थल 6 AB omit चलात्

किमर्थमित्यत्राह कलेर्युगस्यान्तेऽवसाने नष्टं सूर्यवंशं पुनर्भावयितो भावयिष्यति पुत्रपौत्रादिपरम्परया प्रवर्त्तयिष्यति, तदर्थं तत्रास्ते इति भावः ॥६॥

तस्मान्मरुत· प्रस्नुः, तस्य सुतस्सन्धि·, तस्यापि मर्षणस्सुत·, तत्सुतो मर्षणसुतः सुमहान्, तस्मात् सुमहतो विश्वसाह्यो जज्ञे ॥७॥

ततो वि[3]श्वसाह्यात् बृहद्बल· जज्ञे इत्यनुषङ्गः, तं विशिनष्टि, यस्तु बृहद्बलः समरे सङ्ग्रामे ते पित्रा हतः ॥८॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

अथ श्रीरामपुत्रस्य कुशस्य सन्ततिमनुक्रामति - कुशस्य चेति। चशब्दः सन्ततेरविच्छेदं सूचयति ॥१-३॥

अध्यात्मं परमात्मविषयं महानुदयो मोक्षलक्षणो यस्मात्स तथा। एतदेव विशिनष्टि - हृदयेति। ऋषिर्ज्ञानी ॥४॥

तस्याग्निवर्णस्य शीघ्रनामा सुत , मरुन्नामा सुतो यस्य स मरुत्सुत·, तस्य शीघ्रस्य मरुत्सुतोऽभूदिति वा ॥५-६॥

तस्मात् मरुत्त ॥७॥

समरे ते तव पित्रा अभिमन्युना हत ॥८॥

**एते हीक्ष्वाकुभूपाला अतीताः शृण्वनागतान्।**
**बृहद्बलस्य भविता पुत्रो [4]नामा बृहद्रणः ॥९॥**
**[5]उरुक्षतस्ततस्तस्य [6]वत्सप्रीतो भविष्यति।**
**प्रतिव्योमस्ततो [7]भानुःदिवाको वाहिनी पतिः ॥१०॥**
**सहदेवस्ततो [8]वीरो बृहदशोऽथ भानुमान्।**
**प्रतीकाश्वो भानुमतः [9]सुप्रतीकस्तु तत्सुतः ॥११॥**
**भविता [10]मेरुदेवोऽथ [11]सुनक्षत्रोऽथ [12]ऋक्षकः**
**तस्यान्तरिक्षस्तत्पुत्रः [13]सुतपास्तदमित्रजित् ॥१२॥**

1 AB omit मर्षणसुत 2 A साह्रो 3 A °ह्वं° 4 ABGJ °म 5 ABGJ क्रियस्तत , MMa क्षयस्सुत° 6 ABGJ °वृद्धो 7 HV देवौका , MMa दिवाकर्को , TW देवाको 8 MMa भावी 9 ABGJMMa कैऽथ। 10 ABGJMMa म° 11 HV हतक्षत्रो° , TW सुरक्षत्रो° 12 ABGJ पुष्कर ° , MMa रुक्षक । 13 W सुतप°

**बृहद्राजिस्तु[1] तस्यापि बर्हिस्तस्मात्[2] धनञ्जयः।**
**रणञ्जयस्तस्य सुतः सृञ्जयो[3] भविता ततः ॥१३॥**

**तस्माच्छाक्योऽथ शुद्धोदो लाङ्गलस्तत्सुतः स्मृतः।**
**ततः प्रसेनजित् तस्मात् क्षुद्रको भविता ततः ॥१४॥**

**[4]कुणको भविता तस्मात् सुरथस्तनयस्ततः।**
**सुमित्रो नाम निष्ठान्त[5] स्त्वेते[6] बार्हद्बलान्नृपाः ॥१५॥**

**इक्ष्वाकूणामयं वंशः सुमित्रान्तो भविष्यति।**
**यतस्तं प्राप्य राजानं संस्थां प्राप्स्यति वै कलौ ॥१६॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्या अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्या संहितायां
नवमस्कन्धे द्वादशोऽध्याय ॥१२॥

**श्रीध० भवितेति**। तत्तस्मादमित्रजित् ॥९-१४॥

**कुणको** इति। निष्ठा वंशस्य स्थितिस्तस्या अन्त ॥१५॥

तदेवाह - **इक्ष्वाकूणामिति** ॥१६॥

इति श्रीमद्भागवते महापुराणे
श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकाया
व्यख्यायां नवमस्कन्धे द्वादशोऽध्याय ॥१२॥

**वीर०** एते कथिताः इक्ष्वाकुवंशजा भूपाला अतीता अतिक्रान्ता, अथानागतान् भाविन इक्ष्वाकुभूपालान् मया कथयिष्यमाणान् शृणु, बृहद्बलस्य सुतो नाम्ना बृहद्रण इति प्रसिद्धस्तस्य बृहद्रणस्य उरुक्षतस्तस्य उरुक्षतस्य वत्सप्रीत सुतो भविष्यति, ततो वत्सप्रीतात् प्रतिव्योम· तत प्रतिव्योमात् भानुः, तस्माद्देवाक·, स च वाहिन्या सेनाया पति ॥९-१०॥

ततो देवाकात्सहदेवः, ततः बृहदश्वः, स च वीर·, अथ बृहदश्वात् भानुमान्, भानुमत· प्रतीकाश्व, तत्सुत प्रतीकाश्वसुत· सुप्रतीकः ॥११॥

---

1 ABGJ द्राज°, MMa भोज° 2 ABGJMMa कृतञ्जय 3 ABGJMMa सञ्ज° 4 ABGJ रणको, HV ऋणको 5 ABGJ °न्त एते 6 ABGJ न्वया

9-12-9-16


अथ सुप्रतीकान्मरुदेवः सुतो भविता, तस्मात्सुरक्षत्रः, तस्मात् ऋक्षकः तस्य ऋक्षकस्यान्तरिक्षः तत्पुत्रोऽन्तरिक्षपुत्रः सुतपाः ततस्तस्मात्सुतपसोऽमित्रजित् भविता ॥१२॥

तस्यामित्रजितो बृहद्राजः तस्माद्बृहद्राजाद् बर्हिः तस्माद्बर्हिषो धनञ्जयः तस्य धनञ्जयस्य सुतो रणञ्जयस्ततो रणञ्जयात् सृञ्जयस्सुतो भविता ॥१३॥

तस्मात्सृञ्जयाच्छाक्यः तस्माच्छाक्यात्[1] शुद्धोदः अथ शुद्धोदसुतः[2] लाङ्गलः स्मृतः 'ततो लाङ्गलात् प्रसेनजित्' तस्मात् प्रसेनजितः क्षुद्रकः भविष्यति ॥१४॥

ततः क्षुद्रकात्कुणकः भविता तस्मात्कुणकात्सुरथस्तनयो भविष्यति। तस्मात्सुमित्र इति प्रसिद्धः सुतो भविता। स तु निष्ठान्तः निष्ठा वंशस्य स्थितिः तस्या अन्तः अन्तिमावधिभूतः। एते 'बृहद्बलस्य भविते' त्यादिना उक्ताः बार्हद्बलाः बृहद्बलगोत्रजा भाविनो नृपाः ॥१५॥

सुमित्रस्य निष्ठान्तत्वमेवाह, अयमिक्ष्वाकूणां वंशः सुमित्रोऽन्तोऽन्तावधिर्यस्य तथाभूतो भविष्यति, कुतः? यतस्तं सुमित्रं राजानं प्राप्य कलौ युगे संस्थामुच्छेदं प्राप्स्यति, वंश इत्यनुषङ्गः ॥१६॥

इति श्रीमद्भागवते नवमस्कन्धे

श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां

व्याख्यायां द्वादशोऽध्यायः ॥१२॥

विज० अनागतानुत्पत्स्यमानान् तस्येत्येतत्पूर्वोत्तरत्र सम्बन्धयितव्यम् ॥९-११॥

तस्य सुतपसः सुतोऽमित्रजित् ॥१२-१४॥

सुमित्रो नाम राजा निष्ठायाः वंशावलेरन्तोऽवधिभूतः, तत्र समाप्त इत्यर्थः ॥१५॥

एतदेव विशदयति - इक्ष्वाकूणामिति। सुमित्रोऽन्तोऽवसानं यस्य स तथा। संस्थां नाशं समाप्तिं वा "संस्था व्यवस्था प्रणिधिः समाप्त्याचारमन्त्रिषु" (वैज.को 6-2-43) इति ॥१६॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां

श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां

नवमस्कन्धे द्वादशोऽध्यायः ॥२॥

1. TW अथ 2. AB तत्सुत

# त्रयोदशोध्यायः

## श्रीशुक उवाच-

निमिरिक्ष्वाकुतनयो वसिष्टमवृतर्त्विजम्।
आरभ्य सत्रं सोऽप्याह शक्रेण प्राग्वृतोऽस्मि भोः ॥१॥

तं निर्वर्त्यागमिष्यामि तावन्मां प्रतिपालय।
तूष्णीमासीद् गृहपतिः सोऽपीन्द्रस्याकरोन्मखम् ॥२॥

निमिश्चलमिदं[1] विद्वान् सत्रमारभतात्मवान्।
ऋत्विग्भिरपरैस्तावन्नागमद् यावता गुरुः ॥३॥

शिष्यव्यतिक्रमं वीक्ष्य निर्वर्त्य गुरुरागतः।
अशपत् पततां[2] देहो निमेः पण्डितमानिनः ॥४॥

निमिः प्रतिददौ शापं गुरवेऽधर्मवर्तिने।
तवापि पततां[3] देहो लोभाद् धर्ममजानतः ॥५॥

इत्युत्ससर्ज स्वं देहं निमिरध्यात्मकोविदः।
मित्रावरुणयोर्जज्ञे ह्यूर्वश्यां[4] प्रपितामहः ॥६॥

गन्धवस्तुषु तद्देहं निधाय मुनिसत्तमाः।
समाप्ते सत्रयागेऽथ देवानूचुः समागतान् ॥७॥

राज्ञो जीवतु देहोऽयं प्रसन्नाः प्रभवो यदि।
तथेत्युक्ते निमिः प्राह मा भून्मे देहबन्धनम् ॥८॥

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

इक्ष्वाकोरेव पुत्रस्य निमेर्वंशस्त्रयोदशे। वर्ण्यते जज्ञिरे यत्र ब्रह्मज्ञा जनकादयः॥

यद्वा - त्रयोदशेऽरिषड्वर्गजयी राजान्ववायकृत्।
ऐक्ष्वाकस्य निमेर्देहान्मथिताज्जनकोऽभवत्॥

---

1 MMs 'स्सत्रविदां 2 ABGJ 'तताद्' 3 ABGJ 'तताद्' 4 AGJ 'उर्व'

निमेरौरस· पुत्रो नाभूदिति दर्शयन्कथामाह निमिरित्येकादशभि । सत्रमारभ्य वशिष्टमृत्विजमवृत वव्रे ॥१॥

**तमिति** । तं शक्रस्य मखं[1] सत्रं[2] निर्वर्त्य प्रतिपालय प्रतीक्षस्वेति । गृहपतिर्निमिः ॥२॥

**निमिरिति** । इदं जीवितं चलमस्थिरं विद्वान् ॥३॥

**शिष्येति** । इन्द्रस्य मखं निर्वर्त्यागतो गुरु· शिष्यस्य व्यतिक्रममन्यायं वीक्ष्य निमेर्देह· पतत्वित्यशपत् ॥४-५॥

**इतीति** । [3]ऊर्वशीदर्शनात्स्कन्नं रेतस्ताभ्यां कुंभे निषिक्तं तस्मात्प्रपितामहो वशिष्टो जज्ञे । तदाह मित्रावरुणयोरिति । तथा च श्रुति । "कुंभे रेत· सिषिचतु· समानम्" इति ॥६-७॥

**राज्ञ इति** । यदि प्रसन्ना प्रभव समर्थाश्चेत्तर्हि[4] जीवत्वित्यूचुः ॥८॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

एवं "क्षुवतस्तु मनोर्जज्ञे इक्ष्वाकुर्घ्राणत· सुत·। तस्य पुत्रशतज्येष्ठा· विकुक्षिनिमिदण्डका·॥"(भाग 9-6-4) इत्युपक्रान्तानामिक्ष्वाकुसुतानां विकुक्षेर्वंश· कथित अथ निमेर्वंशं विवक्षुस्तावन्निमेरौरस· पुत्रो नाभूदिति दर्शयितुं तत्कथामाह - **निमि**रित्यादिना अराजकभयमित्यत प्राक्तनेन। इक्ष्वाकोस्तनयो निमि कदाचित्सत्रमारभ्य वसिष्टमृत्त्विजम् अवृत त्वमृत्विक् भवेति वसिष्ठमुवाचेत्यर्थ·। ततः स वसिष्ट भो हे निमे! प्राक् त्वद्वरणात्प्रागेव अहं शक्रेण वृतोऽस्मि ॥१॥

अतस्तं शक्रस्य मखं निर्वर्त्य निष्पाद्य कारयित्वेत्यर्थ·। आगमिष्यामि तावत्पर्यन्तं त्वं प्रतिपालय प्रतीक्षस्वेत्याह - ततो गृहपति· निमिः तूष्णीमासीत्किञ्चिदप्यवदंस्तस्थौ तत· स वसिष्ट शक्रस्य मखमकरोत् ॥२॥

तदा निमिरात्मवान् प्रकृतिपुरुषेश्वरयाथात्म्यवित् अत एवेदं जीवितं चलमनित्यं जानन्, छलमितिपाठे इदं गुरोर्वचः आर्त्विज्याकरणे मिथ्याहेतुं जानन्नित्यर्थ । यावद्गुरुर्वसिष्टो नागतः तावदेव[5] अन्यै· ऋत्विग्भि· सत्रमारब्धवान् ॥३॥

**शिष्य इति**। ततो गुरुर्वसिष्ठ· शक्रस्य मखं निर्वर्त्त्यागतः शिष्यस्य निमेर्व्यतिक्रमं [6]गुरुवाक्यातिक्रमं[6] वीक्ष्याऽशपत्, किमिति? पण्डितमात्मानं मन्यत इति तथा, तस्य निमेर्देह· पततां वियुज्यतामिति। निमे इति पाठे, हे निमे! पण्डितमानिनस्तव देह· पततामित्यर्थ ॥४॥

**निमिरिति**। तदाकर्ण्य निमिरपि धर्मानुवर्त्तिने गुरवे वसिष्ठाय प्रतिशापं ददौ, किमिति? वित्तलोभाद्धर्ममजानतः तवापि देहः पततामिति ॥५॥

---

1 H V omit मख 2 ABJ omit सत्र 3 ABJ उ° 4 BHV °र्थाश्च त° 5 AB °तावदन्यै 6- -6 TW omit

**इतीति**। इतीत्थं वदन् निमिरध्यात्मकोविदः स्वं देहं तत्याज तथा अस्मत्प्रपितामहः वसिष्ठोऽपि त्यक्तदेहः पुनर्मित्रावरुणयो ऊर्वशीदर्शनात्स्कन्नवीर्ययोस्तस्यां जज्ञे अत्रोर्वशीदर्शनान्मित्रावरुणयो स्कन्नं रेत ताभ्यां तत्कुम्भे निषिक्तं तस्माज्जज्ञे अस्मत् प्रपितामह इतीतिहासोऽनुसन्धेयः[1] ॥६॥

अथ तं त्यक्तं निमेर्देहं सुगन्धिवस्तुषु परिमलद्रव्येषु गन्धतैलेषु निधाय मुनिसत्तमा ऋत्विजः सत्र[2] यागे सति। अथानन्तरं तत्र समागतान् देवानूचु ॥७॥

**राज्ञ इति**। किमिति[3]? यदि यूयं प्रभवः जीवयितुं समर्थाः प्रसन्नाश्च तर्हि राज्ञो निमेरयं देहो जीवत्विति। ततो देवैस्तथेति जीवत्वयं देह इत्युक्ते सति निमि प्राह, तदेवाह- माभूदित्यादिना विदेह उष्यतामित्यत प्राक्तनेन। देहबन्धनं देहयोग पुनर्मम माभूत् ॥८॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

अवृत वव्रे स वशिष्ठोऽपि तं शक्रस्य यागं निर्वर्त्य समाप्य प्रतिपालय प्रतीक्षस्व गृहपतिर्निमिः ॥१-२॥

सन्तस्त्रायत इति सच्च त्रायति वा सत्रं ब्रह्म तद्विदां मध्ये विद्वान् तेषां संशयच्छेत्ता अपरैर्वशिष्ठव्यतिरिक्तैः तावन्नागमदित्यादिना गुर्वपेक्षायाः नियतत्वदर्शनात्तत्प्रतिसन्धानमगणय्य शिष्याय शापदानमधर्म इति कृत्वाऽधर्मवर्तिन इत्युक्तम् ॥३-४॥

लोभात् पौरोहित्यविषयात् ॥५॥

ततः किमभूदिति तत्राह - **मित्रावरुणयोरिति**। यो मित्रावरुणयोरुर्वश्यां जज्ञे सः मम प्रपितामहो वसिष्ठः ॥६॥

तद्देहं तस्य निमेर्देहं गन्धवस्तुषु गन्धवासिततैलेषु हरिद्रादिद्रव्यविशेषेषु निधाय सत्रनामयागे ॥७॥

देहलक्षणम्बन्धनम् ॥८॥

**यस्य योगं न वाञ्छन्ति वियोगभयकातराः।**
**भजन्ति चरणाम्भोजं मुनयो हरिमेधसः ॥९॥**
**देहं नैवा[4]रुरुत्सेऽहं दुःखशोकभया[5]श्रयम्।**
**सर्वत्रास्य यतो मृत्युर्मत्स्यानामुदके यथा ॥१०॥**

**देवा ऊचुः**

**विदेह उष्यतां कामं लोचनेषु शरीरिणाम्।**
**उन्मेषणनिमेषाभ्यां लक्षितोऽध्यात्मसंस्थितः ॥११॥**

1 AB add इति भाव 2 AB सत्रे 3 TW omits किमिति। 4 ABGJMMa नाव॰ 5 ABGJ भयावहम्

अराजकभयं नृणां मन्यमाना महर्षयः।
देहं ममन्थुः स्म निमेः- कुमारः समजायत ॥१२॥

[2] जननाज्जनकः सोऽभूद् वैदेहस्तु विदेहजः।
मिथिलो मथनाज्जातो मिथिला येन निर्मिता ॥१३॥

तस्मादुदावसुस्तस्य पुत्रोऽभून्नन्दिवर्धनः।
ततः सुकेतुस्तस्यापि देवरातो मही[3]पते ! ॥१४॥

तस्माद् बृहद्रथस्तस्य महावीर्यः सु[4]धृत्पिता।
[5-]सुधृतेर्धृ[-5]ष्टकेतुर्वै हर्यश्वोऽथ मरुस्ततः ॥१५॥

मरोः[6]प्रतिन्धकस्तस्माज्जातः [7]कृतरथो यतः।
देवमीढस्तस्य [8]पुत्रो [9]विश्रुतोऽथ महाधृतिः ॥१६॥

**श्रीध० यस्येति**। यस्य देहस्य योगं न वाञ्छन्ति, अपि तु मोक्षायैव भजन्ति ॥९-१०॥

**विदेह इति**। निमिर्विदेह एव सन् उष्यतां वसतु कामं यथेच्छम्। एवं सति युष्माभिः प्रार्थितं जीवितमस्य भविष्यति न च देहबन्ध इति भावः। स चाध्यात्मं संस्थितो लोचनयोः स्थितः सन् उन्मेषणनिमेषाभ्यां तत्प्रवर्तकत्वेन लक्षितो वर्तत इति शेषः ॥११॥

तदेवं मृतादपि निमेर्देहाद्वंशप्रवृत्तिं दर्शयति। - **अराजकभयमिति** ॥१२॥

तस्यान्वर्थानि त्रीणि नामान्याह - **जन्मनेति** जन्मनाऽसाधारणेन जन एव जनकः। यद्वा स्वदेहद्वारा जनकत्वात्स निमिर्जनकोऽभूदित्यर्थः। मिथिला येन निर्मिता इत्यनेनव्युत्पत्यन्तरं [10]सामर्थ्याद्युक्तम् ॥१३-१४॥

**तस्मादिति**। सुधृत् सुधृतिस्तस्य पिता ॥१५-१६॥

**वीर० तत्र हेतुं वदन्नाह - यस्येति**। मुनयो वियोगभयकातराः देहयोगे सति पुनर्वियोगः स्यात् अतो वियोगभयदुःखोदर्कत्वात् पूर्वं यस्य देहस्य योगं न वाञ्छन्तीत्यर्थः किन्तु हरिमेधसो भगवतः चरणाम्भोजमेव भजन्ते। हरिराश्रितानां संसृतिबन्धं हरतीति तथा, स चासौ मेधास्तेषाम् इष्टप्रापणानिष्टपरिहारोपयुक्तज्ञानवान् तस्य ॥९॥

---

1 MMa 'श्च 2 ABGHJV 'जन्मना ज' 3 MMa 'पति 4 W 'ह' 5--5 MMa सुधृतोधृष्ट', W सुहृदोधृष्ट' 6 ABGJ प्रतीपक', MMa प्रतीन्धक' 7 ABGJ कृतिरथो, HV कृतरथो 8 ABGJMMa सुतो 9 ABGJ 'श्रु' 10 ABJ अर्थात् उक्तम्

**देहमिति**। अतोऽहं दुःखादिनिमित्तभूतं देहं नावरुरुत्से अवरोद्धुं गृहीतुं नेच्छामि, यतो देहस्यावरोधादस्य देहिनः सर्वदा पुनः पुनरिति भावः, मृत्युरनुवर्त्तत इति शेषः। यथोदके वसतां मत्स्यानां मृत्युः पौनः पुन्येन तद्वदित्यर्थः ॥१०॥

इत्थमुक्ता देवा ऊचुः ० **विदेह इति**। तदेवाह - निमिर्विदेह एव सन् अध्यात्मसंस्थितः सूक्ष्मदेहस्थितिमान् कामं यथेच्छं शरीरिणां लोचनेषून्मेषनिमेषाभ्यां लक्षितः तत्प्रवर्तकत्वेन सूचितः उष्यतां [1]स्थीयताम्, एवञ्च युष्माभिः प्रार्थितमस्य जीवितमपि भविष्यति, न च स्थूलदेहसम्बन्ध इति भावः ॥११॥

तदेवं मृतादपि निमेर्देहाद्वंशप्रवृत्तिं दर्शयति - **अराजकभयमिति**। नृणामराजकत्वनिमित्तं भयं मन्यमानाः सम्भावयन्तो ये महर्षयो निमेर्देहं ममन्थुः मथितवन्तः ततः कुमारः समजायत ॥१२॥

तस्यान्वर्थानि त्रीणि नामान्याह - **जननादिति** । जननादनितरसाधारणजन्मनो निमित्ताज्जनकपदाभिधेयो बभूव यद्वा स्वदेहद्वारा जनयितृत्वाज्जनकः विदेहतः जीववियुक्ताद्देहाज्जातत्वाद्विदेहाख्यः। मन्थनाज्जातत्वान्मिथिल· येन मिथिलशब्दभिधेयेन निर्मितत्वात् पुर्यपि मिथिलाख्या बभूवेत्यर्थः ॥१३॥

**तस्मादिति**। तस्मान्मिथिलादुदावसुर्व्यजायतेत्यनुषङ्गः। तस्योदावसोर्नन्दिवर्द्धनः पुत्रो बभूव, ततो नन्दिवर्द्धनात् [2]सुकेशस्तस्यापि [2]सुकेशस्यापि देवरात· पुत्र· हे महीपते! ॥१४॥

**तस्माद्**देवरातात् बृहद्रथः तस्य बृहद्रथस्य महावीर्यः। तत्पुत्रं वदन् तं विशिनष्टि - सुहृत्पितेति। सुहृदः पुत्रस्य पितेत्यर्थ· पुत्रो सुहृदः धृष्टकेतुः अथ धृष्टकेतोर्हर्यश्व·, ततो हर्यश्वान्मरुः ॥१५॥

मरोः पुत्रः [3]प्रतिन्धकः। [4]तस्मात्प्रतिन्धकात्कृतरथो जातः तं विशिषन् तत्पुत्रमाह - यतः कृतरथाद्देवमीढो जात इत्यनुषङ्गः, तस्य देवमीढस्य सुतो विधृत·, अथ विधृतान्महाधृति· ॥१६॥

**विज०** किमिति देहबन्धो माभूदिति तत्राह - **यस्येति**। यस्य देहस्य योगं सम्बन्धं यस्य वियोगभयेन कातराः व्यग्रचित्ता हरिभक्तजनपापहरणशीला मेधा धारणावती धीः "धीर्धारणावती मेधा" (अम.को.1-141) इत्यमर·। बुद्धिर्यस्य स तथा तस्य, हरिवत्सूर्यवत्प्रकाशमाना मेधा यस्येति वा तस्य विष्णोः, मुनयो। वाचम्यमाः ॥९॥

तं देहं नावरुरुत्से स्वीकर्तुं नेच्चामि दुःखं तीव्रवेदना शोक· मन्युः "मन्युशोकौ तु शुक् स्त्रियाम्" (अम. कोः 1-207) इत्यमर·। भयं सञ्चलनं ततोऽपि देहग्रहणेच्छा नेत्याह सर्वत्रेति ॥१०॥

अदेहस्याऽस्य वासः कथङ्घटते? अधिष्टानाद्यभावादिति तत्राह - **लोचनेष्विति**। लोचनेष्वस्य सद्भावः कथञ्जायते? इति तत्राह - उन्मेषणेति। किमस्य कर्म? इति तत्राह - अध्यात्मेति। परमात्मोपासनायुक्तः ॥११-१२॥

---

1 TW omits स्थीयताम् 2- -2 AB omits 3 A 'तीपक 4 A तीपका'

नामनिर्वचनपूर्वकं जनकस्य वंशं कथयति जननादित्यादिना। मथनेन जननमस्येत्यस्मिन्नर्थे मिथिलेति निपातनं शवानां शयनमस्मिन्निति श्मशानमितिवत्:- मिथला पुरी ॥१३-१४॥

सुधृत्पिता सुधृतो जनकः ॥१५-१६॥

कृतिरातस्ततस्तस्मान्महारोमाऽथ तत्सुतः।[1]
स्वर्णरोमा सुतस्तस्य ह्रस्वरोमा व्यजायत ॥१७॥

ततः सीरध्वजो जज्ञे यज्ञार्थं कर्षतो महीम्।
सीता सीराग्रतो जाता तस्मात् सीरध्वजः स्मृतः ॥१८॥

कुशध्वजस्तस्य पुत्रस्ततो धर्मध्वजो नृपः।
धर्मध्वजस्य द्वौ पुत्रौ कृतध्वजमितध्वजौ ॥१९॥

कृतध्वजात् केशिध्वजः खाण्डिक्यस्तु मितध्वजात्।
कृतध्वजसुतो राजन्नात्मविद्याविशारदः ॥२०॥

खाण्डिक्यः कर्मतन्त्रज्ञो[2] भीतःकेशिध्वजाद्द्रुतः[3]।
भानुमांस्तस्य पुत्रोऽभूच्छतद्युम्नस्तु तत्सुतः ॥२१॥

शुचिस्तत्तनयस्तस्मात्[4] सनद्वाजस्ततोऽभवत्।
ऊर्ध्वकेतुः[5] सनद्वाजादजोऽथ कुरुजित्सुतः[6] ॥२२॥

अरिष्टनेमिस्तस्यापि श्रुतायुस्तत्सुपार्श्वकः।
ततश्चित्ररथस्तस्य[7] क्षेमाधिर्मिथिलाधिपः[8] ॥२३॥

तस्माद्धेमरथस्तस्य[9] सुतः सत्यरथस्ततः[10]।
आसीदुपगुरुस्तस्मादुपगुप्तोऽग्निसंभवः[11] ॥२४॥

**श्रीध० खाण्डिक्येति**। तस्य केशिध्वजस्य भानुमान् ॥१७-२२॥

[12-] **अरिष्टेति**। तत्तस्मात्सुपार्श्वक [-12] ॥२३॥

**तस्मादिति**। अग्निसंभवोऽग्नेरंशात्संभूत· ॥२४॥

---

1 H V कीर्ति° 2 ABGJMMa तत्त्व° 3 ABGJ °द्रुत 4 MMa शुचिस्त त° 5 MMa ऊर्ज° 6 ABGJTW °पुरु° 7 ABGJMMa रथो यस्य 8 ABGJ °मधि°, TW °मादि° 9 ABGJ तस्मात् सम° 10 W कृत्य° 11 MMa गोप्ताऽग्नि° 12- -12 H V omit

**वीर०** ततो महाधृते· कृतिरात· तस्मात्कृतिरातान्महारोमा जात , तत्सुतो महारोम्णस्सुत स्वर्णरोमा तस्य स्वर्णरोम्णः ह्रस्वरोमा व्यजायत ॥१७॥

**ततो** ह्रस्वरोम्ण सीरध्वजो जज्ञे तस्मिन् सीरध्वजशब्दप्रवृतौ निमित्तमाह - यतो ह्रस्वरोमस्य यज्ञार्थं महीं भुवं कर्षत· कर्षयतस्सत सीराल्लाङ्गलाग्रात्सीता दाशरथेर्भार्या पूर्वं भूयिष्ठा सती जाता प्रादुर्भूता तस्मान्निमित्तात् ह्रस्वरोम सीरध्वजशब्दाभिधेयो बभूव, सीर एव ध्वजवत् ख्यातिहेतुर्यस्य स सीरध्वज· ॥१८॥

तस्य सीरध्वजस्य पुत्र कुशध्वज तत कुशध्वजात् धर्मध्वज पुत्र । हे नृप! धर्मध्वजस्य द्वौ पुत्रौ, तौ च कृतध्वजमितध्वजाख्यौ ॥१९॥

तत्र कृतध्वजात्केशिध्वज[1] मितध्वजात्तु[2] खाण्डिक्यो जात , हे राजन्! कृतध्वजसुत केशिध्वजो ब्रह्मविद्यायां प्रवीण ॥२०॥

खाण्डिक्यस्तु कर्मयोगयाथात्म्यवित्, स च केशिध्वजात् भीतो गत· तस्य केशिध्वजस्य सुतो भानुमान् पुत्रो[3] बभूव, तत्सुतो भानुमत्सुत· शतद्युम्न· ॥२१॥

तस्मात् शतद्युम्नात् शुचिस्तनयोऽभूत् तत शुचे सनद्वाजोऽभवत् सनद्वाजादूर्ध्वकेतु , अथोर्ध्वकेतोरज· स च पुरुजित् सुतो यस्य तथाभूत ॥२१-२२॥

तस्यापि पुरुजितोऽपि सुतोऽरिष्टनेमि तस्य श्रुतायुस्तस्य पार्श्वग तत पार्श्वगाच्चित्ररथ तस्य चित्ररथस्य क्षेमाद्रि· स च मिथिलाधिप , इदं पूर्वेषामपि विशेषणम् ॥२३॥

तस्मात् क्षेमाद्रे· हेमरथस्सुत तस्मात् कृत्यरथ तस्मादुपगुरुरासीत् तस्मादुपगुरोरुपगुप्त· स चाऽग्निसम्भव· अग्नेरंशात्सम्भूत ॥२४॥

**विज०** सीता जननहेतुत्वेन सीरं ध्वजं गमकं ज्ञापकं यस्य स सीरध्वज· "ध्वज गतौ" इति धातुः ॥१७-२४॥

**[4-]वस्वनन्तोथ[-4] [5]तत्पुत्रो [6]सुवर्चा यत् [7]सुभूषणः।**
**श्रुतस्ततो जयस्तस्माद् विजयो[8]ऽस्मादृतः[9] सुतः ॥२५॥**
**[10]शुनकस्तत्सुतो जज्ञे [11]वीतिहव्यो धृतिस्ततः।**
**[12]बहुलाश्वो [13]धृतेस्तस्य कृतिरस्य [14]महावशी ॥२६॥**

---

1 AB जो बभूव° 2 AB °त् 3 W omit पुत्र 4- -4 HV सावनोऽथ , MMa वैवस्वतोऽथ , W श्वसनोऽथ 5 HTVW तत पु° 6 ABGJ युयुधो , MMa युयुधा 7 ABGJMMa सुभाषण° 8 TW ऽस्य 9 HV °द्रुत , TW °धृत 10 HV अनघ° 11 ABGJ वीत , MMa वीर° 12 W विपुलाश्वो 13 MMa धृत° 14 HV स्तस्मान्म , TW स्तस्य म°

**एते वै मैथिला[1] राजान्नात्मविद्याविशारदाः।**

**योगेश्वरप्रसादेन द्वन्द्वैर्मुक्ता गृहेष्वपि ॥२७॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
नवमस्कन्धे त्रयोदशोऽध्यायः ॥१३॥

**श्रीध० वस्वनन्त इति** । यद्यस्मात्सुभूषणः[2] ॥२५-२६॥

एते इति। योगेश्वरा याज्ञवल्क्यादयस्तेषां प्रसादेन अनुग्रहेण[3] ॥२७॥

इति श्रीमद्भागवते महापुराणे
श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्यख्यायां नवमस्कन्धे त्रयोदशोऽध्याय॥१३॥

**वीर०** तत उपगुप्ताच्छ्वसनः पुत्रोऽभवत् ततः सुवर्चाः यत् यस्मात् सुभाषणो जज्ञे ततः सुभाषणाच्छ्रुतो जज्ञे, तस्माच्छ्रुतात् जयः तस्माज्जयाद्विजयः अस्य विजयस्य सुतो धृतः, व्रतः इति पाठान्तरम् ॥२५॥

तत्सुतो व्रतसुतः शुनकः, अनघ इति पाठान्तरं, ततो वीतिहव्यः ततश्च धृतिः, धृतेर्विपुलाश्वः, तस्य कृतिः,तस्य कृतेः महावशी जज्ञे ॥२६॥

हे राजन्! एते कथिता मैथिलाः मिथिलवंशजाः आत्मविद्यायां विशारदाः, योगीश्वरप्रसादेन, भगवत्प्रसादेन, गृहेषु वसन्तोऽपि द्वन्द्वैः सुखदुःखादिबिर्विमुक्ताः बभूवु ॥२७॥

इति श्रीमद्भागवते नवमस्कन्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां त्रयोदशोऽध्याय ॥१३॥

**विज०** गृहेषु स्थिता अपि योगेश्वरस्य याज्ञवल्क्यस्य प्रसादेन जनकादयो द्वन्द्वैः शीतोष्णादिभावैः मुक्ता आत्मारामा इत्यर्थ ॥२५-२७॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
नवमस्कन्धे त्रयोदशोऽध्यायः ॥१३॥

---

1 MMa मिथिला 2 ABJ 'भा' 3 ABJ omit अनुग्रहेण

# चतुर्दशोऽध्यायः

## श्रीशुक उवाच-

अथातः श्रूयतां राजन् वंशः सोमस्य पावनः।
यस्मिन्नैलादयो भूपाः कीर्त्यन्ते पुण्यकीर्तयः ॥१॥

सहस्रशिरसः पुंसो नाभिह्रदसरोरुहात्।
जातस्यासीत् सुतो धातुरत्रिः पितृसमो गुणैः ॥२॥

[1]तस्य दृग्भ्योऽभवत् पुत्रः सोमोऽमृतमयः किल।
[2]विप्रौषध्युडुगणानां ब्रह्मणा कल्पितः पतिः ॥३॥

[3]सोऽयजद् राजसूयेन विजित्य भुवनत्रयम्।
पत्नीं बृहस्पतेर्दर्पात् तारां नामाहरद् बलात् ॥४॥

स यदा देवगुरुणा याचितोऽभीक्ष्णशो मदात्।
नात्यजत् तत्कृते जज्ञे सुरदानवविग्रहः ॥५॥

शुक्रो बृहस्पतेर्द्वेषादग्रहीत् सासुरोडुपम्।
हरो गुरुसुतं[4] स्नेहात् सर्वभूतगणैर्वृतः[5] ॥६॥

सर्वदेवगणोपेतो महेन्द्रो गुरुमन्वगात्[6]।
सुरासुरविनाशोऽभूत् समरस्तारकामयः ॥७॥

निवेदितोऽथाङ्गिरसा[7] सोमं निर्भर्त्स्य विश्वसृट्[8]।
तारां स्वभर्त्रे प्रायच्छदन्तर्वत्नीमवैत् पतिः ॥८॥

## श्रीश्रीधरस्वामीविरचिता भावार्थदीपिका

[9]चतुर्दशादिभिः सोमवंशमाहाऽऽसमाप्तितः। यस्मिन्नैलादयो भूपाः कीर्त्यन्ते पुण्यकीर्तयः[9] ॥

चतुर्दशे गुरोः पत्न्यां तारायां सोमजाद् बुधात्। जातश्चैलः षडुर्वश्यामायुमुख्यानजीजनत्[10] ॥

---

1 HVW तस्माद्° 2 HV °ध्युडुवर्गाणां, MMa TW °ध्यमुगर्भाणां 3 TW ग्ोऽ° 4 MMa °त° 5 ABGJMMa गणावृत 6 ABGJMMa °वाद् 7 a °तोऽथोऽग्नि° 8 ABGJMMa °कृत् 9--9 HV omit 10 MV °मुं°

यद्वा - * चतुर्दशेऽत्रिजात्सोमात् गुरोः पत्न्यां बुधोऽजनि। सोपास्तोर्वशीं तज्जस्ससङ्केतं पुरूरवाः ॥

**तस्येति**। दृग्भ्य आनन्दाश्रुभ्य अत एवामृतमय·। किलेत्याश्चर्ये। पाठान्तरे दृशो नेत्रात्। वक्ष्यमाणदर्पस्य[1] कारणमाह - विप्रेति ॥१,-३॥

**स** इति। सोमस्य पुत्रो बुध इति कथाद्वारेणाह - पत्नीमिति सार्धैर्नवभि· ॥४॥

**स** इति। तत्कृते तन्निमित्तम् ॥५॥

सुराणां दानवानां च विग्रहे कारणमाह - **शुक्र** इति। असुरै सहित· उडुपमग्रहीदित्यर्थ । सन्धिरार्ष । गुरोः सुतं बृहस्पतिमग्रहीत्। अङ्गिरस सकाशात्प्राप्तविद्यो हर इति प्रसिद्धि· ॥६-७॥

**निवेदित** इति । निवेदितो विज्ञापित·। विश्वसृट्[2] ब्रह्मा। अवैदबुध्यत ॥८॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

तदेवं सूर्यवंशमनुवर्ण्याथ सोमवंशमनुवर्णयितुं प्रतिजानन् राज्ञ शुश्रूषामुत्पादयति मुनि·- **अथेति**। हे राजन्! अथ सूर्यवंशवर्णनानन्तरं मया कथ्यमान सोमवंश· श्रूयतां, त्वयेति शेष·। श्रोतव्यताख्यापनाय वंशं विशिनष्टि - पावन इति। तत्र हेतुमाह, यस्मिन्निति। कीर्त्यत इति कीर्तनं यश ,पुण्यं कीर्तनं येषां ते ऐलादय पुरूरवादयो नृपाः यस्मिन् सोमवंशे कीर्त्यन्ते ॥१॥

तत्र वंशस्य पूर्वावधिं वक्तुं सोमात्प्राक्तनानाह - **सहस्रशिरस** इति। सहस्रं शिरांसि यस्य तस्य पुंसः अनिरुद्धरूपिण· परमपुरुषस्य गर्भोदकेषु शयानस्य नाभिरेव ह्रद तस्मिन् यदुत्पन्नं सरोरुहं जगत्पद्मं तस्माज्जातस्य धातु चतुर्मुखस्य सुतोऽत्रिरासीत् स चात्रि गुणै· पितृसम· चतुर्मुखतुल्य ॥२॥

तस्मादत्रे· दृग्भ्य आनन्दाश्रुभ्य· सोमश्चन्द्रः पुत्रोऽभवत् अत एवामृतमय·, किलेत्याश्चर्ये पाठान्तरे दृशो नेत्रात्, न चैवं "चन्द्रमा मनसो जात" (पु.सू.12-6) इति श्रुतिविरोध·, तस्यैवात्र जन्मान्तरकथनात्। वक्ष्यमाणदर्पस्य कारणं वदन् सोमं विशिनष्टि विप्रेति । ब्रह्मणा सोमो विप्रादीनां पति· कल्पित कृत· पतित्वेन कृत इत्यर्थः। अम्बुगर्भा· कुमुदादयः ॥३॥

यस्सोमो भुवनत्रयं विजित्य राजसूयेनायजत् सोमस्य पुत्रो बुध इति कथाद्वारेणाह सार्धैर्नवभिः पत्नीमिति। बृहस्पतेः पत्नीं तारां नाम तारेतिप्रसिद्धां दर्पात् बलात् प्रसह्य हृतवान् ॥४॥

स सोमो यदा देवानां गुरुणा बृहस्पतिना पुन पुनर्याचितोऽपि मदात् दर्पात् नात्यजत्। तारामिति शेषः। **तदा तत्कृते**

* This extra verse is found only in H v edns 1 A B J दर्पका° 2 ABJ °कृत

तन्निमित्तं देवानां दानवानां च विग्रहो द्वेष· जज्ञे ॥५॥

सुरासुराणां विग्रहजन्मप्रकारमाह - **शुक्रइति**। बृहस्पतेर्द्वेषात् शुक्र· सासुर· असुरैः सहितः उडुपम् उडूनि नक्षत्राणि पातीति तथा तं सोमम ग्रहीत् स्वपक्षपातिनमकरोदित्यर्थ· सन्धिरार्ष·। तथा हरो रुद्र सर्वैर्भूतगणैर्वृतः गुरोरङ्गिरसः सुतं बृहस्पतिं स्नेहादग्रहीत् अङ्गिरस· सकाशात् प्राप्तविद्यो हर इति हि प्रसिद्धिः अतो गुरुसुतमित्युक्तम् ॥६॥

तदा सर्वैर्देवगणैरुपेतो महेन्द्रो गुरुं बृहस्पतिमन्वगात् अनुससार एवं स्थिते तदा सुराणामसुराणां च विनाश। यस्मात्समरः सङ्ग्राम· तारकामयः तारका तारा तस्या· निमित्तभूतायाः आगतस्तारकामय· "तत आगत" इत्यधिकारे "मयट् चे" ति मयट्। अभूत् बभूव ॥७॥

अथ सोमं निर्भर्त्स्य अङ्गिरसा विश्वसृट् ब्रह्मा विज्ञापितो बभूव ततस्तद्भयात्सोमस्तारां भर्त्रे बृहस्पतये प्रायच्छत् अदात् तदा पतिर्बृहस्पतिः भार्यामन्तर्वर्त्नीं गर्भिणीमवैदबुध्यत। आह - चेति शेष ॥८॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

अथ सूर्यवंशकथनानन्तरं यतो वंशज्ञानं पुरुषार्थसाधनमत् इति हेत्वर्थ। गुणविशिष्टपुरुषज्ञानमन्तरेण वंशज्ञानेन कथं पुरुषार्थ· स्यात्? इत्यतः क्षिप्रप्रवृत्यर्थं तद्वंश्यान् संक्षिप्याह - यस्मिन्निति ॥१,२॥

इयमेव वार्ता सर्वत्र नान्या, सर्वैः सम्भावितोऽयं सोम इति वा, किलेत्युक्तम् "वार्ता सम्भाव्ययोः किल" (अम. को 3-409) इत्यमरः। यो देवो विप्राणामोषधीनाम् अम्बुगर्भाणां कुमुदादीनां पतिः पोषकः ॥३,४॥

तत्कृते तारार्थम् ॥५॥

असुरैः सह वर्तमानः सासुर· उडूनां नक्षत्राणां पति उडुप शुक्रविशेषणं सासुर इति, सन्धिश्छान्दसः, बृहस्पतेर्द्वेषा· बृहस्पतिविषयद्वेषात् हरः गुरुरङ्गिरास्तस्य सुतो बृहस्पतिस्तत्स्नेहात् ॥६॥

सुरासुराणां विनाशो यस्मिन् स तथा, तारकामयः तारकार्थं विद्यमानः ॥७॥

अजो ब्रह्मा, बृहस्पतिः तारामाहेति शेषः ॥८॥

**त्यज[1] त्यजाशु दुष्प्रज्ञे मत्क्षेत्रे[2] त्वाहितं परैः।**
**नाहं [3]त्वां भस्मसात् कुर्यां स्त्रियं सान्तानिके[4]ऽसति ॥९॥**

---

1 W गर्भं 2 ABGJMMa 'त्रादाहित 3 TW त्वा 4 ABGJ 'क सति

तत्याज व्रीडिता तारा कुमारं [1]कनकप्रभम्।

* तस्यां जज्ञे दस्युहन्ता कुमारः कनकप्रभः।

स्पृहामाङ्गिरसश्चक्रे कुमारे सोम एव च ॥१०॥

ममायं न तवेत्युच्चैस्तस्मिन् विवदमानयोः।

पप्रच्छुर्ऋषयो देवा नैवोचे व्रीडिता [2]तु सा ॥११॥

कुमारो मातरं प्राह कुपितोऽलीकलज्जया।

किं [3-]नावोचस्त्वसद्वृत्ते[-3] [4]ह्यात्मावद्यं वदाशु [5]मे।

□ न त्वां तु भस्मसात्कुर्यां आत्मावद्यविगूहनीम् ॥१२॥

■ ब्रह्मा तं तु विनिर्भत्स्र्य क्षेप्तारं मातुरन्तिके।

[6-]ब्रह्मा तां रह आहूय समप्राक्षीच्च सान्त्वयन्[-6]।

सोमस्येत्याह शनकैः सोमस्तं [7]सुतमग्रहीत् ॥१३॥

तस्यात्मयोनिरकृत बुध इत्यभिधां नृप।

बुद्ध्या गम्भीरया येन पुत्रेणापोडुराण् मुदम् ॥१४॥

ततः पुरूरवा जज्ञे इलायां य उदाहृतः।

[8]तस्य रूपगुणौदार्यशीलद्रविणविक्रमान् ॥१५॥

श्रुत्वोर्वशीन्द्रभवने गीयमानान् सुरर्षिणा।

तदन्तकमुपेयाय देवी स्मरशरार्दिता ॥१६॥

**श्रीध०** बृहस्पतिराह - त्यज त्यजेति। परैराहितं गर्भम्। गर्भेत्यक्ते भस्मीकरिष्यतीति बिभ्यतीं प्रत्याह - नाहमिति। सान्तानिकः सन्तानार्थी। सान्तानिके इति पाठे हे सत्पुत्रे! इत्यर्थः ॥९-१२॥

**ब्रह्मेति**। रहः एकान्ते ॥१३॥

---

1 W ज° * This additional half verse is found only in M Ma edns 2 MMa च 3--3 ABGJMMa न वोचस्यसदवृत्ते 4 ABGJT आत्मावद्य, MMa पितर मे 5 MMa वै □ An additional half verse is found in M Ma edns ■ This additional half verse is formed in M.Ma Edns 6- -6 MMa तामाहूय समप्राक्षीत् रह एव तु सान्त्वया। 7 ABGJMMa तावदगु 8 MMa तस्या

पुरूरवस ऊर्वश्यां[1] आयु[2] प्रमुखाः षट् पुत्रा जाता इति वक्तुं कथामाह । 'तस्येत्यादिना यावत्समाप्ति' ॥१४-१६॥

**वीर०** तदेवाह - गर्भमिति। हे दुष्प्रज्ञे! मत्क्षेत्रभूतायां त्वयि परैराहितं हेतुगर्भमिदं परैराहितत्वादाशु गर्भं त्यज; गर्भे त्यक्ते भस्मीकरिष्यतीति बिभ्यतीं प्रत्याह - नाहमिति। सान्तानिके सन्तानाधायके पुत्रे असति अविद्यामाने सति अहं स्त्रियं त्वां न भस्मसात्कुर्यां न भस्मीकरोमीति ॥९॥

ततो व्रीडिता लज्जिता तारा जनकस्य चन्द्रस्येव प्रभा यस्य तं कुमारं तत्याज प्रसूतवती। ततः तस्मिन् कुमारे आङ्गिरसो बृहस्पतिः सोमश्च स्पृहाश्चक्रे क्षेत्रत्वाद्वीर्यजत्वाच्चेत्युभयत्र हेतुद्वयं बोध्यम् ॥१०॥

एवं स्पृहया ममैवायं सुतो न तवेत्येवं तस्मिन् पुत्रनिमित्तमुच्चैराङ्गिरससोमयोर्विवदमानयोस्ततोर्देवा ऋषयश्च पप्रच्छु तामिति शेषः। तदा व्रीडिता सा ताराऽपि नैवोचे नोवाच ॥११॥

ततो मातरं तारां कुमारः क्रुद्धः प्राह - किमिति? हे असद्वृत्ते! त्वं व्यर्थया लज्जया मिथ्यालज्जया वा किं नावोचः नोक्तवती अधुना कस्यापत्यं पुत्रः, अहमिति शेषः। तन्मे मह्यं वदेति। अत्र "न त्वान्तु भस्मसात्कुर्यामात्मावद्यविगूहीनीम्" इति क्वचित्पठ्यते। आत्मावद्यमात्मदोषं विगूहन्ती आच्छादयन्ती तथा ताम् शेषं स्पष्टम् ॥१२॥

एवं मातुः समीपे निर्भर्त्स्याधिक्षेप्तारं तं कुमारं वीक्ष्य ब्रह्मा चतुर्मुखः रह एकान्ते तां तारां आहूय सान्त्वयन् अनुनयन् समप्राक्षीत् कस्याऽयं सुत इति पृष्टवान्, पृष्टा च सा शनकैः लज्जया शनैः सोमस्येत्याह - चन्द्रस्य सुत इत्युवाच, ततः सोमः तं सुतमग्रहीत् ब्रह्मणा अनुज्ञातोऽगृह्णात् ॥१३॥

हे नृप! आत्मयोनिः ब्रह्मा तस्य कुमारस्य बुध इत्यभिधां नामधेयं चक्रे; तस्य प्रवृत्तौ निमित्तमाह बुद्ध्येति। उडुराट् चन्द्रः येन यतो गम्भीरया बुद्ध्या पुत्रेण हेतुना मुदं हर्षमाप प्राप्तवान् ततोऽयं बुध इति ॥१४॥

ततो बुधात्पुरूरवाः जातः, कोऽसौ? य इलायां सुद्युम्नस्त्रीरूपे उक्तः जात इत्युक्तः प्रथमाध्याये, सोऽयमित्यर्थः। पुरूरवस ऊर्वश्यामायुप्रमुखाः पुत्रा जज्ञिरे इति वक्तुं कथामाह - तस्येत्यादिना यावदध्यायसमाप्ति। तस्य पुरूरवसो रूपादीन् इन्द्रभवने सुरर्षिणा नारदेन गीयमानान् श्रुत्वा ऊर्वशी देवी स्मरशरार्दिता कामार्त्ता तस्य पुरूरवसः समीपमुपेयाय आजगाम। तत्र रुपं सौन्दर्यम् औदार्यं वदान्यता, शीलं सुस्वभावः सद्वृत्तिश्च, द्रविणं धनं, विक्रमः पराक्रमः, गुणशब्देन गाम्भीर्यधैर्यादि सङ्ग्रहः ॥१५-१६॥

---

1 HV 'श्या 2 HV आयु'

**विज०** मत्क्षेत्रात्तद्गर्भं त्यज कुत इति तत्राह - आहितमिति। सान्तानिके पुत्रे तस्मिन् कुमारे ॥९-११॥

अलीकलज्जयाऽनृतनिमित्तलज्जया **न वोचसि** न कथयसि असद्वृत्ते दुराचारे! अमङ्गलस्वरूपे! वा "वृत्तं स्वरूपे च ते वृत्तं छन्दोविधासु च" (वैज को 6-5-76) इति किं वक्ष्यामि? इति तत्राह - पितरमिति। आत्मावद्यविगूहनीमित्यनेन भस्मीकरणयेग्यत्वे सूचितेऽपि मातृशब्दवाच्यार्हत्वात् भस्मसान्न कुर्यामिति वक्ति ॥१२॥

सान्त्वया वाचा तारा, जनकं वक्तीत्याह सोमस्येति ॥१३॥

तं कुमारम् आत्मा परमात्मा योनिः जनको यस्य स तथा नामकरणे निमित्तमाह - बुद्ध्येति ॥१४॥

उदाहृतः पूर्वमिति शेषः ॥१५-१६॥

**मित्रावरुणयोः शापादापन्ना नरलोकताम्।**
[1] **निशाम्य पुरुषश्रेष्ठं कन्दर्पमिव रूपिणम्।**
**धृतिं**[2] **विष्टभ्य ललना उपतस्थे**[3] **तदन्तिकम् ॥१७॥**

**स तां विलोक्य नृपतिर्हर्षेणोत्फुल्ललोचनः।**
**उवाच श्लक्ष्णया वाचा देवीं हृष्टतनूरुहः ॥१८॥**

**पुरूरवा उवाच**

**स्वागतं ते वरारोहे आस्यतां करवाम किम्।**
[5] **संरमस्व मया साकं रतिर्नौ शाश्वतीस्समाः ॥१९॥**

**ऊर्वश्युवाच**

**कस्यास्त्वयि न सज्जेत मनो दृष्टिश्च सुन्दर।**
[6-] **यदङ्गान्तरमासाद्य च्यवते ह रिरंसया**[-6] **॥२०॥**

**एतावुरणकौ राजन् न्यासौ**[7] **रक्षस्व मानद।**
[8] **रंस्येऽहं भवता साकं श्लाघ्यः स्त्रीणां वरः स्मृतः ॥२१॥**

**घृतं मे वीर भक्ष्यं स्यान्नेक्षे त्वान्यत्र मैथुनात्।**
**विवाससं तत तथेति प्रतिपेदे महामनाः ॥२२॥**

---

1 ABGJMMa 'श' 2 MMa विहाय 3 ABGJ 'के 4- -4 ABGJMMa राजोवाच 5 W सञ्चच्छस्व 6 MMa यदङ्गान्तरमायाति स दृष्टो ह निराश्रय।
7 MMa न्यस्तौ 8 ABGJ MMa सरस्ये

**अहो रूपमहो[1] भावो नरलोकविमोहनम्।**
**को न सेवेत मनुजो देवीं त्वां स्वयमागताम् ॥२३॥**
**तया स पुरुषव्याघ्रो[2] रमयन्त्या यथार्हतः।**
**[3]रेमेऽमरविहारेषु कामं चैत्ररथादिषु ॥२४॥**

**श्रीध०** ननु देवी कुतो मनुष्यस्यान्तिकमुपागच्छे[4]त्तत्राह - मित्रेति। **मित्रावरुणयो** शापान्नरलोकतां मनुष्यभावमापन्ना सती ॥१७-१८॥

**स्वागतमिति**। नौ आवयो रतिरस्त्विति ॥१९॥

**कस्या** इति। यस्य तवाङ्गान्तरं वक्ष आसाद्य रिरंसया रन्तुमिच्छया ह स्फुटं न च्यवते नापयाति। यत यस्मादिति वा ॥२०॥

शापावसाने भाषाभङ्गमिषेण जिगमिषोस्तस्या भाषाबंधमाह - **एताविति** द्वाभ्याम्। उरणकौ मेषौ न्यासौ[5] निक्षेपरूपौ [6]रक्षस्व। य श्लाघ्य· स एव स्त्रीणां वर स्मृत । अतो विजातीयत्वं न दोष इति भाव ॥२१॥

**घृतमिति**। हे वीर! घृतं मे भक्ष्यं स्यात्। "अमृतं वा आज्यम्" इति श्रुते । देवानां चामृताशित्वात्। मैथुनादन्यत्र विवाससं त्वां नेक्षिष्ये, इति प्रतिपेदे अङ्गीकृतवान् ॥२२॥

तदेवाह **अहो** इति ॥२३-२४॥

**वीर०** ननु, देवी कुतो मनुष्यान्तिकमुपगच्छेत्? तत्राह - **मित्रावरुणयोरिति**। मित्रावरुणयो शापात् नरलोकतां मनुष्यभावं आपन्ना प्राप्ता सती नरलोकवासित्वं वा प्राप्ता इत्यर्थः। सा च ललना ऊर्वशी कन्दर्पमिव रूपिण सुन्दरं पुरुषश्रेष्टं पुरूरवसं निशाम्य दृष्ट्वा धृतिं धैर्यं विष्टभ्यावलम्ब्य तस्य पुरूरवस अन्तिकं[7] समीपं[8] उपतस्थे[9] प्राप्तवती। तत स नृपति· पुरूरवास्तां ललनां विलोक्य हर्षेणोत्फुल्ले विकसिते लोचने यस्य, हृष्टानि उदश्चितानि तनूरुहाणि रोमाणि यस्य तथाभूत· श्लक्ष्णया मृदूया वाचा देवीमूर्वशीमुवाच ॥१७-१८॥

तदेवाह - **स्वागतमिति**। हे वरारोहे! ते त्वया स्वागतं हि! आस्यतां उपविश्यतां किङ्करवाम त्वद्विधेया वयमित्यर्थ । मया सह सङ्गच्छस्व सङ्गता भव मौ आवयोः शाश्वती· समा. रतिरस्तु इति ॥१९॥

---

1 MMa भाव 2 ABGJMMa श्रेष्ठो 3 ABGJMMa रेमे सुर° 4 H V °प° 5 H V add निक्षिप्तौ 6 H V रक्ष। 7 A B °के 8 AB °पे 9 AB स्थित

एवमुक्तोर्वश्याह कस्या इति। हे सुन्दर! त्वयि कस्या स्त्रियाः[1] मनो दृष्टिश्च न सज्जेत सर्वस्या अपि मनो दृष्टिश्च सज्जेतै वेत्यर्थः। आसक्तौ हेतुं वदन् विशिनष्टि - यस्य तवाङ्गान्तरं वक्षो रिरंसया रन्तुमिच्छया आसाद्य प्राप्य, नारी न च्यवते ना.याति यद्यस्मादिति वा 'यदङ्गान्तरमासाद्येति पाठान्तरम्। तदा रमा श्रीः शोभा[2] सौन्दर्यलक्ष्मीरिति यावत् स रन्तुमिच्छयेह त्वच्छरीरे आसाद्य यत् यस्य तवाङ्गात् पुनः न च्यवते नापयातीत्यर्थः ॥२०॥

मित्रावरुणशापावसानं भाषाभङ्गमिषेण जिगमिषोस्तस्या भाषाबन्धमाह - एताविति द्वाभ्याम्। हे राजन्! एतावुरणकौ मेषौ न्यासौ निक्षेपरूपौ। न्यस्ताविति पाठे मयेति शेषः। मया त्वदन्तिके निहितावित्यर्थः। मम पुत्रतुल्याविमावित्यभिप्रायः, पुत्रयोर्नीयमानयो र्हृतापत्या चेति च वक्ष्यमाणत्वात् तौ रक्षस्व पालय तद्रक्षणमेवास्म त्सम्माननमित्यभिप्रयेण सम्बोधयति - हे मानदेति। भवता सहाऽहं रंस्ये यावदिमौ भावन् रक्षिता तावदिति शेषः। य श्लाघ्यः स एव स्त्रीणां वर· स्मृतः ॥२१॥

हे वीर! घृतममृतं मम भक्ष्यं स्यात् "अमृतं वा आज्यम्" इति श्रुतेः। मैथुनात् मैथुनकालादन्यत्र काले त्वं विवाससं नग्नं नेक्षे यदा त्वं विवाससं आत्मानं मैथुनादन्यत्र दर्शयिष्यसि तदा गमिष्यामीति भावः। एवं तया कृतं भाषाबन्धनं तथेवास्त्विति महामनाः पुरूरवाः प्रतिपेदे अङ्गीचकार ॥२२॥

तदेवाह - अहो इति। अहो अत्याश्चर्यं तवेवं रूपं सौन्दर्यं, भावोऽभिप्रायविशेषश्च नरलोकविमोहनं नरलोकं विमोहयति तथा तदुभयमिति शेष। अतस्त्वां स्वयमागतां देवीं को नु मनुजो न सेवेत सर्वोऽपि मनुज. सेवेतैवेत्यर्थ. ॥२३॥

तयेति ततस्तया यथायोग्यं रमयन्त्या क्रीडयन्त्या ऊर्वश्या सह पुरुषश्रेष्टः पुरूरवाः सुरा विहरन्त्येषु इति तथा तेषु चैत्ररथप्रभृतिषु[3] वनेषु आदिशब्देन नन्दनपारिभद्रादि सङ्ग्रहः। कामं यथेष्टं रेमे ॥२४॥

विज० आगमने कारणान्तरमाह - मित्रेति ॥१७-२८॥

नौ आवयो· शाश्वती· समाः बहून् संवत्सरान् रति· ग्राम्यविषया क्रीडाऽस्तु ॥१९॥

मनोहरत्वे निमित्तमाह - यदङ्गादिति। रमा यस्य हरेरङ्गान्न याति न च्यवते नित्यश्रितवक्षःस्थलत्वात् सहरिस्तवाश्रयो दृष्ट इत्यन्वयः। लक्ष्मीकान्तस्य सन्निधिपात्रत्वादित्यर्थः ॥२०॥

उरणकौ मेषौ न्यस्तौ निक्षेपकल्पनया स्थापितौ तस्माद्रक्षस्व संरंस्ये सम्यक् त्वया सह रतिं करिष्ये, अस्माकमियमेव व्रतक्लृप्तिरित्याह - श्लाघ्य इति। य श्लाघ्यः कमनीय· स एव स्त्रीणां वरः पतिरित्यन्वयः ॥२१॥

समयं बध्नाति - नेक्ष इति। मैथुनादन्यत्र सुरतसमयमन्तरेण त्वां विवाससं नग्नं नेक्षे न पश्याम्यन्यथेतो गमिष्यामीति शेषः। पुरूरवा उत्तरमाह - तथेतीति। एवमुक्तं तथेति प्रतिपेदे अभ्युपगतवान् ॥२२॥

---

1 AB 'च'। 2 AB omit शोभा 3 A B omit वनेषु

तस्येङ्गितं हर्षोल्लासं दर्शयति - अहो इति। भावं शृङ्गारादिकं न रीयन्त इति नरा, अमरास्तेषां लोकः समूहः, तमपि विमोहयतीति नरलोकविमोहनम्, एवंविधां त्वाम् ॥२३॥

सुराणां विहारो येषु ते तथा तेषु ॥२४॥

रममाणस्तया [1]नित्यं पद्मकिञ्जल्कगन्धया।
तन्मुखामोदमुषितो मुमुदे[2]ऽब्दगणान् बहून् ॥२५॥

[3]आनेतुमुर्वशीमिन्द्रो गन्धर्वान् समचोदयत्।
उर्वशीरहितं मह्यमास्थानं नातिशोभते ॥२६॥

[4]तावुपेत्य महा[5]रात्रौ तमसि प्रत्युपस्थिते।
[6-]उर्वश्युरणकौ[-6] जह्रुर्न्यस्तौ राजनि [7]मायया ॥२७॥

निशम्याक्रन्दितं देवी पुत्रयोर्नीयमानयोः।
हताऽस्म्यहं कुनाथेन नपुंसा वीरमानिना ॥२८॥

यद्विस्रम्भादहं नष्टा हृतापत्या च दस्युभिः।
यश्शेते निशि सन्त्रस्तो यथा नारी [8]तथा पुमान् ॥२९॥

* मुञ्च मुञ्चाश्वपसर बाहू मद्गात्रवेष्टितौ।
अतीव कातरो हातुं मामयं याति लम्पटः ॥

[9-]श्रीशुक उवाच[-9]

इति वाक्सायकैर्विद्धःप्रतोत्रैरिव कुञ्जरः।
निशि निस्त्रिंशमादाय विवस्त्रोऽभ्यद्रवद्रुषा ॥३०॥

ते विसृज्योरणौ तत्र [10]व्यद्योतन्त [11-]स्म विद्युतः[-11]।
आदाय मेषावायान्तं नग्नमैक्षत सा पतिम् ॥३१॥

ऐलोऽपि शयने जायामपश्यन् विमना [12]इव।
तच्चित्तो [13]विक्लबः शोचन् ब्रभ्रामोन्मत्तवन्महीम् ॥३२॥

---

1 ABGJMMa देव्या, 2 ABGJ 'दडेहर्ग 3 ABGJ MMa अपश्यन्नुर्वशी° 4 ABGJ ते उपेत्य 5 ABGHJV रात्रे 6- -6 ABGJMMa उर्वश्या उरणौ 7 ABGJMMa जा° 8 ABGJMMa दिवा * This additional half verse is found only in B H V W Edns and it is commented by Vire Raghava only 9- -9 ABGJMMa omit 10 MMa प्रद्योतन्त , W विद्योतन्ते 11- -11 MMa स्वविद्युता 12 MMa अभूत् 13 ABGJ विह्वल

**श्रीध० रममाण इति**। पद्मकिञ्जल्कस्य गन्ध इव गन्धो यस्यास्तस्या मुखामोदेन मुषित प्रलोभितस्सन् ॥२५॥

**आनेतुमिति**। मह्यं मम ॥२६॥

**ताविति**। महारात्रे मध्यरात्रे। "महानिशा द्वे घटिके रात्रौ मध्यमयामयो " इति स्मृते· ॥२७॥

**निशम्येति**। जिगमिषोस्तस्या परुषोक्तिमाह। हताऽस्मीति सार्धेन। नपुंसा नपुंसकेन ॥२८॥

**यदिति**। यथा नारी तथा सन्त्रस्त शेते ॥२९-३०॥

**ते इति**। विद्युतो विशिष्टद्युतिमन्तः व्यद्योतन्त दीप्तिमकुर्वत। यद्वा। तदैव तडित· प्राकाशन्तेत्यर्थ·। नग्नमैक्षत अतो भाषाभङ्गान्निर्जगामेति ज्ञेयम् ॥३१-३२॥

**वीर० रममाण** इति। पद्मकिञ्जल्कस्य गन्ध इव देहगन्धो यस्यास्तया ऊर्वश्या सह नित्यं रममाण तस्या· मुखामोदेन मुषित प्रलोभितस्सन् बहूनब्दगणान् मुमुदे ॥२५॥

**आनेतुमिति**। तत कदाचिदिन्द्र ऊर्वश्या रहितं मह्यं ममास्थानं नातीव शोभते इति विचार्येति शेष·। ऊर्वशीमानेतुं गन्धर्वान् समचोदयत् प्रेषयामास ॥२६॥

**त** इति। ततस्ते गन्धर्वा· महारात्रौ[1] मध्यरात्रे "महानिशा द्वे घटिके रात्रौ मध्यमयामयो " इति स्मृति·। तमसि अन्धकारे निद्रायां वा प्रत्युपस्थिते सम्प्राप्ते सति राजनि पुरूरवसि न्यस्तौ पाल्यत्वेन निहितौ ऊर्वश्या उरणकौ मेषौ मायया जहु· अपहृतवन्त ॥२७॥

**निशम्येति**। तदा नीयमानयो· पुत्रयोरुरणयोराक्रन्दितं रोदनं निशम्य आकर्ण्याऽऽहेति शेष·। जिगमिषोस्तस्या· परुषोक्तिमाह - हताऽस्मीति सार्द्धेन। कुत्सितनाथेन नपुंसा नपुंसकेन अवीरमात्मानं वीरं मन्यत इति वीरमानी तेनानेनाहं हताऽस्मि ॥२८॥

यस्य अस्य कुनाथस्य विस्रम्भात् विश्वासादहं दस्युभिर्हृते अपत्ये पुत्रौ यस्याः सा नष्टप्राया अभवं यथा नारी दिवा अह्नि सन्त्रस्ता सती शेषे तथा योऽयं पुमानपि शेते ॥२९॥

अत्रान्तरा क्वचित्पुस्तकेषु - "मुञ्च मुञ्चाश्वपसर बाहू मद्गात्रवेष्टितौ। अतीव कातरो हातुं मामयं याति लम्पटः"॥ इत्यधिक श्लोक पठ्यते। तत्रायमपि तस्या· परुषोक्तिरूप एव मद्गात्रे वेष्टितौ बाहू मुञ्च मुञ्च अपगच्छ अयं मां हातुं कातरो भीत· लम्पटश्च यातीति निन्दा। इतीदृशैर्वाग्रूपै सायकैरिषुभि प्रतोदैरङ्कुशै कुञ्जर इव विद्ध· पुरूरवा निस्त्रिंशं खड्गमादाय

1 AB त्रे

विवस्त्रो नग्नः रुषा निशि रात्रौ अभ्यद्रवत् ॥३०॥

तदा ते गन्धर्वाः उरणौ तत्र विसृज्य विद्युत विद्युत इव विद्योतन्ते स्म। यद्वा, विसृज्य जग्मुरिति शेषः। तदा विद्युतस्तटितोऽपि विद्योतन्ते स्म इत्यर्थः। तदा मेषौ आदाय आगच्छन्तं नग्नं पतिं सा ऊर्वशी ददर्श ततो भाषाभङ्गान्निर्जगामेति च ज्ञेयम् ॥३१॥

तत ऐल पुरूरवा शय्यायां जायामपश्यन् दुःखितमनास्तस्यामेव चित्तं यस्य स विक्लबः अधृष्ट शोचन् उन्मत्तवन्महीं बभ्राम ॥३२॥

**विज०** मह्यं क्लृप्तं ममास्थानं सभा एवं मत्वा गन्धर्वान् समचोदयत् ॥२५,२६॥

जाययोर्वश्या ॥२७॥

नपुंसा नपुंसकेन निर्वीर्येणेत्यर्थः ॥२८॥

हृतापत्या हृतपुत्रा, यो निशि, नारी यथा सन्त्रस्ता शेते, दिवा पुमान् पुरुषशक्तिमती तथा संत्रस्तः शेते, अहि पुरुषः ॥२९॥

इत्येवं वाक्सायकैः वचनबाणैर्विद्धस्ताडित प्रतोदैरङ्कुशैः कुञ्जेषु रन्तुं शीलमस्येति कुञ्जर ॥३०॥

तत्र तस्मिन् समये ते गन्धर्वा स्वविद्युता प्रद्योतन्त प्राकाशन्त आलोकविषया आसन्नित्यर्थः ॥३१॥

बभ्राम "भ्रमु अनवस्थाने" इति धातुः पर्यटनं कृतवान् ॥३२॥

**स तां वीक्ष्य कुरुक्षेत्रे [1]रहस्यन्याश्च[1] तत्सखीः।**
**पञ्च प्रहृष्टवदनः प्राह[2] सूक्तं पुरूरवाः ॥३३॥**

**[3]अहो जाये तिष्ठ तिष्ठ घोरे न त्यक्तुमर्हसि।**
**[4]मन्त्रा अद्याप्यनिवृत्ता[4] वचांसि कृ[5]णवावहै ॥३४॥**

**सुदे[6]होऽयं पतत्य[7]द्य देवि दूरं हृतस्त्वया।**
**खादन्त्येनं वृका गृध्रास्त्वत्प्रसादस्य नास्पदम् ॥३५॥**

---

1--1 ABGJMMa सरस्वत्याश्च 2 ABGJ °ना 3 W आयि 4--4 ABGJ मा त्मद्याप्यनिर्वृत्य , HV मन्त्रमद्याप्यनिर्वर्त्य 5 HV गृ° 6 MMa °वो° 7 ABGJMMa °त्र

उर्वश्युवाच

मा मृथाः[1] पुरुषोऽसि त्वं मा स्म त्वाद्युर्वृका इमे।
क्वापि सख्यं न वै स्त्रीणां वृकाणां हृदयं यथा ॥३६॥

स्त्रियो ह्यकरुणाः क्रूरा दुर्मर्षाः प्रियसाहसाः।
घ्नन्त्यल्पार्थेऽपि विस्रब्धं पतिं भ्रातरमप्युत ॥३७॥

विधायालीकविस्रम्भमज्ञेषु [2-]त्यक्तसौहृदाः[-2]।
नवं नवमभीप्सन्त्यः पुंश्चल्यः स्वैरवृत्तयः ॥३८॥

संवत्सरान्ते[3] हि भवानेकरात्रं मयेश्वर।
वत्स्यत्यपत्यानि च ते भविष्यन्त्यपराणि भोः[4] ॥३९॥

अन्तर्वत्नीमुपालक्ष्य देवीं स प्रययौ पुरीम्[5]।
पुनस्तत्रागतो[6]ऽब्दान्ते[7] ह्यूर्वशीं वीरमातरम् ॥४०॥

**श्रीध० स** इति। तस्याः सखीश्च पञ्च वीक्ष्य। सूक्तं शोभनं वचनम्। **अहो जाये** इत्यादि ॥३३॥

तदेवार्थत आह - **अहो** इति द्वाभ्याम्। मन्त्रं[8] अनिर्वृत्य मन्त्रकृतां[9] निर्वृतिमप्राप्य। मामिति[10] पाठान्तरे मां निर्वृतिमगमयित्वा मन्त्राननुक्त्वेति वा। वचांसि कृणवावहै[11] गोष्ठीः करवावहै ॥३४॥

**सुदेह** इति। सुदेहः अति कमनीयोऽयं मम देहः ॥३५॥

"पुरूरवो मा मृथाः" इत्यादि तस्याः सूक्तं तदप्यर्थत आह - **मा मृथा** इति चतुर्भिः। मा म्रियस्व, पुरुषोऽसि त्वम् अतो धैर्यमावहेति भावः। इमे वृकाः प्रसिद्धा, इन्द्रियाणि वा, त्वा इति त्वां, मा स्म अद्युः न[12]भक्षयेयुः। इन्द्रियवशो मा भवेत्यर्थः ॥३६॥

**स्त्रिय** इति। प्रिये निमित्ते साहसं यासां ताः ॥३७-३८॥

तं सान्त्वयति - **संवत्सरान्त** इति ॥३९॥

---

1 TW मृषा 2 MMa °ष्वत्यन्तसौख्यदा 3 MMa °रान्तेऽपि 4 HMMaV भो ! 5 ABGJ पुरम् 6 ABGJMMa °त्र गतो°, W °त्रागता° 7 ABGJMMa उ° 8 ABJ omit मन्त्रं 9 ABJ मत्कृता 10 ABJ omit मामिति 11 H V गृ° 12 ABJ omit न

**अन्तर्वत्नीमिति**। अपराणीति वचनादन्तर्वत्नीमुपालक्ष्य ज्ञात्वा ॥४०॥

**वीर०** एवं पृथ्वीमटन् स पुरूरवाः कुरुक्षेत्रे सरस्वत्यास्तीरे तामूर्वशीं तत्सखीश्च पञ्च पश्यन् प्रहृष्टं वदनं यस्य सः सूक्तं शोभनं वचः प्राह ॥३३॥

तदेवाह - **अयीति** द्वाभ्याम्। अयीत्यव्ययम् सम्बोधनार्थकम् अयि जाये हे भार्ये! तिष्ठ तिष्ठ घोरे दुःखे त्यक्तुं पातयितुं, मामिति शेषः। नार्हसि अद्यापि मन्त्राः रहस्सल्लपाः अनिर्वत्ताः असमाप्ताः वचांसि कृणवावहै गोष्ठीं करवावहै कृपणवादसहितसल्लापविशेषमावाङ्करवावेत्यर्थं ॥३४॥

हे देवि! त्वया हेतुभूतया दूरं हृतः नीतः सुदेहः कमनीयो देह॰, ममेति शेषः। अत्र पतति एवं सति तं देहं वृकाः गृध्राश्च खादन्ति खादिष्यन्ति एवञ्च त्वत्प्रसादस्यास्पदं विषयो न भविष्यति इदं तत्प्रसादं पुनः सम्भावयतो राज्ञो वचः, सुदेवोऽयमिति पाठान्तरं तदा अयमर्थः, पुरूरवाः स्वयमेवात्मानमपरोक्षवन्निर्दिशति, सुदेवः पुरूरवश्शरीस्थश्चेतनो लक्षितः वृकाः इन्द्रियाणि बाधकत्वात्, गृध्राः "गृधू अभिकाङ्क्षायाम्" लोलुपा इत्यर्थः। तच्छब्द ऊर्वशी विषयः ॥३५॥

अथोर्वशी प्राह - **मामृषेति**। त्वं मृषापुरुषः मिथ्याप्रतिज्ञ॰पुरुषो मासि माभूः धीरो भवेत्यर्थ॰। मा मृथा इति पाठे मा म्रियस्वेत्यर्थः। एवञ्चेमे वृकास्त्वां मास्माद्युः मा खादिषुः न खादिष्यन्तीत्यर्थ। क्वापि स्त्रीणां सख्यं न स्थिरं यथा वृकाणां, तद्वत् स्त्रीणामपि हृदयम् ॥३६॥

तदेव प्रपञ्चयति - अकरुणाः कृपारहिता॰ क्रूरस्वभावाश्च दुर्मृष्टाः क्षमारहिताः प्रिये निमित्ते साहसं यासां ताश्च, हि यस्मादल्पाऽर्थेऽल्पप्रयोजने निमित्ते विस्रब्धं विश्वस्तं पतिं भ्रातरं वा घ्नन्ति ॥३७॥

**विधायेति**। किञ्चालीकविस्रम्भं कपटविश्वासमज्ञेषु स्वाभिप्रायानभिज्ञेषु विधाय त्यक्तं सौहृदं याभिस्तथाभूताः नवं नवं कान्तमभीप्सन्त्यः कामयमानाः पुंश्चल्यः व्यभिचारिण्यः स्वैरा स्वच्छन्दा वृत्तिर्यासां ताश्च भवन्ति अतो मत्सख्यं त्यजेति भावः ॥३८॥

**संवत्सरेति**। हे ईश्वर भर्त॰! भवान् संवत्सरान्ते एकस्यां रात्र्यां मया सह वसतु तथा सति अपराण्यपि अपत्यानि नौ आवयोर्भविष्यन्ति अपराणीति वचनात् स्वस्या अन्तर्वत्नीत्वमावेदितम् ॥३९॥

**अन्तर्वत्नीमिति**। तद्वचनात्तां देवीमन्तर्वत्नीं गर्भिणीमुपालक्ष्य स पुरूरवाः स्वां पुरीं ययौ। ततः पुनः संवत्सरान्ते तत्र राज्ञः समीपमागता बभूव ततस्तामूर्वशीं वीरस्य पुत्रस्य मातरं पुत्रेण सहागतामिति भाव॰ ॥४०॥

**विज०** तस्या ऊर्वश्याः पञ्च सखीः पुरूरवाः ऊर्वशीं दृष्ट्वा किं चकारेति तत्राह - प्राहेति। किं तत्सूक्तमित्यर्थतः तत्प्रतिगृह्णाति, अहो जाये तिष्ठेति। "हये जाये मनसा" (ऋक्.सं 10-95-1) इत्यारभ्य "हविषा यजाति, स्वर्ग उत्वमपि मादयासे" (ऋक्. सं 10-95-18) इत्यन्तमुत्तरप्रत्युत्तरात्मकं सूक्तमुर्वशीवशीकरणाभिप्रायेण प्राहेत्यर्थः। हये अहो जाये मनसा तिष्ठ मनःपूर्वकं पूर्ववत्तिष्ठ मां त्यक्तुं नार्हसीति शेषः। हे घोरे ! सुरतशौण्डे! ये परतरे अहन् अहनि उत्तरोत्तरत्र दिवसे [1] मया सुखं करं च न कुर्वन्त्येव, एते नौ आवयोः सुरतमन्त्राः करुणोक्तिपूर्वकाः नु अद्याप्यनुदितासः अनिवृत्ता अपरिसमाप्ताः इति यस्मादतो नैतदुचितमतो मिश्राणि सल्लापलक्षणानि वचांसि कृणवावहै करवावहै ॥३३-३४॥

सारसंग्रहाभिप्रायेण मध्ये काश्चन ऋचो विहाय "सुदेवोऽद्य प्रपतेत्" इत्येतामृचमर्थत उदाहरति, सुदेव इति। हे देवि! योऽहं परावतं परवन्तं, दीर्घश्छान्दसः। दूरं देशं हृतः त्वया सह परमां रतिं गन्त वै उ गन्तुमेव तस्य मे अयं सुदेवः गतिलक्षणज्ञानसाधनं शरीरं, अत्र कुरुक्षेत्रे अस्यामवस्थायां वा प्रपतेत् प्रपतिष्यति, कुतः अनावृत् आधाररहितः। अथ पतनानन्तरं निर्ऋतेर्भूमेरुपस्थे पृष्ठे शयीत पतेत्। अथ निर्जीवमेनं शरीरं रभसासः भक्षणसम्भ्रमाकुलाः वृका अद्युः खादन्ति, पतित्वा शयित्वापि कथंश्चित् सप्राणं चेद् वृका इन्द्रियाणि खादन्ति इति "सुदेवा अद्य प्रपतेदनावृत् परावतं परमां गन्तवा उ अधा शयीत निऋतेरुपस्थेऽधैनं वृका रभसासो अद्युः" (ऋक्. सं 10-95-14) इति। हये जायेत्यस्या उत्तरं किमेतावाचेति तवैतया वाचा किं कृणवै किं कुर्वः आवयोः पूर्ववत् सङ्गमानुपपत्तेः, किं निमित्तं तत्राह - अहमिति। अहमुषसामग्र्येव प्राक्रमिषं यथा प्रथमोषसः अतिक्रान्तत्वात् पश्चात्तनानामुषसां योगो न घटते तथाऽऽवयोरपीत्यर्थः ॥३५॥

तर्हि अहं किं करोमीति तत्राह - पुरूरव इति। हे पुरूरवः। पुनः पश्चादस्तं गृहं परेहि गच्छ, इदानीमेव कर्तव्यं त्वयेत्यर्थः। "अस्तमेयाय" इति श्रुतेः। किमर्थं पश्चाद् गमनमिति तत्राह - दुरापनेति। यथा वातो वायुः ग्रहीतुमशक्यः तथाऽहमपि दुरापना दुर्ग्रहेत्यर्थः। इति मृदुवचनोत्तरेणायं गृहं न यातीत्यभिसन्धाय कठिनोत्तरेण निवर्तयिष्यामीति मत्वा "पुरूरवो मा मृथा मा प्रपत्वो मा त्वा वृकाशो अशिवास उक्षन्" न वै स्त्रैणानि सख्यानि सन्ति, सालावृकाणां हृदयानि" (ऋक् सं 10-95-15) इत्येतदर्थं उत्तरत्वेनोर्वशी वक्ति - मा मृथा इति। हे पुरूरवः। त्वं मा मृथा मरणं न प्राप्नुहि, गूढाक्षेपं करोति पुरुष इति पुल्लिङ्गशक्तिमत्वेन बलिष्ठत्वात्, कामनिमित्तं मरणं तव न युक्तम् अबलायाश्चेदबलत्वेन कथञ्चित्सम्भावितं स्यादित्यर्थः। अनेनार्थतः मा प्रपत्व इत्येतद्विवृतं भवति प्रपत्व इति पततेर्यङ्लुगन्तं रूपं, कामपारवश्येन भृशं पतितो माभूः, अभ्यासस्य दीर्घाभावश्छान्दसः। इमे अशिवासः अशिवाः अशुद्धिहेतवो वृका, वृकासो त्वा त्वां मोक्षन् उक्षतिरत्र भक्षणार्थः। मास्माद्युर्न लालाजलेन प्रोक्षयित्वा भक्षयेयुरित्यर्थः। स्त्रैणानि स्त्रीसम्बन्धीनि सख्यानि - "ददाति प्रतिगृह्णाति गुह्यमाख्याति पृच्छति। भुङ्क्ते भोजयते चैव षड्विधं

1--1 AB मय सुखंकरश्च

स्नेहलक्षणम्।" इति स्नेहलक्षणानि न सन्ति, सदातनानि न भवन्ति, वै क्वापि यथेत्यनेन सालावृकाणामिति लुप्तोपममिति सूचयति, हृदयमिति जातावेकवचनं, यथा सालावृकाणां हृदयानि एता एतान्यपि स्त्रीणां हृदयानि तथेत्यर्थः ॥३६॥

एते इत्युक्तमेव विवृणोति - स्त्रिय इति। "किं क्रूरं स्त्रीहृदयं पुनरपि किं क्रूरमङ्गनाहृदयम्" इत्येतद्धि शब्देन दर्शितं, प्रिये प्रेष्ठेऽपि साहसं बलात्कारलक्षणं कर्म यासां तास्तथा एतदेव विविच्य दर्शयति घ्नन्तीति। विस्रब्धम् विश्वस्तम् ॥३७॥

अलीकविस्रम्भं कपटविश्वासं अज्ञेषु पुरुषेषु अत्यन्तसौख्यदा तत्तत्कालोपभोग्यसुखप्रदानत्वादात्यन्तिकसुखदाः। पुंश्चल्य इत्यस्य विवरणं स्वैरवृत्तय इति। इष्टजनशिक्षामनुपाकर्ण्य स्वेच्छानियतमद्यपानदिवृत्तयः ॥३८॥

मया सहेकरात्रं वत्स्यति सुरतलीलामनुभविष्यतीत्यर्थः ॥३९-४०॥

उपलभ्य मुदा युक्तः समुवास तया निशाम्[1]।
अथैनमुर्वशी प्राह कृपणं विरहातुरम् ॥४१॥

गन्धर्वानुपधावेमांस्तुभ्यं दास्यन्ति मामिति।
तस्य संस्तुवतस्तुष्टा अग्निस्थालीं ददुर्नृप।
ऊर्वशीं मन्यमानस्तां सो[2]ऽबुध्यत[3] चरन् वने ॥४२॥

स्थालीं न्यस्य वने गत्वा [4]गृहानाध्यायतो[4] निशि।
त्रेतायां संप्रवृत्तायां मनसि त्रय्यवर्तत ॥४३॥

स्थालीस्थानं गतोऽश्वत्थं शमीगर्भं विलक्ष्य सः।
तेन द्वे अरणी कृत्वा [5]ह्यूर्वशीलोककाम्यया ॥४४॥

ऊर्वशीं मन्त्रतो ध्यायन्नधरारणिमुत्तराम्।
आत्मानमुभयोर्मध्ये यत्तत् प्रजननं [6]विदुः ॥४५॥

तस्य [7]निर्मथनाज्जातो जातवेदा विभावसुः।
त्रय्या स विद्यया राज्ञा पुत्रत्वे कल्पितस्त्रिवृत् ॥४६॥

---

1 MMa °शम् 2 MMa ना° 3 W °ध्यतिच° 4- -4 H V गृहास्ता ध्यायतो , MMa गृट्हानध्युषितो , W गृहास्तत्रोषितो 5 ABGJMMa उ° 6 ABGJMMa प्रभु 7 ABGJ °न्थ°

**श्रीध० गन्धर्वानिति**। अनेनाग्निना कर्म कृत्वा तद्वशादूर्वशीं प्राप्स्यतीत्यभिप्रायेणाग्निस्थालीं ददुः। स तु तां स्थालीमेवोर्वशीं मन्यमानस्तया सहितो वने विचरन् नेयमूर्वशी किं त्वग्निस्थालीत्यबुध्यत ॥४१-४२॥

**स्थालीमिति**। ततश्च। तां स्थालीं वने स्थापयित्वा गृहान्गत्वा निशि नित्यं तामेव आध्यायतस्तस्य[1] मनसि त्रेतायां त्रयी अवर्तत कर्मबोधकं वेदत्रयं प्रादुरभूत् ॥४३॥

**स्थालीति**। ततः स्थालीस्थानं गतः[2] सन् तत्र[3] शम्या गर्भे जातमश्वत्थं विलक्ष्यास्मिन्[4] अश्वत्थे असावग्निरस्तीति विशेषेण लक्षयित्वा तेनाश्वत्थेन द्वे अरणी कृत्वाऽग्निं ममन्थेति शेषः। "शमीगर्भादग्निं ममन्थ" इति श्रुतिः ॥४४॥

मथनप्रकारमाह। **ऊर्वशीमिति**। अधरारणिमूर्वशीं ध्यायन्नुत्तरारणिमात्मानं ध्यायन्नुभयोः अरणयोः[5] मध्ये यत्काष्ठं तत्प्रजननं पुत्रं ध्यायन्। तथा च मन्त्रः। "उर्वश्या आयुरसि पुरूरवाः" इति ॥४५॥

**तस्येति**। तस्य तेन कृतान्निर्मथनाद्विभावसुरग्निर्जातः। कथंभूतः? जातं वेदो धनं भोग्यं यस्मात्। स च त्रय्या विद्यया विहितेनाधानसंस्कारेण। त्रिवृदाहवनीयादिरूपः सन् राज्ञा पुरूरवसा पुत्रत्वे कल्पितः। पुण्यलोकप्रापकत्वात् ॥४६॥

**वीर०** उपलभ्य दृष्ट्वा यद्वा पुत्रवतीं प्रत्यभिज्ञाय हर्षेण युक्तो राजा तया सह तां निशाम् उवास। अथैनं विरहातुरं विश्लेषासहिष्णुं पुरूरवसम् ऊर्वशी प्राह ॥४१॥

किमिति? त्वमिमान् गन्धर्वानुपधा स्तुत्या प्रीतान् कुरु ते च तुभ्यं मां दास्यन्ति मल्लोकप्राप्तिसाधनं दर्शयिष्यन्तीति ततो हे नृप! तस्य पुरूरवसः संस्तुवतः सतः गन्धर्वाः प्रीतास्सन्तः तस्मै अग्निस्थालीम् अग्न्याधनार्थं पात्रविशेषं ददुः ततस्तामग्नि स्थालीमूर्वशीप्राप्तिसाधनभूतां मन्यमानः स पुरूरवाः वने विचरन् अबुध्य अज्ञात्वेत्यर्थः ॥४२॥

स्थालीं वन एव न्यस्य निधाय गृहान् गत्वा निशि रात्रौ तत्रोवास अथ त्रेतायां सम्प्रवृत्तायां त्रेतायुगारम्भे प्रवृत्ते सति पुरूरवसो मनसि त्रयी वेदः अवर्तत प्रादुरभूत् ॥४३॥

ततः स पुरूरवाः स्थालीस्थानं गतस्सन् शम्या गर्भे जातमश्वत्थं विलक्ष्य स्वमनसि परिवर्त्तमानया "शमीगर्भादग्निं मन्थति" इति श्रुत्या शमीगर्भस्याश्वत्थस्याग्निमथनसाधनतामवबुध्येत्यपि ज्ञेयम्। तेनाश्वत्थेन द्वे अरणी मन्थनकाष्ठे कृत्वा ऊर्वशीलोकेच्छया ॥४४॥

मन्त्रतः मथनप्रकाशक मन्त्रप्रयोगपूर्वकमधरारणिमूर्वशीम् उत्तरारणिं स्वात्मानम् उभयोररण्योर्मध्ये यत्काष्ठं विदुः तत्प्रजननं पुत्रं ध्यायन् ममन्थेति शेषः ॥४५॥

---

1 H V ध्या° 2 B प्राप्त 3 ABJ omit तत्र 4 ABJ omit अश्वत्थे 5 ABJ omit अरण्योः

तस्य तेन कृतान्निर्मथनाद्विभावसुः अग्निर्जातः, कथम्भूतः? जातं वेदो भोग्यं यस्मात्तथाभूतः स विभावसुःत्रय्या विद्यया तद्विहितेन आधानसंस्कारेण त्रिवृदाहवनीयादिरूपस्सन् राज्ञा पुरूरवसा पुत्रत्वे कल्पितः पुण्यलोकप्रापकत्वात् ॥४६॥

**विज०** समुवास सम्भोगलक्षणं सुरतमनुभूतवान्। 'स्त्रियो ह्यकरुणा' इत्यारभ्य 'तयाऽनिशमित्यन्तेन' उक्तमिति ज्ञातव्यम् ॥४१॥

उपधाव शरणं गच्छ "धावुगतिशुद्ध्योः" त्रिकरणशुद्ध्या स्तुतिं कुर्वित्यर्थः। "इति त्वा देवा इम आहुरैल! यथेमे तद्भवसि मृत्युबन्धुः प्रजात देवान् हविषा यजाति स्वर्ग उत्वमपि मादयास" इति(ऋ. कृ. सं 10-95-18) अग्निस्थालीम् अग्निस्थापनयोग्यपात्रम् उर्वशीं मन्यमानो वने चरन् तामुर्वशीं नाबुध्यत नेयमुर्वशी किं न्विदमग्निस्थालीति ज्ञातवानित्यर्थः ॥४२॥

स पुरूरवाः अग्निस्थालीं वने न्यस्य निक्षिप्य निशि गृहान् गत्वा तां निशामध्युषितोऽभूत। अथ परस्मिन् दिवसे त्रेतायां संप्रवृत्तायां त्रेतायुगारम्भसमये जाते सति उर्वशीं चिन्तयतस्तस्य राज्ञो मनसि अग्न्याधानादि साङ्गयज्ञप्रकाशवेदत्रयं प्रकाशितमभूदित्यर्थः ॥४३॥

तदर्थं विचार्याग्निस्थालीप्रदानाभिप्रायं ज्ञात्वा अग्निस्थालीस्थानं गतः तत्र पुरूरवाः शमीगर्भं शमीवृक्षेणाधिष्ठितम् अश्वत्थं विलक्ष्य विशेषतो दृष्ट्वा स्थालीशमीजाताग्निस्त्वश्वत्थो जात इति विज्ञाय शमीगर्भमश्वत्थं छित्वा तेन शमीगर्भाश्वत्थेन द्वे अरणीकृत्वा उत्तराधरारणिभेदेन निधाय, उर्वशीलोकप्राप्तीच्छया ॥४४॥

फलविशेषार्थं जनिष्ठो "अपोनर्यः सुजातः प्रोर्वशीतिरतदीर्घमायुः" इति मन्त्रार्थत्वेनोर्वशीं ध्यायन् उर्वशीमधरारणिम् आत्मानं पुरूरवशब्दोपलक्षितमुत्तरारणिं च चिन्तयन् उभयोररण्योर्मध्ये यत्प्रजननसाधनं तच्च मनसा ध्यायन्नरणिं निर्ममन्थेति शेषः। प्रभुरित्यनेन सर्वध्यानादिसामर्थ्यं दर्शयति ॥४५॥

मथितमाह - तस्येति। तस्य राज्ञो निर्मथनाज्जातवेदा जात इति तत्प्रभृति जातवेदानामग्नेरिति सूचितम्। स विभावसुरग्निस्त्रय्या विद्यया वेदत्रयसंज्ञया प्रतिपाद्यो राज्ञा पुत्रत्वे कल्पित इत्यन्वयः। त्रिभिराहवनीयादि रूपैर्वर्तत इति त्रिवृत् अध्यात्मविवक्षायाम् अकारोकारमकारसमाहारोङ्काररूपेण वर्तत इति त्रिवृत् ॥४६॥

**तेनायजत यज्ञेशं भगवन्तमधोक्षजम्।**
**उर्वशीलोकमन्विच्छन् सर्वदेवमयं हरिम् ॥४७॥**

**एक एव पुरा वेदः प्रणवः सर्ववाङ्मयः।**
**देवो नारायणो नान्य एकोऽग्निर्वर्ण एव च ॥४८॥**

**पुरूरवस एवासीत् त्रयी त्रेतामुखे नृप।**
**अग्निना प्रजया राजा लोकं गान्धर्वमेयिवान् ॥४९॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
नवमस्कन्धे चतुर्दशोऽध्याय ॥१४॥

**श्रीध०** तदाह । **तेनेति** ॥४७॥

नन्वनादिवेदत्रयबोधितो ब्राह्मणादीनामिन्द्राद्यनेकदेवतायजनेन[1] स्वर्गप्राप्तिहेतु· कर्ममार्गः कथं सादिरिव वर्ण्यते तत्राह - **एक एवेति** द्वाभ्याम्। पुरा कृतयुगे सर्ववाङ्मय· सर्वासां वाचां बीजभूत· प्रणव एक एव वेद·, देवश्च नारायण एक एव। अग्निश्चैक एव लौकिक·। वर्णश्चैक एव हंसो नाम ॥४८॥

**पुरूरवस इति**। वेदत्रयी तु पुरूरवस· सकाशादासीत्। एयिवान्प्राप। अयं भावः। कृतयुगे सत्त्वप्रधाना· प्रायशः सर्वेऽपि ध्याननिष्ठाः रजःप्रधाने तु त्रेतायुगे वेदादिविभागेन कर्ममार्गप्रकटो बभूवेति ॥४९॥

इति श्रीमद्भागवते महापुराणे
श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्यख्यायां नवमस्कन्धे चतुर्दशोऽध्याय ॥१४॥

**वीर०** तदाह - **तेनेति**। तेन विभावसुना यज्ञफलदं सर्वदेवताशरीरकम् आश्रितार्तिहरं भगवन्तमधोक्षजमूर्वशी लोकङ्कामयमान· पुरूरवा अयजत आराधितवान् ॥४७॥

नन्वनादिवेदबोधितो ब्राह्मणादीनामिन्द्राद्यनेकदेवतायजनेन स्वर्गप्राप्तिहेतुः कर्ममार्गः कथमाधुनिकः स्यादिति वर्ण्यते? तत्राह - **एक एवेति** द्वाभ्याम्। पुरा कृतयुगे सर्वासां वाचां बीजभूत· प्रणव एक एव वेदः, देवश्च नारायण एव एक नान्यः, अग्निश्चैक एव लौकिक·, वर्णश्चैक एव हंसाख्य ॥४८॥

हे नृप! त्रयी वेदत्रयं तु त्रेतामुखे पुरूरवस सकाशादेवासीत्। अयम्भावः कृतयुगे सत्त्वप्रधानाः प्रायशः सर्वेऽध्यात्मनिष्ठाः[2], रज·प्रधाने तु त्रेतायुगे वेदादि विभागेन कर्ममार्ग पुरूरवस· सकाशात्प्रकटो बभूवेति, ततो राजा पुरूरवाः अग्निरूपया प्रजया पुत्रेण हेतुभूतेन गन्धर्वलोकमेयिवान् प्राप ॥४९॥

---

1 ABJ 'वय' 2 TW omit अध्यात्मनिष्ठा

इति श्रीमद्भागवते नवमस्कन्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां चतुर्दशोऽध्यायः ॥१४॥

**विज०** तेन त्रिवृताऽग्निना ऊर्वशीसालोक्यं सर्वदेवमयं सर्वदेवोत्तमम् ॥४७॥

पुराकृतैः "अकारो वै सर्वा वाक्" इति सर्ववाङ्मयः प्रणवोऽप्येकः ॥४८॥

त्रयी त्रिप्रकारा अग्निना प्रजया, पुत्रत्वेन कल्पितेनाग्निना ॥४९॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
नवमस्कन्धे चतुर्दशोऽध्यायः ॥१४॥

# पञ्चदशोऽध्यायः

## [1-]श्रीशुक उवाच[-1]

ऐलस्य चोर्वशीगर्भात् षडासन्नात्मजा नृप।
आयुः श्रुतायुः सत्यायू रयोऽथ विजयो जयः ॥१॥

श्रुतायोर्वसुमान् पुत्रः सत्यायोस्तु[2] श्रुतञ्जयः।
रयस्य[3] सुत एकश्च[4] जयस्य तनयोऽमितः ॥२॥

भीमस्तु विजयस्याथ काञ्चनो होत्रकस्ततः[5]।
तस्य जह्नुःसुतो गङ्गां गण्डूषीकृत्य योऽपिबत्।
[6-]जह्नोस्तु पुरुस्तत्पुत्रो[-6] [7]बलाकश्चात्मजोऽजकः[-7] ॥३॥

ततः कुशः कुशस्यापि [8-]कुशाम्बुर्धूर्तयो[-8] वसुः।
कुशनाभश्च चत्वारो गाधिरासीत् कुशाम्बुतः[9] ॥४॥

तस्य सत्यवतीं[10] कन्यामृचीकोऽयाचत द्विजः।
वरं विसदृशं[11] दृष्ट्वा गाधिर्भार्गवमब्रवीत् ॥५॥

एकतः श्यामकर्णानां हयानां चन्द्रवर्चसाम्।
सहस्रं दीयतां शुल्कं कन्यायाः [12-]कुशिका वयम्[-12] ॥६॥

इत्युक्तस्तन्मतं[13] ज्ञात्वा गतः स वरुणान्तिकम्।
आनीय दत्त्वा तानश्वानुपयेमे वराननाम्[14] ॥७॥

स ऋषिः प्रार्थितपत्न्या श्वश्र्वाचापत्यकाम्यया।
श्रपयित्वोभयैर्मन्त्रैश्चरुं स्नातुं गतो मुनिः ॥८॥

---

1--1 HTVW omit 2 ABGJMMa °श्च 3 MMa °स्याद्गसत 4 MMa °स्तु 5 TW °तृ° 6--6 MMa जह्नो पुरुस्तस्य पुत्रो 7--7 HV बालकश्चाऽजकोयत 8--8 ABGJ MMa कुशाम्बु स्तनयो ; B कुशाम्बुर्मूर्तयो 9 ABGJMMa °म्बुज 10 W °चि° 11 ABGJMMa °त्त्वा 12 HV कौशिका वयम्, MMa कुशिकाऽन्वय। 13 T W °न्मति° 14 MMa °रू°

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

ततः पञ्चदशे गाधिरैलपुत्रान्वयेऽजनि। **यद्दौहित्रसुतो रामः** कार्तवीर्यमहन् रुषा ॥

यद्वा - उक्ताः पञ्चदशे वंशा श्रुताया· प्रमुखोत्थिताः। अर्जुनं गाधिजा पौत्रो रामो हन्तेति चेरितम्॥

सुग्रहत्वाय अल्पादिक्रमेण श्रुतायुप्रभृतीनां षण्णां वंशानाह - **श्रुतायोरित्यादिना**। एक एकसंज्ञ । अमितस्तत्संज्ञ· ॥१,२॥

**भीमास्त्विति**। जह्नो· पुरुस्तस्य [1]बालकस्तस्याजकः ॥३,४॥

गाधेः पुत्रो विश्वामित्रो ब्रह्मर्षिरभूदित्युत्तराध्यायान्ते वक्ष्यति '**गाधेरभून्महातेजाः**' इत्यादिना। तत्र तावत्तदुपोद्घातत्वे भृगुवंशसम्भवस्य ऋचीकस्य [2]चरित्रं प्रसक्तनुप्रसक्तं परशुरामावतार**चरितादिकं**[3]चाह - **तस्यं सत्यवतीमित्यादिना** । विसदृशमननुरूपम्। भार्गवम् रुचीकम् ॥५॥

दक्षिणवामयोरेकत श्याम [4]कर्णो येषाम्। सर्वस्मिन्नङ्गे चन्द्रस्येव वर्चो येषाम्। न चेदमपि पर्याप्तमस्मत्कन्याया·। यतः [5]कुशिकाः कौशिका वयम् ॥६,७॥

**स इति**। उभयैर्मन्त्रैः, पत्न्यै ब्राह्मैर्मन्त्रैः, श्वश्र्वे तु क्षात्रैमन्त्रैरित्यर्थः ॥८॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

ऐलस्य पुरूरवसः ऊर्वशीगर्भात् संवत्सरान्ते सकृद्रात्रौ सङ्गताया उर्वश्या उदरात्, हे नृप! षडात्मजा आसन् ते च आय्वादिसंज्ञाः ॥१॥

**श्रुतायोरिति**। तत्र श्रुतायुप्रभृतीनां षण्णां वंशानल्पादिक्रमेणाह - श्रुतायो पुत्रो वसुमान् सत्यायो· पुत्रस्तु धनञ्जयः श्रुतञ्जयेति पाठान्तरं एकसंज्ञश्चेति द्वौ पुत्रौ। जयस्य तु तनयो विभुः अमित इति पाठान्तरं तदा तत्संज्ञाः ॥२॥

विजयस्य तु भीमः पुत्रः तस्य तु काञ्चन· आयोस्तु पुत्रा· सप्तदश वक्ष्यत्ने तत काञ्चनात् वसुमतो वा होतृको जज्ञ इति शेषः। तस्य होतृकस्य सुतो जह्नुः। तं विशिनष्टि - यो जह्नुः गण्डूषीकृत्य गङ्गामपिबत् जह्नोस्तु पुत्रः पूरुः तत्पुत्रः पूरुपुत्रो बलाकः तस्यात्मजस्त्वजकः ततोऽजकात् कुशः कुशस्य तु कुशाम्बादयश्चत्वारः पुत्राः। तत्र कुशाम्बात् गाधिरासीत् जज्ञे ॥३,४॥

गाधेः पुत्रोऽपि विश्वामित्रो ब्रह्मर्षिरभूत् इत्युत्तराध्यायान्ते वक्ष्यति "गाधेरासीन्महातेजा" इत्यादिना। तत्र तावद्

---

1 ABJ बला° 2 ABJ चरितं 3 ABJ °तमाह 4 HV वर्णो 5--5 HV कौशिका. कुशिकान्वया· 6 HV omit मन्त्रै

उपोद्घातत्वेन भृगुवंशभवस्य ऋचीकस्य चरितं प्रसक्तानुप्रसक्त्यु परशुरामावतारतच्चरित्रादिकञ्च आह - **तस्य सत्यवती** मित्यादिना। तस्य गाधेः कन्यां दुहितरं सत्यवत्याख्यामृचीकाख्यो द्विजो भार्गवोऽयाचत ततो गाधिर्वरं विसदृशं कन्याया अननुरूपं दृष्ट्वा भार्गवमृचीकमुवाच ॥५॥

किमिति? **एकत इति।** दक्षिणवामयोरेकतः एकस्मिन्पार्श्वे श्यामः कर्णो येषां चन्द्रस्येव वर्चो येषां तेषां हयानामश्वानां सहस्रं कन्यायाः शुल्कं दीयतां। न चेदमपि पर्याप्तमस्मत्कन्यायाः यतः कुशिकाः कौशिका वयमिति ॥६॥

इतीत्थमुक्तस्तस्य गाधेर्मतिं ज्ञात्वा माममनुरूपं दृष्टवतोऽस्येयं मतिरभूदिति ज्ञात्वा वरुणास्यान्तिकं गतः तत आनीय याच्ञया, प्रतिगृह्येत्यादिः तान् तदुक्तविधानश्वान् दत्वा वराननां सत्यवतीमुपयेमे ॥७॥

**स इति।** ततः कदाचित् स ऋषिः ऋचीकः पुत्रकाम्यया आत्मनो· पुत्रेच्छया पत्न्या श्वश्र्वा पत्नीमात्राच प्रार्थितः उभयैः ब्राह्मैः क्षात्रैश्च मन्त्रैश्चरुं श्रपयित्वा पत्न्याः पुत्रार्थं ब्राह्ममन्त्राभिमन्त्रितमेकं चरुं श्वश्र्वास्तु पुत्रार्थं क्षात्रमन्त्राभिमन्त्रितमपरं च चरुं पाचयित्वेत्यर्थः। मुनिः ऋचीकः स्नातुं गतः ॥८॥

## श्रीवीजयध्वजतीर्थकृता पदरत्नावली

ब्रह्मणोऽत्रिरत्रेः सोमः, सोमाद्बुधः बुधात्पुरूरवाः तस्य पुत्रानाह - **ऐलस्य** चेति ॥१-३॥

कुशाम्बुजो गाधिरित्येकस्य नामद्वयम् ॥४॥

भार्गवमृचीकम् ॥५॥

कुशिकानामन्वयो यस्य स तथा कुशिकान्वयः समय इति वा ॥६,७॥

श्वश्रा भार्यामात्रा उभयैः सात्त्विकराजसभेदभिन्नैर्मन्त्रैः चरुं श्रपयित्वा प्रपच्याभिमन्त्र्य तवेदं, तव मातुरिदमिति निगद्य संस्थाप्य स्नातुं गतः ॥८॥

**तावत् सत्यवती मात्रा स्वचरुं याचिता सती।**
**श्रेष्ठं मन्वानयाऽयाच्छन्मात्रे मातुरदत् स्वयम् ॥९॥**
**तद् विज्ञाय मुनिः प्राह पत्नीं कष्टमकारषीः।**
**घोरो दण्डधरः पुत्रो भ्राता ते ब्रह्मवित्तमः ॥१०॥**

1 TW 'चि' 2 TW 'चि' 3 TW 'चि' 4 TW 'चि' 5 TW 'चि' 6-6 ABGJMMa मत्वा तयाऽय' 7 HV 'मकारुषी·', MMa 'मकार्षिण', TW मकार्षी

**प्रसादितः सत्यवत्या मैवं भूदिति भार्गवः।**
**अथ तर्हि भवेत् पौत्रो जमदग्निस्ततोऽभवत् ।।११।।**

**सा चाभूत् सुमहापुण्या कौशिकी लोकपावनी।**
**रेणोः सुतां[1] रेणुकाख्यां जमदग्निरुवाह याम् ।।१२।।**

**तस्यां[2] वै भार्गव ऋषेः सुता[3] वसुमनादयः।**
**यवीयाञ्जज्ञ एतेषां राम इत्यभिविश्रुतः ।।१३।।**

**यमाहुर्वासुदेवांशं हैहयानां कुलान्तकम्।**
**त्रिस्सप्तकृत्वो य इमां चक्रे निःक्षत्रियां महीम् ।।१४।।**

**दृप्तं[4] क्षत्रं भुवो भारमब्रह्मण्यमधार्मिकम्[5]।**
**रजस्तमोवृतमहन् फल्गुन्यपि कृतेंऽहसि ।।१५।।**

**[6-]राजोवाच[-6]**

**किं तदंहो भगवतो राजन्यैरजितात्मभिः।**
**कृतं[7] येन कुलं नष्टं क्षत्रियाणामभीक्ष्णशः ।।१६।।**

**श्रीध०** तावदिति। यावत्स्नात्वा मुनिर्निर्गतस्तावत् भार्यायां भर्तृस्नेहाधिक्यात् पुत्र्या सत्यवत्याश्चरुं श्रेष्ठं [8-]मन्वानया[-8] मात्रा सत्यवती याचिता सती ब्राह्ममन्त्राभिमन्त्रितं स्वचरुं मात्रे अयच्छत्प्रादात्। मातुश्चरुं[9] क्षात्रमंत्राभिमन्त्रितं स्वय मदत् आदत् ।।९।।

**तदिति**। कष्टं जुगुप्सितम्। तदेवाह - ते पुत्रो घोरो भविष्यति, भ्राता तु ब्रह्मवित्तमो भविष्यतीति ।।१०।।

**प्रसादित इति**। एवं माभूदिति प्रसादितो भार्गव आह - अथ तर्हि पौत्रो घोरो भवेदिति। ततो[10] जमदग्निः पुत्रोऽभवदित्यर्थः ।।११।।

**सेति**। सा च सत्यवती कौशिकी नद्यभूत् ।।१२।।

---

1 ABGJMMa 'का वै 2 TW हि 3 ABGJMMa 'दा' 4 ABGJ दुष्ट 5 ABGHJV मनीनशत् 6-6 H V परीक्षिदुवाच 7 MMa तेन 8-8 ABJ मत्वा तया 9 ABJ omit तु 10 ABJ omit तत

**तस्यामिति।** भार्गवऋषेः जमदग्नेः सुताः ॥१३,१४॥

**दृप्तमिति।** अनीनशत् नाशयामास - [1]तदेवाह रजस्तमोवृत्तमिति, पाठान्तरं सुगमम् ॥१५,१६॥

**वीर० तावदिति।** तावत् यावत्स्नात्वा मुनिर्निर्गतस्तावद्भार्यायां भर्तुः स्नेहाधिक्यात् पुत्र्याः सत्यवत्याश्चरुं श्रेष्ठं मन्वानया मात्रा याचिता सत्यवती स्वश्चरुं ब्राह्ममन्त्राभिमन्त्रितं स्वमात्रे प्रायच्छत् प्रादात् मातुस्तु चरुं क्षात्रमन्त्राभिमन्त्रितं स्वयमदात् आदत् भक्षितवती दीर्घव्यत्यय आर्षः ॥९॥

तत आगतः मुनिः ऋचीकः[2] तच्चरुविनिमयरूपं कर्म विज्ञाय पत्नीं प्राह, किमिति? त्वं कष्टं जुगुप्सितम् अकार्षीः अतस्तव पुत्रो दण्डधरो घोरो भविता तव भ्राता तु ब्रह्मवित्तमो भवितेति ॥१०॥

**प्रसादिता इति।** ततः सत्यवत्या मैवं भूत् एवं न निगृहाणेति प्रार्थितो भार्गवः आह - किमिति? अथ तर्हि भवेत्पौत्रः इति। **तर्हि** पौत्रो घोरो भविता पुत्रस्तु शान्त एवेत्याहेत्यर्थः[3]। ततः सत्यवत्याः जमदग्निः जज्ञे ॥११॥

**सा चेति।** सा च सत्यवती कौशिकी सुमहापुण्या लोकपावनी नदी बभूव कौशिकीरूपेण सस्यन्दे इत्यर्थः। अथ जमदग्निर्यां रेणोः सुतां रेणुकाख्याम् उवाह उपयेमे ॥१२॥

**तस्यां हि इति।** तस्यां हि रेणुकायां भार्गवऋषेर्जमदग्नेः वसुमनादयः[4] सुताः, जज्ञिरे इति शेषः। तेषां वसुमनादीनां[5] यवीयान् कनीयान् राम इत्यभितः प्रख्यातस्तं विशिनष्टि यमिति। यं रामं वासुदेवांशं वासुदेवांशावेशावतारम् आहुः तदवतारयाथात्म्य वेदिन इति शेषः। कथम्भूतम् ? हैहयानां कार्तवीर्याऽऽदीनां [6]कुलस्यान्तं[6] नाशं करोतीति अन्तकः नाशकः यो राम इमां महीं त्रिस्सप्तकृत्वः एकविंशतिवारं निःक्षत्रियां क्षत्रबीजरहितां चक्रे ॥१३,१४॥

**दृप्तमिति।** फल्गुन्यल्पे अंहस्यपराधे कृतेऽपि क्षत्रं क्षत्रकुलमहन् हतवान् कथम्भूतम्? दृप्तं गर्वितं पृथिव्याः भारं भारवहम् अब्रह्मण्यं ब्राह्मणेष्वसाधु रजस्तमोभ्यां वृतम् ॥१५॥

तत्र फल्गुन्यपि कृते अंहसि क्षत्रमहन्नित्युक्तया लब्धप्रश्नावसरः पृच्छति राजा-**किमिति**? कृतात्मभिः दुरात्मभिः राजन्यैः कृतं तदंहः किं किंस्वरुपं कीदृशं च येनांहसा हेतुना पौनःपुन्येन क्षत्रियाणां कुलं नष्टम् ॥१६॥

**विज०** तावत्तदा आत्मीयचरुं श्रेष्ठं मत्वा तया स्वमात्रा याचिता सत्यवती स्वचरुं मात्रे ददौ मातुश्चरुं स्वयमदत्स्वी कृतवती ॥९॥

---

1--1 HV omit 2 TW 'चि' 3 TW 'वेत्यर्थ 4 AB 'दा' 5 AB 'दा' 6- -6 TW omit

तव पुत्रो घोरो दण्डधरः, ते भ्राता ब्रह्मवित्तमः ॥१०-१२॥

सा सत्यवती कौशिकी नदी बभूवेति शेषः ॥१३॥

भार्गवऋषेर्जमदग्नेर्यवीयान् कनिष्टः ॥१४॥

क्षत्रवधे मुख्यं कारणमाह - दृप्तमिति। अहन् हतवान् फल्गुन्यल्पे अंहस्यपराधे ॥१५,१६॥

**श्रीशुक उवाच**

**हैहयानामधिपतिरर्जुनः क्षत्रियर्षभः।**
**दत्तं[1] नारायणांशमाराध्य परिकर्मभिः ॥१७॥**

**बाहून् दशशतं लेभे दुर्धर्षत्वमरातिषु।**
**अव्याहतेन्द्रियौजः[2] श्रीतेजोवीर्य[3]यशोबलम् ॥१८॥**

**योगेश्वरत्वमैश्वर्यं गुणा यत्राणिमादयः।**
**चचाराव्याहतगतिर्लोकेषु पवनो यथा ॥१९॥**

**स्त्रीरत्नै[4]रन्वितः क्रीडन् रेवाम्भसि मदोत्कटः।**
**वैजयन्तीं स्रजं बिभ्रत् रुरोध सरितं भुजैः ॥२०॥**

**विप्लावितं स्वशिबिरं प्रतिस्रोतस्सरिज्जलैः।**
**नामृष्यत् तस्य तद् वीर्यं वीरमानी दशाननः ॥२१॥**

**गृहीतो लीलया स्त्रीणां समक्षं कृतकिल्बिषः।**
**माहिष्मत्यां सन्निरुद्धो मुक्तो येन कपिर्यथा ॥२२॥**

**स एकदा तु मृगयां विचरन् विजने[5] वने।**
**यदृच्छयाऽऽश्रमपदं जमदग्नेरुपाविशत्[6] ॥२३॥**

**तस्मै स नरदेवाय मुनिरर्हण[7]माहरत्।**
**ससैन्यामात्यवाहाय[8] हविष्मत्या तपोधनः ॥२४॥**

---

1 ABGJMMa 'वणस्वांश' 2 TW 'याजश्री 3 MMa वीर्यं 4 ABGJMMa 'रावृत 5 AGJMMa 'पि' 6 TW 'पागमत् 7 H V माचरत् 8 MMa 'र्षान्वा

**श्रीध०** कार्तवीर्यार्जुनेन कृतमपराधं वक्तुं तस्य दर्पहेतुमैश्वर्यादिकमाह - **हैहयानामिति** षड्भिः परिकर्मभिः परिचर्यादिभिः दत्तं दत्तात्रेयमाराध्य ॥१७॥

**बाहूनिति**। अव्याहतमिन्द्रियादिकं च लेभे ॥१८॥

**योगेति**। यत्र यस्मिन्नैश्वर्येऽणिमादयो गुणा ॥१९॥

**स्त्रीरत्नैरिति**। रेवाम्भसि नर्मदाजले सरितं नर्मदाम् ॥२०॥

**विप्लावितमिति**। रावणो दिग्विजये माहिष्मत्याः समीपे नर्मदायां शिवपूजां[1] कुर्वंस्तेन प्रवाहस्यावरोधात् प्रतिस्रोतस· सत्यास्तस्या· सरितो जलैर्विप्लावितं स्वशिबिरमालक्ष्य तस्य[2] तद्वीर्यं न सेहे ॥२१॥

**गृहीत इति**। ततश्च कृतकिल्बिष क्रीडन्तमभिभवितुं प्रवृत्त· सन् गृहीतो माहिष्मत्यां स्वपुर्यां कपिरिव सन्निरुद्धश्च पुनश्चावज्ञया येन मुक्त ॥२२॥

इदानीं तत्कृतमपराधं दर्शयन्नाह - **स एकदेत्यादिना** ॥२३॥

**तस्मा इति**। **अर्हणमातिथ्यादि**। हविष्मत्या कामधेन्वा ॥२४॥

**वीर०** एवं पृष्टो मुनि कार्त्तवीर्यार्जुनेन कृतमपराधं वक्तुं तस्य हेतुमैश्वर्यादिमाह - **हैहयानामिति** षड्भिः। हैहयानां जनपदानाम् अधिपति· पुरुषर्षभोऽर्जुन कार्तवीर्य्य परिकर्मभि परिचर्याभि नारायणांशावतारभूतं दत्तं दत्तात्रेयम् आराध्य ॥१७॥

दशशतं सहस्रं बाहून् अरातिषु शत्रुषु दुर्धर्षत्वं दुःसहत्वम् अव्याहतमिन्द्रियादिकं योगेश्वरत्वमैश्वर्यं च लेभे लब्धवान् इन्द्रियादीनां समाहारद्वन्द्वस्ततोऽव्याहतशब्देन कर्मधारय· तत्र ओजो बुद्धिबलं, तेजः शरीरकान्तिः, वीर्यमिन्द्रियबलं, यश· कीर्ति·, बलं शरीरबलम्। ऐश्वर्यं विशिनाष्टि - यत्र यस्मिन्नैश्वर्येऽणिमादयो गुणाः एवं लब्धसहस्रबाह्वादिरर्जुनः पवनो यथा तद्वत् लोकेष्वव्याहतगतिः विचचार ॥१८,१९॥

**स्त्रीभिरिति**। स कदाचित् स्त्रिय एव रत्नानि तैरावृतः वैजयन्तीं स्रजं बिभ्राण· रेवाम्भसि नर्मदाया[3] जले क्रीडन् मदोद्रिक्त· सरितं रेवां भुजैः रुरोध ॥२०॥

**विप्लावितमिति**। तदा दशाननो रावणो[4] दिग्विजयाय माहिष्मत्या अर्जुनपुर्याः समीपे नर्मदायां शिबिरे देवपूजां कुर्वन् तेन प्रवाहस्य अवरोधात् प्रतिस्रोतस प्रत्युद्गतप्रवाहाया· सरितो नर्मदाया जलैराप्लावितं स्वशिबिरमालक्ष्य तस्मादपि वीरमात्मानं

---

1 ABJ देवपूजा 2 ABJ omit तस्य 3 TW °दाजले 4 Tw omit रावण

मन्यमानः तस्य कार्त्तवीर्यस्य तद्वीर्य्यं नामृष्यत् न ममर्ष किन्तु तमभ्यद्रवदिति शेष· ॥२१॥

**गृहीत** इति। तत· कृतकिल्विषः क्रीडन्तमभिभवितुं प्रवृत्तो दशानन· स्त्रीणां समक्षं येनार्जुनेन लीलया गृहीत माहिष्मत्यां पुर्य्यां सन्निरुद्धः पश्चान्मुक्तश्च यथा कपिर्गृहीतो मुच्यते तद्वत्। अनेन रावणादप्यतिशयितवीर्य्यवत्त्वमुक्तम् ॥२२॥

इदानीं तत्कृतमपराधं दर्शयन्नाह - **स एकदेत्यादिना**। सोऽर्जुन कदाचिद्विपिने सुचिरं मृगयां विचरन् कुर्वन् यदृच्छया जमदग्नेराश्रमस्थानमुपागमत् ॥२३॥

**तस्मा** इति। तस्मै आगताय नरदेवायार्जुनाय सैन्यामात्यवाहनसहिताय स मुनिर्जमदग्निस्तपोधनो हविष्मत्या कामधेन्वा अर्हणमातिथ्यमाहरत् चक्रे ॥२४॥

**विज०** दत्तं दत्तात्रेयं परिकर्मभि परिचर्याभिराराध्य ॥१७॥

अरातिषु दुर्धर्षत्वं वरम्, अजश्रीरौत्पत्तिकी श्रीर्यत्र तेज आदयोऽणिमादयश्च गुणा· सन्ति अव्याहतगतिश्चचार इत्यन्वयः ॥१७-१९॥

रेवाया· नर्मदायाः अम्भसि रुरोध प्रवाहस्तम्भनं कृतवान् ॥२०॥

स्वशिबिरं रावणस्य सेनाविमोचनस्थानं प्रतिस्रोत· सरिज्जलै· प्रतीपगमनं स्रोतः प्रवाहो येषां तानि तथा प्रतिस्रोतांसि च सरिज्जलानि प्रतिस्रोतस्सरिज्जलानि तैर्विप्लावितं प्रवाहवेगेन नीतं वीक्ष्येति शेष। "स्रोतोऽम्बुनिर्गमद्वारे इन्द्रियेषु जलसृतौ" इति च ॥२१॥

यथा केनचित्कपिर्मुक्त पुनर्बद्धो भवति तथाऽयं दशमुखो येनार्जुनेन माहिष्मत्यां सन्निरुद्धोऽभूदित्यन्वयः ॥२२,२३॥

हविर्धान्या कामधेन्वा ॥२४॥

**सवीर [1]स्तत्र तं दृष्ट्वा[-1] [2]ह्यात्मैश्वर्यातिशायनम्।**
**[3]तन्नाद्रियताग्निहोत्र्यां[-3] साभिलाषः स* हैहयः ॥२५॥**

**हविर्धानीमृषेर्दर्पान्नरान् हर्तु[4]मचोदयत्।**
**ते [5]तां माहिष्मतीं निन्युः सवत्सां क्रन्दतीं बलात् ॥२६॥**

---

1--1 ABGJ स्तत्र तद्दृष्ट्वा, MMa स्तस्य सन्दृष्ट्वा 2 ABGJ MMa आत्मै° 3 H V °येताग्निहोत्र्या, MMa °यन्नग्निहोत्रीम् 4 MMa °मयोज° 5 ABGJ च

* According to Sridhara सहैहय

अथ राजनि निर्याते[1] रामः स्वाश्रम आगतः।
श्रुत्वा तत्तस्य दौरात्म्यं चुक्रोधाहिरिवाहतः ॥२७॥

[2-]घोरमादाय परशुं[-2] सतूणं वर्म[3] कार्मुकम्।
अन्वधावत दुर्धर्षो[4] मृगेन्द्र इव यूथपम् ॥२८॥

तमापतन्तं भृगुवर्यमोजसा धनुर्धरं बाणपरश्वधायुधम्।
ऐणेयचर्माम्बरमर्कधामभिर्युतं[5] जटाभिर्ददृशे पुरीं[6] विशन् ॥२९॥

अचोदयद्धस्तिरथाश्वपत्तिभिर्गदासिबाणर्ष्टिशतघ्निशक्तिभिः[7]।
अक्षौहिणीः सप्तदशातिभीषणास्ता राम एको भगवानसूदयत् ॥३०॥

यतो यतोऽसौ प्रहरत्परश्वधो मनोऽनिलौजाः परचक्रसूदनः।
ततस्ततश्छिन्नभुजोरुकन्धरा निपेतुरुर्व्यां हतसूतवाहनाः ॥३१॥

दृष्ट्वा स्वसैन्यं रुधिरौघकर्दमे रणाजिरे रामकुठारसायकैः।
विवृक्णवर्म[8]ध्वजचापविग्रहं निपातितं[9] हैहय आपदत् रुषा ॥३२॥

**श्रीध० स इति**। तदर्हणं नाद्रियेत[10] तस्मिन्नातुष्यत्। यतोऽग्निहोत्र्यां होमधेनौ साभिलाषः सहैहयो हैहयैः सह वर्तमानः ॥२५॥

**हविर्धानीमिति**। दर्पाद्धेतोः ऋषेर्हविर्धानीमग्निहोत्रधेनुं हर्तुं नरानचोदयत् प्रेरितवान्[11] ॥२६,२७॥

**घोरमिति**। सतूणं कार्मुकं चर्म[12] च आदाय ॥२८॥

**तमिति**। ऐणेयचर्म, कृष्णाजिनमम्बरं यस्य ॥२९॥

[13-]**अचोदयदिति**- हस्तिरथादिभिः[-13] अतिभीषणा ॥३०॥

**यत इति**। प्रहरन्परश्वधो यस्य। मनश्चानिलश्च तयोरिव ओजो वीर्यं यस्य। परेषां चक्रं सैन्यं सूदयतीति तथा। छिन्ना भुजा ऊरवः कन्धराश्च येषाम् ते। हता सूता वाहनानि च येषां ते, वीरा निपेतुः ॥३१॥

---

1 ABGJMMa °मा आ° 2 MMa परशुं योजयामास 3 ABGJMMa चर्म 4 MMa दुर्म° 5 MMa °म त्म° 6 MMa नृपा 7 MMa °वरांश° 8 ABGJMMa चर्म 9 MMa विपा° 10 ABJ °य° 11 H V omit प्रेरितवान् 12 H V वर्म 13--13 ABJ omit

**दृष्ट्वेति**। विवृक्णाः[1]चर्मादयो यस्य ॥३२॥

**वीर० स इति**। तदा सोऽर्जुन आत्मन ऐश्वर्यादप्यतिशयितमद्भुतं वीर्यं सामर्थ्यं दृष्ट्वा तदर्हणं नाद्रियत नादृतवान् किन्तु स हैहयोऽर्जुनः अग्निहोत्र्यां होमधेनौ साभिलाषो भटान् दृष्ट्वा ऋषेर्हविर्धानीं धेनुं हर्तुमचूचुदत्। ते चोदिता नराः सवत्सां क्रन्दतीं क्रोशन्तीं हविर्धानीं बलात्प्रसह्य माहिष्मतीं पुरीं निन्युः ॥२५,२६॥

**अथेति**। अथ राजन्यर्जुने निर्याते निर्गते सति पूर्वं क्वचिद्गतो रामः पितुराश्रममागत· तस्यार्जुनस्य तद्दौरात्म्यं श्रुत्वा आहतस्ताडितः अहिः सर्प इव चुक्रोध क्रुद्धो बभूव ॥२७॥

**घोरमिति**। ततो घोरं भीषणं परशुं सतूणं कार्मुकं वर्म कवचं च आदाय मृगेन्द्रः सिंहो यूथपं गजं प्रतीव दुराधर्षोऽन्वधावत् अर्जुनं पृष्ठतोऽनुसृत्याधावत् ॥२८॥

**तमिति**। ततस्तमापतन्तं भृगुवर्य्यं रामं पुरीं विशन्नर्जुनो ददर्श, कथम्भूतम्? ओजसा उपलक्षितमिति शेषः। ओजसा आपतन्तमिति वा। बाणपरश्वधौ बाणपरशू आयुधे यस्य तम् ऐणेयं चर्म कृष्णाजिनमम्बरं यस्य तम्, अर्कस्येव धाम तेजो यासां ताभिर्जटाभिर्युतम् ॥२९॥

**अचोदयदिति** - ततोऽर्जुनः हस्त्यादिभिः गदादिभिश्चातिभीषणः सप्तदशाक्षौहिणीः सेनाः उचूचुदत् ऋष्टिशतघ्निशक्तयः आयुधविशेषाः। ताश्च अक्षौहिणीर्भगवत् रामो भार्गव एकोऽसहाय एव असूदयत् जघान हस्तिनो गजाः, पत्तयः पदातयः, रथानामेकविंशतिसहस्राणि अष्टौ शतानि सप्ततिश्चैका एवं गजानामपि, नराणां तु शतसहस्राणि नव सहस्राणि च पञ्चाशदधिकानि त्रीणि शतानि च अश्वानां तु सहस्राणि षट् षष्टिः पट् चेति सङ्कलय्य एकाऽक्षौहिणी ज्ञेया। तथा चोक्तं महाभारते आदिपर्वणि द्वितीये अध्याये -

एको रथो गजश्चैकः नराः पञ्च पदातय·। त्रयश्च तुरगास्तज्ज्ञै· पत्तिरित्यभिधीयते॥

पत्तिं तु त्रिगुणामेतां विदुः सेनामुखं बुधाः। त्रीणि सेनामुखान्येको गुल्म इत्यभिधीयते।

त्रयो गुल्मा गणो नाम वाहिनी तु गणास्त्रयः। श्रुतास्त्रिस्रस्तु वाहिन्यः पृतनेति विचक्षणैः ॥

चमूस्तु पृतनास्तिस्रश्चम्वस्तिस्रस्त्वनीकिनी। अनीकिनीन्दश गुणामाहुरक्षौहिणीं बुधाः ॥

अक्षौहिण्यस्तु संख्याता रथानां द्विजसत्तमा·। संख्या गणिततत्वज्ञैः सहस्राण्येकविंशतिः ॥

1 HV वर्मा°

शतान्युपरि चाष्टौ च तथाभूयश्च सप्ततिः। गजानां तु परीमाणं तावदेवात्र निर्दिशेत्॥

ज्ञेयं शतसहस्रं तु सहस्राणि तथा नव। नरणामधिपञ्चाशच्छतानि त्रीणि चानघाः॥

पञ्चषष्टिसहस्राणि तथाऽश्वानां शतानि च। दशोत्तराणि षट्[1]चाहुर्यथावदभिसंख्यया॥

एतामक्षौहिणीं प्राहुः संख्यातत्त्वविदो जनाः।

इति। यतो यत इति। प्रहरन् परश्वधो यस्य अनलस्येव ओजस्तेजो यस्य असौ रामः परेषां चक्रं सैन्यमण्डलं सूदयतीति तथा "भूतो यत्र यतो यत्र यत्र सैन्यैः विचक्रमे इति शेषः। ततस्तत्र तत्र तत्र च्छिना भुजा ऊरवः कन्धराश्च येषां हताः सूता वाहनानि च येषां ते वीरा निपेतुः ॥३०,३१॥

ततो रामस्य कुठारेण सायकैश्च विवृक्णा च्छिन्ना वर्मादयो यस्य तत् स्वसैन्यं रुधिरौघेण कर्दमो यस्मिन् तस्मिन् रणाजिरे युद्धाङ्गणे निपातितं हष्ट्वा हैहयोऽर्जुनो रुषा आपतत् तत्र विग्रहो देहः ॥३२॥

**विज०** आत्मनः स्वस्य ऐश्वर्यमतिशायिनं अतीत्य वर्तमानं तदैश्वर्यं नाद्रियन् नादरं कुर्वन् अग्निहोत्रीं धेनुं प्रति सभिलाषः इच्छां कुर्वन् ॥२५॥

हविर्धानीं धेनुं, नरान् पुरुषान् हर्तुं नेतुम् अयोजयत् नियुक्तवान् ॥२६,२७॥

योजयामास उत्तेजितं कृतवान्, कार्मुकं गृहीत्वेति शेषः। रथे योजयामासेति वा ॥२८॥

ऐणेयं चर्म कृष्णाजिनं तदेवाम्बरं यस्य स तथा तम् आत्मनः स्वस्य धाम तेजो यासां ताः तथा, ताभिर्जटाभिर्युक्तं तं पुरीमापतन्तम् ॥२९॥

अर्जुनो या अक्षौहिणीरचोदयत् रामस्ता असूदयदित्यर्थः ॥३०॥

मनोवदनिलवदोजो वेगो यस्य स तथा मनोद्वेग अनिलवदवष्टम्भ इति वा "ओजोऽवष्टम्भबलयोः" (वैजःकोः 6-3-4) इति यादवः ॥३१॥

विग्रहो देहः ॥३२॥

**अथाऽर्जुनः पञ्चशतेषु बाहुभिर्धनुःषु[2] बाणान् युगपत् स सन्दधे।**
**रामाय रामोऽस्त्रभृतां समग्रणीस्तान्ये[3]कधन्वेषुभिरच्छिनत्[4] समम् ॥३३॥**

---

1 TW 'ट्प्रा' 2 MMa सु 3 ABJ 'तानेकबद्धेषुभि' 4 ABGJ राच्छिनत्

**पुनः स्वहस्तैरचलान् मृधेऽङ्घ्रिपानुत्क्षिप्य वेगादभिधावतो युधि।**
**भुजान् कुठारेण कठोरनेमिना चिच्छेद रामः प्रसभं [1] हसन्निव ॥३४॥**

**कृत्तबाहोः शिरस्तस्य [2] गिरेः शृङ्गमिवाहरत्।**
**हते पितरि तत्पुत्राः [3-] अयुतं दुद्रुवु [-3] र्भयात् ॥३५॥**

**अग्निहोत्री [4] मुपावर्त्य सवत्सां [5] परवीरहा।**
**[6] समुपेत्याश्रमं पित्रे परिक्लिष्टां [7] समर्पयत् ॥३६॥**

**[8] स्वकृतं तत्कृतं रामः पित्रे भ्रातृभ्य एव च।**
**वर्णयामास तच्छ्रुत्वा जमदग्निरभाषत ॥३७॥**

**राम राम महाबाहो भवान् पापमका [9] रषीत्।**
**अवधीन्नरदेवं यत् सर्वदेवमयं [10] वृषा ॥३८॥**

**श्रीध० अथेति।** पञ्चशतेषु धनुःषु सोऽर्जुनो रामाय सन्दधे। एकमेव धनुर्यस्य सः। पाठान्तरे एक एव बन्धः सन्धानं येषां तैरिषुभिः। तानि धनूंषि समं सह तत्क्षणमेवाच्छिनत् ॥३३॥

**पुनरिति।** मृधे साधनभूतानचलान् अंघ्रिपांश्च उत्क्षिप्य अभिधावतस्तस्य भुजान् [11] युधि चिच्छेद। अहेः [12] फणानिवेत्यर्थः ॥३४,३५॥

**अग्निहोत्रीमिति।** [13-] पित्रे परिक्लिष्टां अग्निहोत्रीं [-13] समर्पयत्समार्पयत [14] समर्पितवान् [15] ॥३६-३८॥

**वीर० अथेति।** अथ पञ्चशतेषु धनुष्मद् बाहुभिर्बाणान् युगपत् सोऽर्जुनो रामाय सन्दधे अथ अस्त्रभृतामग्रणीः राम एकधन्वी तान् बाणान् इषुभिः सममेकदा समच्छिनत् सञ्चिच्छेद ॥३३॥

**पुनरिति।** पुनः स्वहस्तैरचलानङ्घ्रिपांश्चोत्क्षिप्य युधि संग्रामे वेगादभिधावतोऽर्जुनस्य भुजान् कठोरनेमिना कुठारेण रामः प्रहसन्निव प्रसभं बलाच्चिच्छेद ॥३४॥

---

1 ABGJ त्वहेरिव , HV फणानिव 2 MMa गिरिश्शृ° 3- -3 TW सख्यया त्वयुत तदा 4 HV वृत्य , TW हृत्य 5 TW दुर्दुवुर्भयात् 6 TW स अे° 7 TW समा° 8 ABGJMMa स्वकर्म 9 HVTW °रु° 10 ABGJMMa वृथा 11 ABJ omit मुधि 12 ABJ °णा इवे° 13-13 ABJ omit 14 HV omit 15 ABJ omit समर्पितवान्

**कृत्तेति**। कृत्ता च्छिन्ना बाहवो यस्य तस्यार्जुनस्य शिरः गिरेः सकाशात् शृङ्गमिव जहार एवं पितर्यर्जुने हते सति तस्यार्जुनस्य पुत्रा अयुतसङ्ख्याकाः भयादाग्निहोत्रीं होमधेनुं सवत्साम् उपाहृत्य समीपमानीय रामाय समर्प्येत्यर्थः। दुद्रुवुः पलायाञ्चक्रिरे ततो राम आश्रममुपेत्य परिक्लिष्टां धेनुं पित्रे जमदग्नये समार्पयत् ॥३५-३६॥

तत्स्वेन कृतं कर्म पित्रे भ्रातृभ्यश्च[1] वर्णयामास। तद्रामोपवर्णितं कर्म श्रुत्वा जमदग्निरब्रवीत् ॥३७॥

तदेवाह - **रामरामेति** यावत्समाप्ति। हे राम राम! महाबाहो! भवान् पापं कृतवान् किं तत्? यत् सर्वदेवमयं नरदेव मर्जुनं वृथा हतवानसीति ॥३८॥

**वीज०** अथाऽगत्य अर्जुनः पञ्चशतेषु धनुष्षु बाहुभिः बाणान्युगपदेकप्रयत्नेन सन्दधे। अस्त्रभृतां सम्यगग्रणी रामः समं युगपदेकस्मिन् धनुषि बद्धेषुभिः सन्धितशरैस्तान् पञ्चशतशरान् अच्छिनदित्यन्वयः ॥३३॥

पुनः रामः स्वहस्तैरचलान् गिरीन् अङ्घ्रिपान् वृक्षान् मृधे उत्क्षिप्य प्रहृत्य युधि वेगादभिधावतोऽर्जुनस्य भुजान् कठोरनेमिना शितधारेण चिच्छेदेत्यन्वयः ॥३४,३५॥

उपावर्त्य निवर्त्य इतस्तत आकर्षणादिना परिक्लिष्टां क्लेशोपेताम् ॥३६,३७,३८॥

**वयं हि ब्रह्मणास्तात क्षमयार्हणतां गताः।**
**यया लोकगुरुर्देवः[2] पारमेष्ठ्यमगात् पदम् ॥३९॥**

**क्षमया रोचते लक्ष्मीर्ब्राह्मी सौरी यथा प्रभा।**
**क्षमिणामाशु भगवांस्तुष्यते हरिरीश्वरः ॥४०॥**

**राज्ञो मूर्धाभिषिक्तस्य[3] वधो ब्रह्मवधात् गुरुः।**
**तीर्थसंसेवया चांहो जह्यङ्गाच्युतचेतनः ॥४१॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
नवमस्कन्धे पञ्चदशोऽध्यायः ॥१५॥

**श्रीध० वयमिति**। अर्हणतां पूज्यताम्[4] अयात् अगात्[-4] ॥३९॥

---

1 A.B Add शुश्राव 2 H.V 'या' 3 H.MMa 'व' 4-4 AGJ omit

**क्षमयेति। सौरी सूर्यस्य प्रभेव** ॥४०॥

**राज्ञ इति। तीर्थसंसेवया चकाराद्यमनियमैश्च। अच्युते चेतना चित्तं यस्य स** ॥४१॥

इति श्रीमद्भागवते महापुराणे
श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकाया
व्यख्यायां नवमस्कन्धे पञ्चदशोऽध्याय ॥१५॥

**वीर०** कृतागसो हननं न पापमित्यत्राह - **वयमिति**। वयं ब्राह्मणा हि **"घातुं न घातुक्तो विप्रः"** इत्युक्तविधा हीति भावः क्षमया हेतुभूतयाऽर्हणतां पूज्यतां गताः प्राप्ता। क्षमां प्रस्तौति ययेति। लोकगुरुर्देवो ब्रह्मा यया क्षमया पारमेष्ठ्यं परमेष्ठियोग्यं पदं स्थानम् अगात् प्राप्तवान् ॥३९॥

**क्षमयेति,** क्षमयैव ब्राह्मी लक्ष्मीः ब्रह्मकुलसम्बन्धिनी शमदमादिसम्पत् यथा सौरी सूर्यप्रभा। तथा रोचते **प्रकाशते**। भगवान् हरिरीश्वरोऽपि क्षमिणां क्षमावतामेवाऽऽशु तुष्यते प्रसन्नो भवतीति भाव· ॥४०॥

**राज्ञ इति**। किञ्च मूर्द्धाभिषिक्तस्य सार्वभौमस्येत्यर्थ । तस्य राज्ञो वधो ब्रह्मवधाद्विप्रवधादपि गुरु· नितरां पापरूपः अतस्त्वं उच्यसे भगवति न्यस्ता चेतना ज्ञानं यस्य तथाभूतस्तीर्थानां गङ्गादीनां संसेवया अंहस्तत्पापं जहि अपाकुरु ॥४१॥

**विज०** यथा सौरी सूर्यसम्बन्धिनी प्रभा रोचते तथा ब्राह्मी ब्राह्मणसम्बन्धिनी लक्ष्मीः क्षमया प्रकाशते ॥४०॥

**मूर्द्धावसिक्तस्य चक्रवर्तिनः** ब्रह्मवधात् ब्राह्मणहननादच्युते श्रीनारायणे बुद्धिर्यस्य स तथा ॥४१॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
नवमस्कन्धे पञ्चदशोऽध्याय ॥१५॥

# षोडशोऽध्यायः

## श्रीशुक उवाच

पित्रोपाशिक्षितो रामः तथेति कुरुनन्दन।
संवत्सरं तीर्थ[1]यात्रां चरित्वाऽऽश्रममव्रजत् ॥१॥

कदाचित् रेणुका याता गङ्गायां पद्ममालिनम्।
गन्धर्वराजं क्रीडन्तमप्सरोभिर[2]वैक्षत ॥२॥

विलोकयन्ती क्रीडन्तमु[3]दकाय नदीं गता।
होमवेलां न सस्मार किञ्चिच्चित्ररथस्पृहा ॥३॥

कालात्ययं तं विलोक्य मुनेः शापविशङ्किता।
आगत्य कलशं तस्थौ पुरोधाय कृताञ्जलिः ॥४॥

व्यभिचारं मुनिर्ज्ञात्वा पत्न्याः प्रकुपितोऽब्रवीत्।
घ्नतैनां पुत्रकाः पापामित्यु[4]क्तास्ते न चक्रिरे ॥५॥

रामः स[5]ञ्चोदितः पित्रा भ्रातॄन् मात्रा सहावधीत्।
प्रभावज्ञो मुनेः सम्य[6-]क् समाधितपसो[-6]श्च सः ॥६॥

वरेणच्छन्दयामास प्रीतः सत्यवतीसुतः ।
वव्रे हतानां रामोऽपि जीवितं चास्मृतिं वधे ॥७॥

उत्तस्थुस्ते कुशलिनो निद्रापाय इवाञ्जसा।
पितुर्विद्वांस्तपोवीर्यं रामश्चक्रे सुहृद्वधम् ॥८॥

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

षोडशेऽ[7] थार्जुनसुतैर्जमदग्नौ हते मुहुः। रामात्क्षत्रवध. प्रोक्तो विश्वामित्रस्य चान्वय ॥

यद्वा - तीर्थान्यटन् प्रसूभ्रातॄन् रामोऽहन् षोडशे नृपान्। गाधेः पुत्रोऽभवद्विप्रः तद्वंशोऽभूदनेकशः

1 MMa °चर्यां 2 ABGJMMa °रपश्यत 3 ABGJMMa °कार्थं 4 MMa क्तास्ता 5 B सम्बोधित 6- -6 ABGJMMa समाधेस्तपसश्च 7 HV °शेचा°

**विलोकयन्तीति**। किञ्चिदीषच्चित्ररथे गन्धर्वराजे स्पृहा यस्या सा। किञ्चित् न सस्मारेति वा ॥१-३॥

**कालेति**। कलशं पुरोधाय अग्रे निधाय ॥४॥

**व्यभिचारमिति**। व्यभिचारं मानसं ज्ञात्वा ॥५॥

**राम इति**। आज्ञाऽतिलङ्घिनां भ्रातृणां मातुश्च वधे सञ्चोदित सन् मुनेर्य. समाधिस्तपश्च तयोः प्रभावज्ञ· । यदि न हन्यां तर्हि मामपि शप्तुं समर्थः, यदि तु हन्यां तर्हि मयि सन्तुष्टः सन् तानपि जीवयितुं समर्थ इति जानन्नित्यर्थ· ॥६-७॥

**उत्तस्थुरिति**। ननु [1]अतिनिन्दितं तत्कथं कृतवांस्तत्राह - पितुर्विद्वानिति, पूर्वोक्त एवाभिप्रायः ॥८॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

एवं पित्रोपशिक्षित आदिष्टो रामस्तथेत्यङ्गीकृत्य हे कुरुनन्दन संवत्सरं तीर्थचर्या ...त्वा कृत्वा पुनराश्रम मायया ॥१॥

**कदाचिदिति**। एवं स्थिते कदाचिद्रेणुका गङ्गां प्रति गता तस्यां कश्चित् अप्सरोभिः सह क्रीडन्तं पद्ममालिनं चित्ररथाख्यं गन्धर्वराजमपश्यत् ॥२॥

**विलोकयन्तीति** उदकार्थं जलाहरणार्थं नदीं गङ्गां गता रेणुका क्रीडन्तं विलोकयन्ती सती किञ्चिदीषत् चित्ररथे स्पृहा यस्यास्तथाभूता होमवेलां पत्युरग्निहोत्रहोमसमयं न सस्मार विस्मृतवती ॥३॥

**कालात्ययमिति**। तत· कथाञ्चित् तं कालातिक्रमं विलोक्य विदित्वा मुने· पत्युः सकाशादात्म... शापमाशङ्कमाना रेणुका त्वरया आगत्य कलशं पुरः पत्युरग्रे निधाय कृताञ्जलिस्तस्थौ ॥४॥

**व्यभिचारमिति**। ततो मुनिः जमदग्निः पत्न्याः व्यभिचारं ज्ञात्वा प्रकुपितः पुत्रानब्रवीत्, किमिति? हे पुत्रकाः! पापामेनां घ्नत मारयतेति। एवमुक्तास्ते पुत्रा न चक्रिरे, मातृवधमिति शेषः ॥५॥

**राम इति** ततः पित्रा सञ्चोदितः आज्ञातिलङ्घिनां भ्रातृणां मातुश्च वधे परिचोदित· स रामः मात्रा सह भ्रातॄनवधीत् कथमेव मकृत्यं कृतवानिति शङ्कां निराकुर्वन् रामं विशिनष्टि - मुने पितुर्य· समाधिस्तस्य तपसश्च सम्यक् प्रभावं जानाति तथाभूतः। यदि न हन्यां मामपि शप्तुं प्रभुः, यदि वा हन्यां तर्हि पुनः प्रसादितः पिता मृतान् जीवयितुं समर्थ इति जानन्निति भावः ॥६॥

**वरेणेति**। ततः प्रीतः सत्यवत्याः सुतो जमदग्निः वरेण छन्दयामास। अध्ययनेन वसतीतिवत् वरेणेति हेत्वर्थे तृती...

1 H V omit अति

वरार्थं चोदयामासेत्यर्थः। राममिति शेषः। ततः पित्रा वराय चोदितः रामः हतानां पुनर्जीवनं, तेषामात्मवधे अस्मृतिं विस्मृतिं च वव्रे ॥७॥

**उत्तस्थुः** इति ततस्ते भ्रातरः समातृकाः निद्रान्ता इवाञ्जसा कुशलिनो जीवन्त उत्तस्थुः, नन्वनुचितं कथं कृतवान्? तत्राह - पितुरिति। पूर्वोक्त एवाभिप्रायः शब्दार्थः स्फुटः ॥८॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

चरित्वा कृत्वा ॥१॥

याता गङ्गामिति शेषः ॥२॥

किञ्चिच्चित्ररथस्पृहा, ईषच्चित्ररथे स्पृहावती जाता ॥३॥

कलशं भर्तुः पुरो निधाय तत्रैव कृताञ्जलिस्तथौ ॥४॥

घ्नत हताङ्कुरुत तां हतिम् ॥५॥

मुनेः समाधेः तपसश्च सम्यक् प्रभावज्ञः प्रतापमाहात्म्ययोः प्रभावः स्यादिति ॥६॥

छन्दयामास वशीचकार "वशाभिप्राययोः छन्दः" इति च। [1]वधे अस्मृतिं वयं रामेण हता इति स्मृतिशून्यत्व लक्षणं वरं च ॥७॥

[2]राम एते वसुमदादयो जीवन्ति चेत् जीवन्तु नो चेत् म्रियन्तामिति मत्वा सुहृद्वधो नाकारि किन्तु स्वसार्वज्ञमीश्वरत्वेन दोषाभावं च प्रकटयितुमिति भावेनेत्याह - पितुरिति। "वीर्यं परक्रमे रेतस्यन्नमाहात्म्ययोरपि" (वैज. को.6-3-32) इत्यभिधानात्। पितुस्तपो माहात्म्यं जानता कृतमिति भावः। साक्षान्नारायणावतारस्य निरवद्यस्य सकलगुणाकरस्य भार्गवरामस्य क्षत्रहत्यादि दोषमार्जनाय तीर्थसेवा मातृभ्रातृवधात् स्वाज्ञाकारित्वेन प्रसन्नात् पितुर्वरदानमित्यादिकं कथं घटत इतीत्थं शङ्का 'जामदग्न्यो वरं वव्रेऽनन्तशक्तिरपि स्वयम्। पितुर्मान्यत्वसिध्यर्थं लोके लोकेश्वरः प्रभुः ॥' इत्यादि वाक्येन परिहर्तव्या इति ज्ञातव्यम् ॥८॥

**येऽर्जुनस्य सुता राजन् स्मरन्त**[3]**ः स्वपितुर्वधम्।**
**रामवीर्यपराभूता लेभिरे शर्म न क्वचित् ॥९॥**

**एकदाऽऽश्रमतो रामे सभ्रातरि वनं गते।**
**वैरं सिसाधयिषवो लब्धच्छिद्रा उपागमन् ॥१०॥**

1 AB °वधे 2 AB रामेण 3 MMa °न्तस्म पि°

**दृष्ट्वाग्न्यगार आसीनमावेशितधियं मुनिम्।**
**भगवत्युत्तमश्लोके जघ्नुस्ते पापनिश्चयाः ॥११॥**

**याच्यमानाः कृपणया राममात्रातिदारुणाः।**
**प्रसह्य शिर उत्कृत्य निन्युस्ते क्षत्रबन्धवः ॥१२॥**

**रेणुका दुःखशोकार्ता निघ्नन्त्याऽऽत्मानमात्मना।**
**राम [1]रामेहि [2]तत्राशु विचुक्रोशोच्चकैः सती ॥१३॥**

**तदुपश्रुत्य दूर[3]स्थाः हा रामेत्यार्तवत्स्व[4]रम्।**
**त्वरयाऽऽश्रममासाद्य दद्[5]शुः पितरं हतम् ॥१४॥**

**[6]तेदुःखरोषाम[7]र्षार्तिशोकवेगविमो[8]हिताः।**
**हा तात साधो धर्मिष्ठ! त्यक्त्वाऽस्मान् स्वर्गतो भवान् ॥१५॥**

**विलप्यैवं पितुर्देहं निधाय भ्रातृषु स्वयम्।**
**प्रगृह्य परशुं रामः क्षत्रान्ताय मनो दधे ॥१६॥**

**श्रीध०** सर्वक्षत्रियवधे कारणं वक्तुमाह - **येऽर्जुनस्य सुता** इत्यादिना ॥९,१०॥

**दृष्ट्वेति।** भगवत्यावेशिता धीर्येन तम् ॥११-१४॥

**ते इति।** दु खादीनां वेगेन विमोहि[9]ता ॥१५,१६॥

**वीर०** सर्वक्षत्रियवधे कारणं वक्तुमाह- येऽर्जुनस्यसुता इत्यादिना। हे राजन्! अर्जुनस्य ये सुता रामवीर्येण पलायितास्ते स्वपितुर्वधं रामकृतं स्मरन्त· क्वचिदपि शर्म सुखं न लेभिरे ॥६॥

**एकदेति।** कदाचित् सभ्रातरि रामे स्वाश्रमाद्वनं गते सति वैरं सिषाधयिषव [10-]प्रतिचिकीर्षव[-10]· लब्धच्छिद्रा लब्धावसरा उपागमन्, अर्जुनसुता इत्यनुषङ्ग· ॥१०॥

**दृष्ट्वेति।** तत्राश्रमे अग्न्यगारे अग्निहोत्रशालायामासीनं भगवत्यावेशितधियं समाहितमनसं मुनिं जमदग्निं दृष्ट्वा पाप इव निश्चयोयेषां तेऽर्जुनसुताः जघ्नु· हतवन्तः ॥११॥

---

1 MMa रामेति 2 ABGJMMa तातेति 3 ABGJ स्थो 4 ABGJ °नम्° 5 ABGJ °शे 6 ABGJ तद्दु° 7 ABGJMMa °र्ति° 8 ABGJMMa °त 9 ABJ °त 10- -10 W omits

**याच्यमाना इति**। कृपणया राममात्रा रेणुकया याच्यमाना., एनं न मारयतेति शषे:। अतिदारुणाः नितरां क्रूराः बलाच्छिर उत्कृत्य छित्वा[1] ते क्षत्रबन्धव. निन्युः नीतवन्तः ॥१२॥

**रेणुकेति**। तदा रेणुका दुःखशोकार्ता दु खं मानसिक· क्लेश., शोको बाह्यस्ताभ्यामार्ता पीडिता आत्मना आत्मानं घ्नन्ती ताडयन्ती सती रामरामेत्येवमुच्चैश्चुक्रोश आजुहाव ॥१३॥

हा! रामेत्यार्तस्वरं दूरस्थाः सुताः श्रुत्वा त्वरया आश्रम्मासाद्य[2] हतं पितरं ददृशुः ॥१४॥

त इति। ते जमदग्निसुताः[3] दुःखादीनां वेगेन विमोहिता बभूवुरिति शेषः। तत्र दुःखं मानसिक उपतापः, रोषः क्रोधः, अमर्षोऽक्षमा, आर्ति· दैन्यं शोको रोदनं ततो रामः हा तातेत्यादिरूपेण विलप्य पितुर्देहं भ्रातृषु निधाय पितुर्देहं रक्षतेति भ्रातृनादिश्येत्यर्थ·। स्वयं परशुं प्रगृह्य क्षत्रान्ताय क्षत्रकुलनाशाय मनो दधे सङ्कल्पश्चकार ॥१५-१६॥

**विजः लब्धच्छिद्रा** लब्धावसरा· ॥९,१०॥

**विषयादाहृत्य** भगवत्येव निवेशितबुद्धिम् ॥११-१२॥

आत्मना यत्नेन आत्मानं देहैकदेशमुदरं "आत्मा....... यत्नेऽर्केऽग्नौ मतौ वाते" (वैजः कोः6-7-1) इति यादवः। आत्मशब्दः पूर्वार्धे ॥१३॥

दूरस्थाः स्वाभिन्नदेशङ्गता ॥१४-१५॥

**क्षत्रान्ताया**ऽविशेषेण क्षत्रियकुलनाशाय ॥१६॥

**गत्वा माहिष्मतीं रामो ब्रह्मघ्नविहतश्रियम्।**
**तेषां[4] स शीर्षभी राजन्[5] मध्ये चक्रे महागिरिम् ॥१७॥**

**तद्रक्तेन नदीं घोरामब्रह्मण्यभयावहाम्।**
**हेतुं कृत्वा पितृवधं क्षत्रेऽमङ्गलकारिणि ॥१८॥**

**त्रिः सप्तकृत्वः पृथिवीं कृत्वा निःक्षत्रियां प्रभुः[6]।**
**शमन्तपञ्चके[7] चक्रे शोणितोदान् ह्रदान् नृप[8] ॥१९॥**

---

1 W omits छित्वा 2 W °मगत्य 3 W दग्ने 4 MMa तस्या 5 MMa राज्ञां 6 MMa विभु· 7 B °ञ्चकं 8 BH MMa V नव

**पितुः कायेन सन्धाय शिर आदाय बर्हिषि।**
**सर्वदेवमयं देवम् आत्मानमयजन्मखैः ॥२०॥**

**ददौ प्राचीं दिशं होत्रे ब्रह्मणे दक्षिणां दिशम्।**
**अध्वर्यवे प्रतीचीं[1] वै उद्गात्रे[2] ह्युत्तरां दिशम् ॥२१॥**

**अन्येभ्योऽवान्तरदिशः कश्यपाय च मध्यतः।**
**आर्यावर्तमुपद्रष्ट्रे सदस्येभ्यस्ततः परम् ॥२२॥**

**ततश्चावभृथस्नानविधूताशेषकिल्बिषः।**
**सरस्वत्यां ब्रह्मनद्यां रेजे व्यभ्र इवांशुमान् ॥२३॥**

**स्वदेहं जमदग्निस्तु लब्ध्वा संज्ञानलक्षणम्।**
**ऋषीणां मण्डले सोऽभूत् सप्तमो रामपूजितः ॥२४॥**

**श्रीध० गत्वेति**। ब्रह्मघ्नैर्विहता श्रीर्यस्यास्ताम्। हे राजन्! स रामस्तेषां शीर्षभिर्माहिष्मत्या मध्ये महान्तं गिरिं चक्रे ॥१८॥

**तदिति**। तेषां रक्तेनाब्रह्मण्यानां भयावहां घोरां नदीं चक्रे इत्यनुषङ्गः[3] तथाऽपि सर्वक्षत्रियवधे[4] किं कारणं तदाह - हेतुं कृत्वेति सार्धेन। अमङ्गलकारिणि अन्यायवर्तिनि सति ॥१८॥

**त्रिस्सप्तकृत्व इति**। त्रि सप्तकृत्वो रेणुकया दुःखावेशादुरस्ताडनं कृतं ततो रामः तावत्कृत्वः क्षत्रं उत्सादितवानिति प्रसिद्धिः ॥१९-२३॥

**स्वदेहमिति**। संज्ञानं स्मृतिस्तदेव लक्षणं चिह्नं यस्य तं, स्वदेहं लब्ध्वा स ऋषीणां मण्डले सप्तमऋषिरभूत् ॥२४॥

**वीर० गत्वेति**। ततः स रामः ब्रह्मघ्नैर्विहता श्रीर्यस्यास्तां माहिष्मतीं गत्वा तस्याः पुर्याः मध्ये हैहयानां शिरोभिः महागिरिं चक्रे चकार ॥१७॥

**तद्रक्तेनेति**। तेषां रक्तेन अब्रह्मण्यानां भयावहां घोरां नदीं च चक्रे, तथापि सर्वक्षत्रवधे किं कारणम्? तत्राह - हेतुं कृत्वेति सार्द्धेन। क्षत्रे अमङ्गलकारिणि अन्यायवर्तिनि सति पितृवधं हेतुं निमित्तं कृत्वा प्रभू रामः त्रिस्सप्तकृत्वः एकविंशतिवारं

1 H MMa V °चींत्वा, W च्याशा 2 ABGJ °त्रे उ°, MMa °त्र उ° 3 ABJ omit इत्यनुषङ्ग 4 H V ०क्षत्र°

[1] पृथ्वीं निःक्षत्रियां क्षत्रबीजरहितां कृत्वा [2] श्यमन्तपञ्चकाख्ये देशे शोणितोदकान् ह्रदान्, पञ्चेतिशेषः। चक्रे हे नृप! अत्र शोणितोदान् ह्रदान्, नृपेतिपाठस्तु साम्प्रदायिकः। ह्रदान्नवेति तु अपपाठः तद्देशे [3] श्यमन्तपञ्चकशब्दप्रवृत्तौ शोणितोदक ह्रदपञ्चकसमीपवर्तित्वस्यैव निमित्तत्वात्। नवेति पाठे [4] श्यमन्तनवकंशब्दप्रयोगापत्तेः। तथा चोक्तं महाभारते आदिपर्वणि द्वितीयेऽध्याये -"[5] श्यमन्तपञ्चकमिति यदुक्तं सूतनन्दन। एतत्सर्वं यथान्यायं श्रोतुमिच्छामहे वयम्। इति पृष्टो मुनिः सूत आह :- त्रेताद्वापरयोस्सन्धौ [6] रामः प्रहरतां वरः। असकृत्पार्थिवं क्षत्रं जघानामर्षचोदितः॥ स सर्वक्षत्रमुत्साद्य स्ववीर्येणानलद्युतिः। स्यमन्तपञ्चके पञ्च चकार रुधिरह्रदान्॥ स तेषु रुधिराम्भस्सु ह्रदेषु क्रोधमू[7]र्च्छित.। पितृन् सन्तर्पयामास रुधिरेणेति न· श्रुतम्॥ अथर्चीकादयोऽभ्येत्य पितरो ब्रह्मणर्षभम्। तं क्षमस्वेति निषिधुस्तत स विरराम ह॥ तेषां समीपे यो देशो ह्रदानां रुधिराम्भसाम्। [8] श्यमन्तपञ्चकमिति तत्पुण्यं परिकीर्त्यते॥ येन लिङ्गेन यो देशो युक्तः समुपलक्ष्यते। तेनैव नाम्ना तं देशं वाच्यमाहुर्मनीषिणः" ॥ इति।

अत्र तेषां समीपे यो देश इति समीपशब्देन शमन्तशब्दार्थ उक्त· शमन्तः समनन्तरः समीपदेश· परितो देश इति यावत्। तेषां रुधिराम्भसामित्यनेन पञ्चकशब्दार्थ· षष्ठीसमासश्च प्रदर्शितः शमन्तशब्दस्य पूर्वनिपातस्तु आर्षः, येन लिङ्गेनेत्यनेन तदेव तच्छब्दप्रवृत्तिनिमित्तमित्युक्तम्, अतो नृपेत्येव पाठः साधु. अन्यथोदाहृतभारतविरोधापत्तेः। ननु रुधिरोदकह्रदपञ्चकनिर्माणानन्तर भावितद्देशस्य तन्नामधेयं, तत्कथं "शमन्तपञ्चके पञ्च चकार रुधिरह्रदान्" (भार 1-2-4) इति भारतवचनं प्रकृतं श्रीभागवतवचनञ्च उपपद्यते इति चेन्न। सूत्रशाटकादिसंज्ञावत् भाविसंज्ञाविज्ञानादुपपत्ते·। त्रिस्सप्तकृत्वो रेणुकया दुःखावेशादुदरताडनं कृतं ततो रामस्तावत् कृत्व· क्षत्रमुत्सादितवानिति प्रसिद्धिमवेक्ष्य तत्र तत्र त्रिस्सप्तकृत्व इत्युच्यते ॥१८-१९॥

पितुरिति, ततः पितुश्शिर आदाय तद्बर्हिषि यज्ञे पितुः कायेन सह संयोज्य मखैः क्रतुभिः सर्वदेवमयं देवं परमात्मानमयजत ॥२०॥

ददाविति। ततः प्राचीं दिशं होत्रे दक्षिणां तु दिशं ब्रह्मणे प्रतीच्याशां प्रतीचीं दिशम् अध्वर्यवे उत्तरां दिशमुद्गात्रे अवान्तरदिशः आग्नेयादिदिशः अन्येभ्यः ऋत्विग्भ्य· मध्यमां दिशं काश्यपाय तत्राप्यार्यावर्तं विन्ध्यहिमवत्पर्वतमध्यमदेशम् उपद्रष्ट्रे तत आर्यावर्तात्परं परित· तं देशं विभज्येति शेष सदस्येभ्यो ददौ ॥२१-२२॥

तत इति। ततश्चावभृथस्नात· क्रत्ववसानिके अवभृथाख्ये कर्मणि स्नातः विधूतान्यशेषाणि किल्बिषाणि येन तथाभूतः। विगताभ्रः सूर्य्य [9] इव सरस्वत्याख्यायां ब्रह्मनद्यां रेजे ॥२३॥

1 A omits पृथ्वीं 2 AB स्य॰ 3 AB स्य॰ 4 AB स्य॰ 5 AB ॰स्य 6 AB न्ध्यो 7 W ॰र्चि॰ 8 AB स्य॰ 9 W राज

स जमदग्निस्तु संज्ञानं स्मृतिस्तदेव लक्षणं चिह्नं यस्य तं स्वदेहं लब्ध्वा रामेण पूजित· सप्तर्षीणां मण्डले सप्तमः ऋषिरभूत् ॥२४॥

**विज०** ब्रह्मघ्नैर्ब्राह्मणहन्तृभि· विहता नष्टा श्रीर्यस्या· सा तथा तां शीर्षभिः तस्यां प्रविश्य, मध्ये माहिष्मतीमध्ये ॥१७॥

अब्रह्मण्यानां ब्राह्मणद्वेषिणां भयङ्करां नदीं चक्र इति गतेनान्वय·। निमित्तमाह - हेतुमिति अमङ्गलकारिणि सति ॥१८॥

शमन्तपञ्चके कुरुक्षेत्रे शोणितान्येवोदकानि येषु ते तथा तान् ह्रदान् जलैरगाधप्रदेशान् ॥१९॥

शिरः कायेन सन्धाय बर्हिषि यज्ञ आधाय दर्भबन्धनविशेषे वा सर्वदेवमयं सर्वदेवोत्तमम् ॥२०-२१॥

उपद्रष्ट्रे न्यूनातिरिक्तकर्मसाक्षिणे परम् अवशिष्टम् ॥२२॥

विधूताशेषकिल्बिषत्वमौपचारिकं लोकशिक्षार्थत्वात्। नाम्ना सरस्वत्यां ब्रह्मनद्यां वेदमय्यां नद्यां व्यभ्र· मेघच्छायानिर्मुक्तः अंशुमानादित्यः जनेति पदाध्याहरेणावभृथस्नानविधूताऽशेषकिल्बिषजन इति वा अवभृथस्नानेन विधूतमशेषं किल्बिषं यस्य स तथा अवभृथस्नानविधूताऽशेषकिल्बिषो जनो यस्य स तथा अनेन अवभृथस्नानेन जनस्याऽशेषतः किल्बिषं विदूध्वस्तं भवतीति दर्शनाय रामेण अवभृथस्नानमकारीति सूचितं भवति ॥२३॥

जमदग्निस्तु संज्ञानलक्षणं ज्योतिर्मयलक्षणं स्वयोग्यं देहमाकारविशेषं लब्ध्वा सप्तर्षीणां मण्डले सप्तमः, ऋषिरिति शेषः अभूत् ॥२४॥

**जामदग्न्योऽपि भगवान् रामः कमललोचनः।**
**आगामिन्यन्तरे राजन् वर्तयिष्यति वै बृहत् ॥२५॥**

**आस्तेऽद्यापि महेन्द्राद्रौ न्यस्तदण्डः प्रशान्तधीः।**
**उद्गीयमानचरितः[1] सिद्धगन्धर्वचारणैः ॥२६॥**

**एवं भृगुषु विश्वात्मा भगवान् हरिरीश्वरः।**
**अवतीर्य परं भारं भुवोऽहन् बहुशो नृपान् ॥२७॥**

1 ABGJMMa उपगीय

**गाधेरभून्महातेजाः समिद्ध इव पावकः ।**
**तपसा [1]क्षात्रमुत्सृज्य यो लेभे ब्रह्मवर्चसम् ॥२८॥**

**विश्वामित्रस्य चैवासन् पुत्रा एकशतं नृप ।**
**मध्यमस्तु [2]मधुच्छन्दो मधुच्छन्दस एव ते ॥२९॥**

**पुत्रं कृत्वा शुनः[3]शेपं देवरातं च भार्गवम् ।**
**[4]आजीगर्तिं सुतानाह ज्येष्ठ एष प्रकल्प्यताम् ॥३०॥**

**यो वै हरिश्चन्द्रमखे विक्रीतः पुरुषः पशुः ।**
**स्तुत्वा देवान् [5]प्रजेशादीन् मुमुचे पाशबन्धनात् ॥३१॥**

**यो रातो देवयजने देवै[6-]र्गाधिषु ताप[-6]सः ।**
**देवरात इति ख्यातः शुनः[7]शेपस्तु भार्गवः ॥३२॥**

**श्रीध० जामदग्न्य इति** । बृहत् ब्रह्म वेदम् । वेदप्रवर्तकेषु सप्तर्षिष्वेकतमो भविष्यतीत्यर्थः ॥२५,२६॥

**एवमिति** । भुवो भारमहन् भारमेवाह । नृपानिति ॥२७॥

तदेवं प्रसक्तानुप्रसक्तं समाप्य प्रस्तुतमाह - **गाधेरिति** । महातेजा विश्वामित्रः ॥२८॥

**विश्वामित्रस्येति** । ते सर्वे लिङ्गसमवायन्यायेन प्राणभृत उपदधातीतिवन्मधुच्छन्दस एवोच्यन्ते । तथा च श्रुतिः "तस्य ह विश्वामित्रस्यैकशतं पुत्रा आशुः पञ्चाशदेव ज्यायांसो मधुच्छन्दसः पञ्चाशत्कनीयांसः" इत्यादि । तत्र च विश्वामित्रपुत्रेषु भार्गवस्याजीगर्तस्य देवरातस्य ज्येष्ठत्वमवगम्यते । तथा आश्वलायनबौधायनादिभिः कौशिकानां देवरातप्रवरत्वमुक्तम् । प्रवरश्च तस्मिन्नेव वंशेऽवान्तरभेदो, न तु वंशान्तरम् । तथा च स्मृतिः । "एक एव ऋषिर्यावत्प्रवरेष्वनुवर्तते। तावत्समानगोत्रत्वं विना भृग्वङ्गिरोगणात्" इति ॥२९॥

तत्कुतो [8]भृगुवंशसम्भवस्य देवरातस्य कौशिकप्रवरत्वमित्याशङ्क्य तदुपपादयन्नाह - **पुत्रं कृत्वेत्यादि** यावत्समाप्ति । [9-]पूर्वमजीगर्तसुतत्वे[-9] मध्यमत्वेन पितृभ्यां ममतां विहाय विक्रीतत्वात्तस्य कृपया सुतानाह - ज्येष्ठ एष प्रकल्प्यतामिति ॥३०॥

1 HTVW 'क्षत्र' 2 ABGJMMa 'च्छन्दा' 3 HV 'फ 4 ABGJMMa 'त' 5 TW जलेशा' 6- -6 MMa 'धि सुताय स । 7 ABGJ ०प स , HV 'फस्तु 8 HV प्रवरस्य 9- -9 HV 'गर्त सुतेषु'

एतदेव स्पष्टयितुं तं विशिनष्टि **य** इति द्वाभ्याम्। मुमुचे अमुच्यत ॥३१॥

**य** इति। भार्गवोऽपि गाधिषु गाधेर्वंशजेषु देवरात इति ख्यात· ॥३२॥

**वीर०** जामदग्न्य इति। भगवान् जामदग्न्य· कमललोचनो रामोऽपि हे राजन्! आगामिन्यन्तरे बृहत्वेदं प्रवर्तयिष्यति संप्तर्षिष्वेकतमो भविष्यतीत्यर्थः ॥२५॥

अधुनातु महेन्द्राख्ये अद्रौ पर्वते आस्ते। कथम्भूतः? न्यस्तः त्यक्तः दण्डः क्षत्रवधादिरूपो येन प्रशान्ता धीर्यस्य सिद्धादिभिरुपगीयमानं चरितं यस्य तथाभूतः ॥२६॥

रामचरित्रं[1] निगमयति **एवमिति**। हे नृप! इत्थं भगवान् विश्वात्मा हरिरीश्वरो भृगुष्ववतीर्य भुवः पृथ्व्याः परं भारमधिकं भाररूपं क्षत्रं बहुशो हतवान् नृपानिति पाठे भारमेवाह - नृपानिति। बहुश इत्यनेन कश्चिदवशेषितः स्यादिति सूच्यते तदेवोक्तं पुरस्तात् - "अश्मकान्मूलको जज्ञे य· स्त्रीभिः परिरक्षितः। नारीकवच इत्युक्तो नि·क्षत्रे मूलकोऽभवत्" (भाग.9-9-40) इति ॥२७॥

तदेवं प्रसक्तानुप्रसक्तं परशुरामचरित्रमुपवर्णितमुपसंहृत्य प्रस्तुतं गाधेर्वंशमाह - **गाधेरिति**। गाधेरभूद्विश्वामित्राख्यः पुत्र इति शेषः तं विशिनष्टि, महत्तेजो यस्य, क इव? समिद्धो ज्वलितोऽग्निरिव यो विश्वामित्रस्तपसा हेतुभूतेन क्षत्रं क्षत्र जातिं त्यक्त्वा ब्रह्मवर्चसं लेभे ब्रह्मर्षितां प्राप्त इत्यर्थ·। तस्य ब्रह्मवर्चसावहतपश्चर्यायां हेतुः ब्रह्ममन्त्राभिमन्त्रितचरुप्रभाव इति भावः ॥२८॥

**विश्वामित्रस्येति**। हे नृप! विश्वामित्रस्य च पुत्रा एकशतं सम्बभूवुः, तत्र मध्यमो मधुच्छन्द· तत्सम्बन्धादन्येऽपि सर्वे तद्भातरो लिङ्गसमवायन्यायेन "प्राणभृत उपदधाति" इतिवत्[2-] मधुच्छन्दस एव मधुच्छन्दोनामान एव बभूवुः[-2] तथाच श्रुतिः - "विश्वामित्रस्यैकशतं पुत्रा आसुः पञ्चाशदेव ज्यायांसो मधुच्चन्दसः पञ्चाशत्कनीयांस·" इत्यादि ॥२९॥

यत्प्रतिज्ञातं "शुनःशेपस्य माहात्म्यमुपरिष्टात् प्रवक्ष्यते" (भाग. 9-7-24) इति तदवसरप्राप्तं वक्तुं विश्वामित्रस्य कश्चिद्वृत्तान्तमाह - **पुत्रमिति**। स विश्वामित्रः आजीगर्तिम् अजीगर्तस्य सुतं भार्गवगोत्रजं देवैर्दत्तप्राणत्वात् देवरातापरनामधेयं शुनःशेपं पुत्रं कृत्वा पुत्रत्त्वेन परिगृह्य स्वसुतानेकशतसंख्याकानाह किमिति? एष शुनश्शेपः ज्येष्ठःप्रकल्प्यतां युष्माभिर्ज्येष्ठ भ्रातृत्वेनाभ्युपगम्यतामिति। अत्रेदं कथाशरीरमनुसन्धेयं शुनःशेपो भृगुकुलप्रसूतत्वात् भार्गवः स एव देवरातः देवैर्दत्तप्राणत्वात् स एवाजीगर्तिः अजीगर्तस्य मध्यमः पुत्रः मध्यमत्वादेव पितृभ्यां ममतां विहाय विक्रीतो हरिश्चन्द्रपुत्रेण रोहितेनानीतो यज्ञीयपशुत्वेन

1 A तं 2- -2 A.B omit

हरिश्चन्द्राय समर्पितः तेन यूपे बद्धः प्राणरक्षणार्थं विश्वामित्रं[1] शरणं गतः तदुपदिष्टमन्त्रस्तुतवरुणादिभिर्दत्तप्राणो बभूव तञ्च विश्वामित्रः कृपया पुत्रत्वेन परिगृह्य मध्यमस्य मधुच्छन्दसो ज्येष्ठान् स्वपुत्रान् इमं ज्येष्टं कुरुतेत्युक्तवान् ततस्तैः प्रत्याख्यातस्तान् म्लेच्छा भवतेति शप्त्वा कनिष्ठानाह - ततस्तथेत्यङ्गीकृत्य पञ्चाशता कनिष्ठैस्सह मधुच्छन्दास्तं ज्येष्ठत्वेन परिजग्राह - तदेतदत्रोच्यते, पुत्रं कृत्वेत्यादिना यावत्समाप्ति तदेवं शुनश्शेपस्य विश्वामित्रपुत्रेषु ज्येष्ठत्वमवगम्यते तथा आश्वलायन बौधायनादिभि· कौशिकानां देवरातप्रवरत्वमुक्तं प्रवरश्च तस्मिन्नेव वंशेऽवान्तरभेद· न तु वंशान्तरं। तथा च स्मृति· "एक एव ऋषिर्यावत्प्रवरेष्वनु वर्तते। तावत्समानगोत्रत्वं विना भृग्वङ्गिरोगणात्"। इति ॥३०॥

तत्र कथं भृगुवंशजस्य देवरातस्य कौशिकप्रवरत्वमित्याशङ्क्य तदुपपादनाय प्रवृत्तोऽयं पुत्रं कृत्वेति श्लोकः स च व्याख्यात· यदुक्तं 'ज्येष्ठ एष प्रकल्प्यतामिति। तदेव स्फुटयितुं शुनश्शेपं विशिनष्टि - **य इति** द्वाभ्याम्। यो वै शुनश्शेपः विक्रीत·, पितृभ्यामिति शेषः। हरिश्चन्द्रकर्तृके मखे पुरुषपशुर्बभूव यच्च जलेशादीन् वरुणादीन् स्तुत्वा विश्वामित्रोपदिष्टमन्त्रैरिति शेष[2]।शुनश्शेप·[-2] पाशबन्धनान्मुमुचे अमुच्यत ॥३१॥

यश्च देवयजने वरुणा[3]दिदेवताराधनात्मके हरिश्चन्द्रमखे देवैर्वरुणादिभिः रातो दत्तो दत्तप्राण इति यावत्। गाधिषु गाधिवंशजेषु देवरातेति ख्यात स शुनश्शेपो भार्गव· भृगुवंशज ॥३२॥

**विज०** आगामिन्यन्तरे भविष्यन्मन्वन्तरे बृहत् ब्रह्म वेदलक्षणं वर्तयिष्यति वेदप्रवर्तको भविष्यतीत्यर्थः ॥२५,२६॥

भुवः परं भारं केवलं भारभृतान् नृपानहन् संहृतवान् ॥२७॥

महातेजा विश्वामित्रः ॥२८॥

तस्य विश्वामित्रस्य एकशतं पुत्रा आसन्। तेषामेकोत्तरशतपुत्राणां मध्ये यो मध्यम· स तु मधुच्छन्दो नाम तेन मधुच्छन्दसा संयुक्ता ये पञ्चाशत् पुत्राः ते मधुच्छन्दसनामानो भवन्ति नान्ये "तस्य ह विश्वामित्रस्यैकशतं पुत्र आसु·"इत्यादि ब्राह्मणं च इममेवार्थं वक्ति ॥२९॥

"शुनःशेपस्य माहात्म्यम् उपरिष्टात्प्रचक्ष्यते" (भाग. 9-7-24) इत्युक्तं प्रपञ्चयितुमाह - पुत्रं कृत्वेति। अत्र काचित् - किंवदन्ती मम पुत्रो भवेति विश्वामित्रेणोक्तोऽयमाजीगर्तः शुनःशेपोऽहं त्वत्पुत्राणां ज्येष्ठश्चेत्तव पुत्रः स्यां तत्रापि मध्यमो न स्यां नापि कनिष्ठ इति विश्वामित्रमाह - तदैवमस्त्विति। विश्वामित्र· शुनःशेपं पुत्रं कृत्वाऽन्यानौरसान् पुत्रानब्रवीत् एष शुनः शेपो युष्माकं ज्येष्ठ· प्रकल्प्यताम् भवद्भिरिति शेषः इति। शुनःशेप शब्दं शुण्वतां शुनीजातीयोऽयं किम्! इत्यन्यथा प्रतीतिं निवारयति

1 A B add एव 2- -2 TW omit 3 A B 'णदे'

भार्गवमिति। भृगुवंशोद्भव·, अनेनापि सा कथं निवारिता स्यात् ? इत्यत आह -आजीगर्तमिति। अजीगर्तस्यमुनेरपत्यम्। तर्हि विश्वामित्रस्य पुत्रत्वे का सङ्गतिरित्यतो देवरातमिति विश्वामित्राय देवै· रातं दत्तं विश्वामित्रस्य दत्तपुत्रत्वेन सम्बन्ध इत्यर्थ· ॥३०॥

अनेन विशेष-त्रयेण ज्येष्ठत्वकल्पनायां वैशिट्यमुक्त्वा वैशिष्ष्यान्तरं चाह- य इति। यः शुन·शेपः हरिश्चन्द्रयज्ञे अजीगर्तेन पित्रा रोहिताय विक्रीत पुरुषाख्य· पशुरभूत् यश्च ब्रह्मादिदेवांस्तुत्वा तत्प्रसादात् पाशबन्धनात् संसाराख्यपाशबन्धनात् यूपसम्बन्धिरज्जूबन्धनात् आत्मानं मुमुचे मोचयामास कर्मकर्तरि प्रयोग· "कस्य नूनं कतमस्यामृतानां (ऋक् 1-24-1) मनामहे चरुदेवस्य नाम" इत्यारभ्य "अस्मे रयिनिधापये" इत्यन्तवेदवाक्येन स्तुत्वा। ऋग्भाष्ये एतासामृचामर्थ· आचार्यैरेव विस्तारेणोक्त इति नास्माभि प्रपञ्च्यते ॥३१॥

देवरातशब्दनिर्वचनेन विश्वामित्रस्य तत् सम्बन्धमाह - य इति। य· देवयजने यज्ञे यद्देवै रातो रक्षितस्तैरेव गाधिसुताय विश्वामित्राय रातो दत्त· तस्मात्स देवरात इति ख्यात प्रसिद्ध इत्यतोऽयं भार्गव ॥३२॥

ये मधुच्छन्दसो ज्येष्ठाः कुशलं मेनिरे न तत् ।
अशपत् तान्मुनिः क्रुद्धो म्लेच्छा भवत दुर्जनाः ॥३३॥

स होवाच मधुच्छन्दाः सार्धं पञ्चाशता ततः ।
यन्नो भवान् सजानीते तस्मिंस्तिष्ठामहे वयम् ॥३४॥

ज्येष्ठं मन्त्रदृशं चक्रुस्त्वामन्वञ्चो वयं स्म हि।
विश्वामित्रः सुतानाह वीरवन्तो भविष्यथ।
ये मानं मेऽनुगृह्णन्तो वीरवन्तमकर्त माम् ॥३५॥

एष वः [1] कौशिका वीरो देवरातस्तमन्वित।
अन्ये [2] चाष्टकहारीत[3]जयन्तसुमदादयः ॥३६॥

एवं कौशिक गोत्रं [4] तद्वैश्वामित्रैः पृथग्विधम्।
प्रवरान्तरमापन्नं [5] तद्धि चैवं प्रकल्पितम् ॥३७॥

---

1 ABGJ कुशिका 2 TW चोष्णिक° 3 ABGJMMa °जयक्रतुमदा° 4 ABGJ °तु वि° 5 HTVW तद्धिह्येव , MMa तद्धीत्येव

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
नवमस्कन्धे षोडशोऽध्याय· ॥१६॥

**श्रीध०** **य इति**। तत्तस्य ज्येष्ठत्वं कुशलं न मेनिरे। मध्यमत्वस्यानर्थावहत्वं दृष्ट्वा नाङ्गीकृतवन्तः। मुनिर्विश्वामित्रः ॥३३॥

**स इति**। पञ्चाशता कनिष्ठै· साकं स मध्यमो मधुच्छन्दा उवाच। नोऽस्माकं यज्ज्येष्ठत्वं कनिष्ठत्वं वा भवान् पिता सञ्जानीते मन्यते तस्मिन्वयं तिष्ठामेति ॥३४॥

**ज्येष्ठमिति**। एवमुक्त्वा मन्त्रदृशम् "कस्य नूनं कतमस्यामृतानाम्" (ऋक्.सं. 1-24-1) इत्यादिमन्त्राणां द्रष्टारं शुनःशेपं[1] ज्येष्ठं चक्रुः। तदाह - वयं सर्वे त्वामन्वञ्चः स्म हि, अनुगन्तारः[2] कनिष्ठाः स्म इत्यर्थः। ततः प्रसन्नो विश्वामित्रः तान् सुतानाह - वीरवन्तः पुत्रवन्तो भविष्यथ। ये यूयं मे मानं पूज्यत्वमनुगृह्णन्तोऽनुवर्तमानाः संतो मां वीरवन्तं पुत्रवन्तं अकर्त कृतवन्त इत्यर्थः ॥३५॥

**एष इति**। हे कुशिका एष देवरातो वो युष्मदीयः कौशिक एव। यतो वीरो मत्पुत्रस्तमेनमन्वित अनुगच्छत। अन्ये च अष्टकादयस्तस्य सुता आसन् ॥३६॥

उपसंहरति **एवमिति**। एके शप्ता· एकेऽनुगृहीताः अन्यस्तु पुत्रत्वेन स्वीकृत इत्येवं कौशिकगोत्रं पृथग्विधं नानाप्रकारं जातं, तच्च प्रवरान्तरमापन्नं प्राप्तम्। हि यस्मादेवं देवरातज्येष्ठत्वेन तत्प्रकल्पितम् ॥३७॥

इति श्रीमद्भागवते महापुराणे
श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां नवमस्कन्धे षोडशोऽध्यायः॥१६॥

**वीर०** पित्रा ज्येष्ठ एष प्रकल्प्यतामित्युक्ता ये मधुच्छन्दसस्तेषु ये ज्येष्ठाः पञ्चाशत् ते पित्रोक्तं कुशलं न मेनिरे नाङ्गीकृतवन्तः। ततः क्रुद्धो मुनि· विश्वामित्रः तान् हे दुर्जनाः म्लेच्छा भवत इति अशपत् ॥३३॥

ततः स मधुच्छन्दा मध्यमः पञ्चाशता कनिष्ठैः भ्रातृभिः सह पितरमाह - किमिति? यद्भवान् नोऽस्मान् विजानीते आदिशति तस्मिन्नादेशे वयं तिष्ठामहे आज्ञां करवामेति ॥३४॥

---

1 HV शेफ 2 HV 'ता अनु'

एवमुक्त्वा ततः तं देवरातं मन्त्रदृशं "कस्य नूनं कतमस्यामृतानाम्" (ऋक्.सं 1-24-1) इत्यादि मन्त्राणां द्रष्टारं ज्येष्ठं चक्रुः करणप्रकारं दर्शयति त्वामन्वञ्चो वयं स्महीति। वयं सर्वे त्वामन्वञ्चः स्म हि अनुगन्तारः स्म भवाम तव कनिष्ठा भवामेत्यर्थः। ततो विश्वामित्र. प्रीतः तान् सुतान् यूयं वीरवन्तो भविष्यथ पुत्रवन्तो भविष्यथेति अनुजग्राह ॥३५॥

कोऽस्मासु तवेदृशोऽनुग्रहहेतुरित्यत्राह **य** इति। ये यूयं मानं पूज्यतामनुगृह्णन्तः अनुवर्तमानास्सन्तः यद्वा मानं प्रमाणं मम निश्चयमनुगृह्णन्त· अनुपालयन्त· मां वीरवन्तं पुत्रवन्तं अकर्त कृतवन्त मन्मानप्रत्याख्याने यूयमपि शप्येध्वं देवरातश्च हीयेत अतोऽहमवीरवान् स्यां तथा तु न कृतं युष्माभिरितीमं गुणं पश्यन् अनुगृहीतवानस्मीति भाव । हे कुशिका·! एष देवरात· व· युष्मदीय. कौशिक एव कुत ? यतो वीर मत्पुत्रः तमेनमान्वित अनुगच्छत ततोऽन्ये चोष्णिकादयस्तस्य विश्वामित्रस्य पुत्राः सम्बभूवुरित्यर्थ ॥३६॥

उपसंहरति - **एवमिति**। एके शप्ता एकेऽनुगृहीता अन्यस्तु पुत्रत्वेन स्वीकृत इत्येवं तत् कौशिकगोत्रं विश्वामित्रैः पृथग्विधं नानाप्रकारं जातं ततश्च प्रवरान्तरमापन्नम्। कुत·? हि यस्मादेवं देवरातज्येष्ठत्वेन तत्प्रकल्पितम् ॥३७॥

इति श्रीमद्भागवते नवमस्कन्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां षोडशोऽध्याय ॥१६॥

**विज०** शुनःशेपो ज्येष्ठत्वेन कल्प्यतामिति विश्वामित्रेणोक्ता ये पञ्चाशत्पुत्रा मधुच्छन्दसो जन्मना ज्येष्ठास्ते शुनःशेपस्य ज्येष्ठत्वं स्वात्मनः कनिष्ठत्वं यत्तत् कुशलं साधु न मेनिरे ततः किमभूदिति तत्राह - अशपदिति ॥३३॥

तेषां म्लेच्छभावेन शुन शेपस्य किमायातमिति तत्राह - सहेति। हेत्यनेन ब्राह्मणमनुकरोति स विश्वामित्रः पञ्चाशता सार्धं मधुच्छन्दसमुवाच ह। अयं शुनःशेपो वः ज्येष्ठो भवत्विति विश्वामित्रेणोक्तस्येदमेव वाक्यमुत्तरं, स मधुच्छन्दाः पञ्चाशता सार्धं पितरमुवाच ह ततस्तातः पिता भवान्नोऽस्माकं यद्विजानीते आज्ञापयति तस्मिन्नाज्ञप्ते शुनःशेपस्य ज्यैष्ट्येअस्माकं कानिष्ठ्ये सर्वे वयमविचारेण तिष्ठामहे "प्रकाशनस्थेयाख्ययोश्च" (अष्ट 1-3-23) इति सूत्रात्, निश्चितं स्थिरीकृतं चेदं कार्यमिति भाव· ॥३४॥

तर्हि तथा कुर्वन्त्विति पित्रा उदितास्ते पुत्राः कस्य नूनमित्यादिमन्त्रदृशम् ऋग्वेदद्रष्टारं शुन·शेपं ज्येष्ठं चक्रुः कथं चक्रुरिति तत्राह - त्वामिति। भो देवरात वयं त्वामन्वञ्च· अनुवर्तमानाः कनिष्ठाः स्म भवाम। हि प्रसिद्धे हेतौ वा यस्माद्वयं त्वत्कनिष्ठा अभूम तस्मात्ते ज्येष्ठत्वे संशयो माभूदिति अथवा हे पितः! वयं त्वामन्वञ्चः अनुवर्तमाना. स्म त्वदाज्ञाकारिण इत्यर्थ इति। सन्तुष्टः पिता कं वरं प्रायच्छदिति तत्राह - विश्वामित्र इति। वीरवन्तः पुत्रवन्तः कर्तव्ये विशिष्टप्रेरणावन्तो वा कुतोऽयं वरो

दत्त इति तत्राह - य इति। ये भगवन्तो मे मानमनुगृह्णन्तः परिपालनलक्षणानुग्रहं कुर्वन्तः मा मां वीरवन्तम् अकर्त कृतवन्त इति यस्मात्तस्माद्यूयं वीरवन्तो भविष्यथेति वीरवन्तमकर्तमेति ब्राह्मणवाक्यानुकरणं वेदतुल्यमिति प्रकाशयति अकर्त मम वाक्यमकुर्वत "जीवतो वाक्यकरणादृणसंशोधनेन च। गयायां पिण्डदानाच्च त्रिभिः पुत्रस्य पुत्रता" इति स्मृतेः। हे कौशिकाः! कौशिकगोत्राः एष देवरातो मम वीरः पुत्रो वो युष्माकं ज्येष्ठः यूयं तमन्वित अनुवर्तध्वम् अन्ये चाष्टकादय उनुवर्तन्तामिति शेषः ॥३५,३६॥

उपसंहरति - **एवमिति**। यत्कौशिकगोत्रं तद्वैश्वामित्रैः पृथग्विधमभूत् , कथं तदिति तत्राह - प्रवरान्तरमिति - प्रवरान्तरमापन्नं हि यस्मात्तस्मादेव पृथग्विधं कल्पितं, हि प्रसिद्धमिति भावः ॥३७॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
नवमस्कन्धे षोडशोऽध्यायः ॥१६॥

# सप्तदशोऽध्यायः

## श्रीशुक उवाच

यः पुरूरवसः पुत्र आयुस्तस्याभवन् सुताः।
नहुषः क्षत्रवृद्धश्च रजी [1]रम्भश्च वीर्यवान् ॥१॥

अनेना इति राजेन्द्र [2-]क्षत्रवृद्धान्वयं[-2] शृणु।
क्षत्रवृद्धसुतस्यासन् सुहोत्रस्यात्मजास्त्रयः ॥२॥

काश्यः कुशो गृत्समदः इति गृत्समदादभूत्।
शुनकः शौनको यस्य बह्वृचप्रवरो मुनिः ॥३॥

काश्यस्य काशिस्त[3-]त्पुत्रो राष्ट्रो[-3] दीर्घ[4]तपः पिता।
धन्वन्तरिः [5-]दीर्घतपात्[-5] आयुर्वेदप्रवर्तकः ॥४॥

यज्ञभुग् वासुदेवांशः स्मृतमात्रार्तिनाशनः।
तत्पुत्रः केतुमान्यस्य जज्ञे भीमरथस्ततः ॥५॥

दिवोदासो द्युमांस्तस्मात् प्रतर्दन इति स्मृतः।
स एव शत्रुजिद् [9]वत्स ऋतध्वज इतीरितः ॥
[10]ततः कुवलयाश्वेति प्रोक्तोऽलर्कादयस्ततः ॥६॥

[11]षष्ठिवर्षसहस्राणि [12]षष्टिवर्षशतानि च।
नालर्कादपरो राजन् मेदिनीं बुभुजे युवा ॥७॥

अलर्कात् [13]सन्नतिस्तस्मात् [14]सुनीथोऽथ सुकेतनः।
धर्मकेतुः सुतस्तस्मात् सत्यकेतुरजायत ॥८॥

---

1 MMa राभद्ध 2- -2 ABGJ श्रुणु क्षत्रवृधोऽन्वयम् 3- -3 MMa त्पुत्र सुराष्ट्रो 4 ABGJMMa ˚तम 5- -5 ABGJ दैर्घतम , MMa दीर्घतमर्स 6 H.V ˚भ
7 MMa ˚ति 8 ABGJ ˚मानस्य 9 MMa वत्सो 10 ABGJMMa तथा 11 HTVW षष्ठिं 12 HTVW षष्ठिं 13 ABGJ सन्त˚ 14 TW सुकेतो˚

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

आयोः सप्तदशे त्वैलज्येष्टपुत्रस्य पञ्चसु। सुतेषु क्षत्रवृद्धादिचतुर्णां वंशवर्णनम्।

यद्वाः- वंशान् सप्तदशेऽवादीत् ऐैलज्येष्ठसुतायुषः। पुत्रैरम्भरजिक्षत्र वृद्धानेनोऽभिराहितान् ॥

इह श्रीकृष्णावतारप्रस्तावाय वंशानुक्रमणमैलादिक्रमेण प्रक्रान्तमिति यस्य वंशे कृष्णावतारस्तस्य वंशोऽतिविततत्वादन्ते निरूप्यते। अतः पुरूरवसः पुत्राणां पञ्चानां कनिष्ठानां वंशानुक्त्वा इदानीं प्रथमस्य वंशमाह - **य** इति। एवं नहुषययातियदु प्रभृतिष्वपि द्रष्टव्यम् ॥१॥

**अनेना** इति। क्षत्रवृध· क्षत्रवृद्धस्य ॥२,३॥

**काश्यस्येति**। दीर्घतपसः[1] पिता ॥४॥

**यज्ञेति**। स्मृतमात्र एव आर्तिं रोगं दुःखं नाशयतीति तथा ॥५॥

प्रतर्दनादि शब्दवाच्याद्युमत[2] सकाशादलर्कादयः ॥६,७॥

**अलर्कादिति**।[3] अलर्कात्सन्न[4]तिसंज्ञ· ॥८॥

## श्रीवीरराघवविदुषा लिखिता भागवातचन्द्रचन्द्रिका

तदेवं पुरूरवसः पुत्राणां पञ्चानां कनिष्ठानां वंशाननुवर्ण्येदानीं प्रथमस्यायोर्वंशमाह - **य** इति। यः पुरूरवसः पुत्रः आयुरुक्त तस्य नहुषादय पञ्च सुता अभवन्, तत्र हे राजेन्द्र! तावत् क्षत्रवृद्धस्यान्वयं वंशं शृणु, क्षत्रवृद्धस्य यः सुतः सुहोत्रस्तस्य त्रयः पुत्रा आत्मजा आसन् ॥१,२॥

तान्निर्दिशति - **काश्य** इति। काश्यः कुशो गृत्समद इति। तत्र गृत्समदात् शुनकः समभवत्, यस्माच्छुनकात् शौनको जात·। स च बह्वृचश्रेष्ठ· मुनि· ॥३॥

**काश्यस्येति**। काश्यस्य तु पुत्रः काशिराजः, ततो राज्ञः काशिराजात् दीर्घतपा जातः दीर्घतपसस्तु धन्वन्तरिः, स च आयुर्वेदस्य प्रवर्तक. ॥४॥

यज्ञभुक्[5] यज्ञभागभुक् वासुदेवस्य भगवतोंऽशभूतः, स्मृतमात्र एवार्तिं रोगं नाशयतीति, तथाभूतः, अयं

---

1 ABJ °म° 2 ABJ °मत स° 3 H V omit अलकति 4 ABJ °न्त° 5 TW °भाक्

धन्वन्तरिः समुद्रमथनजातात्, धन्वन्तरेरन्यो भगवदंशावतारभूत एवतत्पुत्रो धन्वन्तरिपुत्रः केतुमान् ततः क्रतुमतो भीमरथो जज्ञे ॥५॥

तस्मात्केतुमतः द्युमान्, जज्ञे इत्यनुषङ्गः। स च दिवोदासाद्यपरनामधेयः। ततो दिवोदासादिशब्दवाच्यादलर्कादयो जज्ञिरे, तत्रालर्कं विशिनष्टि - षष्टिति। षट् सहस्राधिक षष्टिसहस्रवर्षाणि, अलर्क एव युवा सन् मेदिनीं बुभुजे अनुबभूव अलर्कादन्यस्तु न बुभुजे इत्यर्थः ॥६॥

इहोपभोगो भुजेरर्थः न तु पालनं तत्र "भुजोऽनवने" इत्यात्मनेपदनिषेधप्रसङ्गात् ॥७॥

अलर्कात्सन्नितिः तस्मात् सन्नतेः सुकेतः अथ सुकेतात् सुकेतनः 'सुनीतोऽथ सदर्शनः' इति पाठान्तरम्। तस्माद्धर्मकेतुः तस्माच्च सत्यकेतुरजायत ॥८॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

श्रुतायोः सन्ततिं विस्तृत्य पुरूरवसः पुत्रस्य प्रथमस्यायोर्वंशं वर्णयति बादरायणिः य इति। नहुषान्वयस्य राज्यार्हत्वात् क्षत्रवृद्धाद्यन्वयस्य तदनर्हत्वात् सूचीकटाहन्यायमनुसन्दधानः क्षत्रवृद्धाद्यन्वयं वक्ति क्षत्रवृद्धान्वयमिति ॥१-६॥

अलर्कादपरो राजा युवा, तथा न बुभुजे ॥७-८॥

सत्यकेतोर्धृष्टकेतुः सुकुमारः क्षितीश्वरः।
वीति[2]होत्रेऽस्य[2] भर्गोऽतो भार्गभूमिरभूत्[3]नृप। ॥९॥

इतीमे [4]काशयो भूपाः क्षत्रवृद्धान्वयायिनः।
[5]रम्भस्य रभसः पुत्रो गम्भीर[6]श्चाक्रियस्ततः[6] ॥१०॥

तस्य क्षेत्रे ब्रह्म जज्ञे शृणु वंशमनेनसः।
शुद्धस्ततः शुचिस्तस्मात् त्रिककु[7]द्धर्मसारथिः ॥११॥

ततः [8]शान्तरजा जज्ञे कृतकृत्यः स आत्मवान्।
रजेः पञ्चाशतान्यासन् पुत्राणाममितौजसाम् ॥१२॥

---

1- -1 ABGJ धृष्टकेतुः सुतस्तस्मात् , MMa धृष्टकेतु ततस्तस्मात् 2- -2 ABGJ होत्रस्य 3 ABGJ °भूपा। 4 MMa काश्यपा 5 MMa राभस्य
6- -6 H V °श्च कृतस्तत., MMa °श्चक्रकस्तत , TW °श्च क्रतुस्तत॰ 7 ABGHJV °द् 8 ABGJTW °रयो

**देवैरभ्यर्थितो दैत्यान् हत्वेन्द्रायाददाद्दिवम्।**
**इन्द्रस्तस्मै पुनर्दत्वा गृहीत्वा चरणौ रजेः ॥१३॥**

**आत्मानमर्पयामास प्रह्लादात्[1]परिशङ्कितः।**
**पितर्युपरते पुत्रा याचमानाय नो ददुः ॥१४॥**

**त्रिविष्टपं महेन्द्राय यज्ञ[2]भागान् समाददुः ।**
**गुरुणा हूयमानेऽग्नौ बलभित् तनयान् रजेः ॥१५॥**

**अवधीत् भ्रंशितान् मार्गान्न कश्चिदवशेषितः।**
**[3-]कुशात् प्रीतिः[3] क्षात्र[4]वृद्धात् सञ्जयस्तत्सुतो जयः ॥१६॥**

**ततः कृतः कृतस्यापि जज्ञे [5]हर्यवनो नृपः।**
**सहदेवस्ततो [6]भीमो [7]जयत्सेनस्तु तत्सुतः ॥१७॥**

**सङ्कृतिस्तस्य तु जयः क्षत्र[8]धर्मा महारथः।**
**क्षत्रवृद्धान्वया भूपाः [9-]इमे शृण्वथ[-9] नाहुषान् ॥१८॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
नवमस्कन्धे सप्तदशोऽध्याय ॥१७॥

**श्रीध० सत्यकेतोरिति।** सत्यकेतोर्धृष्टकेतुस्तस्मात्[10]सुकुमारः तस्मात्सुकुमाराद्वीतिरोत्रस्तस्य [11]भर्गः अतो भार्ग[11]द्भार्गभूमिः ॥९॥

**इतीति।** काशयःकाशेर्वंश्या , काशेः प्रपितामहस्य क्षत्रवृद्धस्य [12]अन्वयमयन्ते यान्तीति तथा ॥१०॥

**तस्येति।** ततोऽनेनसः शुद्धो जज्ञे ॥११॥

**तत इति।** कृतकृत्यः सः यत आत्मवान् ज्ञानी। अतः पुत्रोत्पादनं न कृतवानित्यर्थः ॥१२-१४॥

---

1 ABGJ °द्य° 2 H V यज्ञे 3 ABGJ कुशात् प्रति , MMa प्रतिक्षत्र 4 MMa क्ष° 5 H V हर्यध्वनो , MMa वीर्यधनो , T W हर्यश्वको 6 ABGJMMa हीनो 7 ABGJ जयस° 8 H V °धमा 9- -9 ABGJ श्रृणु वशश्च नाहुषान् 10 ABJ omit सुकुमारात् 11 H V omit भर्ग. 12 H V add यं

**त्रिविष्टपमिति**। तेषां मतिभ्रंशाय गुरुणा बृहस्पतिनाऽभिचारविधानेनाग्नौ हूयमानो सति ॥१५॥

सिंहावलोकनन्यायेना[1]ह **अवधीदिति**। क्षात्रवृद्धात् क्षत्रवृद्धपौत्रात् कुशात्[2]प्रीति[3] । प्रीतेः[4] संजय ॥१६-१८॥

इति श्रीमद्भागवते महापुराणे
श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्यख्यायां नवमस्कन्धे सप्तदशोऽध्यायः॥१७॥

**वीर०** सत्यकेतोः धृष्टकेतु , तत्तस्मात्सुकुमाराख्यः सुतः क्षितीश्वरो जज्ञे। सुकुमाराद्वीतिहोत्र , तस्य भर्ग. ततो भर्गात् भार्गभूमिरभूत् ॥९॥

हे नृप! इतीत्थमिमे उक्ताः काशय· काश्यस्य वंशजा नृपाः क्षत्रवृद्धस्य काश्यप्रपितामहस्यान्वयम्। अयन्ते यान्तीति तथा, एवं क्षत्रवृद्धान्वय उक्तः, अथ रम्भस्यान्वयमाह - रम्भस्य पुत्रो रभस· गम्भीरश्च, ततो रभसात् क्रतु· ॥१०॥

तस्य क्रतोः क्षेत्रे कलत्रे ब्रह्म ब्राह्मणकुलं जज्ञे,अथानेन सः आयोः पुत्रस्य कनीयसो वंशं शृणु, ततोऽनेन स·शुद्ध·, तत शुद्धात् शुचिः, तस्मात् त्रिककुप्, स एव धर्मसारथ्यरनामधेयः ॥११॥

ततस्त्रिककुपः शान्तरयो जज्ञे, स च कृतमनुष्ठितं कृत्यं मुक्तिसाधनं येन तथाभूत , आत्मवान् ज्ञानयोगनिष्ठश्च, अत पुत्रोत्पादनं न कृतवानिति भाव । अथ रजेरायु पुत्रस्य वंशमाह - रजेरिति। रजे पुत्रा पञ्चशतसंख्याका अनवधिकतेजस· सम्बभूवुरित्यर्थः ॥१२॥

रजेश्चरित्रमाह - देवैरभ्यर्थितो रजिर्दैत्यान् हत्वा दिवं त्रिविष्टपं दैत्यैरपहृतमिन्द्राय ददौ। इन्द्रस्तु पुन· प्रह्लादादतीव शङ्कितो दिवं तस्मै रजये दत्वा रजेश्चरणौ गृहीत्वा आत्मानमर्पयामास, स्वरक्षाभरं तस्मिन्निहितवानित्यर्थ·[5]। तत्पुत्रचरित्रमह - पितरीति। अथ पितरि रजावुपरते मृते सति तस्य पुत्राः पञ्चशतं याचमानायेन्द्राय त्रिविष्टपं न ददुः ॥१३,१४॥

किञ्च यज्ञभागान् समाददुः स्वीकृतवन्तः अथ गुरुणा बृहस्पतिना अभिचारविधिना तेषां मतिभ्रंशायाऽग्नौ हूयमाने सति मार्गादिन्द्राधिपत्यानुकूल बुद्धिरूपात् भ्रंशितान् रजे· पुत्रान् सर्वान् बलभिदिन्द्रोऽवधीत् जघान कश्चिदेकोऽपि नावशेषितः पूर्वं क्षत्रवृद्धपौत्राणां काश्यकुशगृत्समदानां मध्ये काश्यगृत्समदयोर्वंशावुक्तौ गृत्समदादभूदित्यादिना। तत कुशस्य वंशमाह - कुशादित्यादिना यावत् समाप्ति। क्षात्रवृद्धात् क्षत्रवृद्धपौत्रात्, कुशात्प्रीतिर्जज्ञे तत्सुत· प्रीतिसुत सञ्जय·, तत· सञ्जयाज्जयो जज्ञे ॥१५-१६॥

---

1 ABJ °नेनाह 2 H V omit कुशात् 3 ABJ त्प्रति 4 ABJ प्रते 5 AB °त

**ततो जयात्कृतः** हे नृप! कृतस्य हर्य्यश्वकः पुत्रो जज्ञे। ततो हर्य्यश्वकात् सर्वदेवस्ततो भीमः तत्सुतो भीमसुतः **जयसेनः** [1]**तस्य जयसेनस्य**[1] **तनयः** संकृतिः, स च क्षत्रधर्मा महाशूरः महारथश्च। क्षत्रवृद्धान्वयं निगमयन् नहुषान्वयं वक्तुं तच्छ्रवणाय राजानमादिशति - क्षत्रवृद्धान्वये जाता इति शेषः। इमे उक्ता [2]भूपालाः अथ नाहुषान्नहुषवंशजान् **शृणु** ॥१७-१८॥

इति श्रीमद्भागवते नवमस्कन्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां सप्तदशोऽध्यायः ॥१७॥

**विज० इतीमे** काश्यजाः काश्यस्य सन्तानजा भूपाः ॥९-१५॥

**पुनरपि क्षत्रवृद्धात्**प्रतिक्षत्रोऽभूत् ॥१६-१८॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
नवमस्कन्धे सप्तदशोऽध्यायः ॥१७॥

---

1. -1 AB स्वस्य 2 TW भूपा

# अष्टादशोऽध्यायः

## (विजयध्वजरीत्या पञ्चदशोऽध्यायः)

### श्रीशुक उवाच

यतिर्ययातिस्संयातिरायातिर्वि[1]यतिः कृतिः।
षडिमे नहुषस्याऽऽसन्निन्द्रियाणीव देहिनः। ॥१॥

राज्यं नैच्छद्यतिः पित्रा दत्तं तत्परिणामवित्।
यत्र प्रविष्टः पुरुष आत्मानं नावबुध्यते ॥२॥

पितरि भ्रंशिते स्थानादिन्द्राण्या धर्षणाद्द्विजैः।
प्रापितेऽजगरत्वं [2]वै ययातिरभवन्नृपः ॥३॥

चतसृष्वादिशद्दिक्षु [3]भ्रातॄन् भ्राता यवीयसः।
कृतदारो जुगोपोर्वीं काव्यस्य वृषपर्वणः ॥४॥

### राजोवाच

ब्रह्मर्षिर्भगवान्काव्यः क्षत्रबन्धुश्च नाहुषः।
राजन्यविप्रयोः कस्माद्विवाहः [4]प्राति[5]लोमिकः ॥५॥

### श्रीशुक उवाच

एकदा दानवेन्द्रस्य शर्मिष्ठा नाम कन्यका।
सखीसहस्रसंयुक्ता गुरुपुत्र्या च भामिनी ॥६॥

देवयान्या पुरोद्याने पुष्पितद्रुमसङ्कुले।
व्यचरत्कलगीतालिनलिनीपुलिनेऽबला ॥७॥

[6-]ता जलाशय[-6]मासाद्य कन्याः कमललोचनाः।
तीरे न्यस्य दुकूलानि विजह्रुस्सिञ्चतीर्मिथः ॥८॥

---

1 ABGJMMa °य° 2 M Ma च 3 M Ma गोप्तृन् 4 ABGJ प्र° 5 ABGJMMa °म° 6- -6 MMa जलाशय समा°

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

**अष्टादशे ययातेस्तु नाहुषस्य कथोच्यते। यस्य पञ्चसु पुत्रेषु कनीयानग्रहीज्जराम्॥**

**यद्वाः आयुषो ज्येष्ठपुत्रस्य नहुषस्याग्रजस्सुतः। ययातिः पूरुमकृताष्टदशे नृपमात्मजम्॥**

**राज्यमिति**। तस्य राज्यस्य परिणाममनर्थावहत्वं वेत्तीति तथा। तत्र हेतुः यत्रेति ॥१,२॥

**पितरीति**। स्थानात्स्वर्गात्। द्विजैरगस्त्यादिभिः ॥३॥

**चतसृष्विति**। यवीयसो भ्रातॄनादिशत्। काव्यस्य शुक्रस्य वृषपर्वणश्च, कन्याभ्यां कृतदारस्सन् ॥४,५॥

नाऽत्र प्रतिलोमता दोष ईश्वरघटनादिति दर्शयन् कथामाह - 'एकदेत्यारभ्य[1] प्रतिजग्राह तद्वच' इत्यन्तेन। गुरोः शुक्रस्य पुत्र्या **देवयान्या च सह**[2] व्यचरदिति द्वयोरन्वयः ॥६॥

**देवयान्येति**। कलगीता अलयो येषु तानि नलिनीपुलिनानि यस्मिंस्तस्मिन् पुरोद्याने, अबला शर्मिष्ठा ॥७॥

**ता इति**। सिञ्चतीः सिञ्चन्त्यः[3] [4]प्रथमार्थे द्वितीया[4] ॥८॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

**यतिरिति**। देहिनः इन्द्रियाणीव नहुषस्य यतिप्रभृतयष्षट् आत्मजा आसन् ॥१॥

**राज्यमिति**। तत्र यतिर्ज्येष्ठ· पित्रा नहुषेण दत्तमपि राज्यं नैच्छत्। कथम्भूतः? तत्परिणमवित् राज्यस्य दुःखोदर्कत्वं जानन्नित्यर्थः। तत्र हेतुमाह - यत्र राज्ये प्रविष्टः अधिकुर्वन्पुमान् आत्मानं नावबुध्यते ॥२॥

**पितरीति**। इन्द्राण्या प्राप्तेन्द्राधिपत्येन नहुषेण मां भजस्वेत्युक्त्या शच्या विज्ञापितैर्द्विजैर्नहुषेण स्ववाहनं वोढुं विष्टिगृहीतैर्वाहनस्थेन तेन पादाङ्गुष्ठेन ताडनपूर्वकं, 'सर्पत, सर्पत' इत्युक्तैरगस्त्यादिभिः कृतिभिः[5] धर्षणात् 'सर्पो भव' इत्येवमुक्तिपूर्वकं[6] वाहनपातरूपाद्धर्षणात् पितरि नहुषे स्थानात्त्रिविष्टपात् भ्रंशिते अजगरत्वञ्च प्रापिते सति ययातिर्नृपः अधिकृतराज्यो बभूव ॥३॥

**चतुसृष्विति**। स च कनिष्ठान् चतुरो भ्रातॄन् संयातिप्रभृतीन् चतसृषु दिक्षु आदिशत्, पालनार्थमिलि शेषः। स्वयन्तु काव्यस्य वृषपर्वणो दानवस्य च कन्याभ्यामिति शेषः। कृतदारस्सन् पृथ्वीं जुगोप ॥४॥

काव्यस्य कृतदार इत्युक्त्या लब्धप्रश्नवासरः पृच्छति राजा **ब्रह्मर्षिरिति**। भगवान्काव्यो ब्रह्मर्षिः, नाहुषो ययातिस्तु

1 ABJ 'इत्यादिना 2 ABJ omit सह 3 H V 'त्य 4-4 ABJ omit 5 TW omit कृतिभि 6 AB यात

क्षत्रबन्धुः क्षत्रियावरः अतस्तयोराजन्यविप्रयोः कस्माद्धेतोः प्रातिलोमिको विवाहः कृतः? श्वशुरजामातृभावरूपः सम्बन्धः आसीत्? इति प्रश्नः ॥५॥

न प्रतिलोमतादोषः ईश्वरघटनादिति दर्शयन् कथामाह - 'एक इत्यादिना प्रतिजग्राह तद्वच' इत्यन्तेन। दानवेन्द्रस्य वृषपर्वणः कन्यका शर्मिष्ठा नाम भामिनी अबला कदाचित्सखीनां सहस्रेण गुरो· काव्यस्य पुत्र्या देवयान्या च संयुक्ता सती ॥६॥

पुष्पितैर्द्रुमैः सङ्कुले कलमव्यक्तमधुरं गीतं येषां ते, अलयो भृङ्गा येषु तानि नवानि पुलिनानि यस्मिंस्तस्मिन् पुरोद्याने व्यचरत् ॥७॥

**ता** इति। ताः शर्मिष्ठाप्रभृतयः कमललोचनाः कन्याः जलाशयमासाद्य तत्तीरे दुकूलानि निधाय तस्मिन् मिथः सिञ्चती· सिञ्चन्त्य· विजह्रुः विहारं चक्रुः ॥८॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

अथ नहुषस्य सन्ततिमनुक्रामति - **यतिरित्यादिना** ॥१॥

तस्य राज्यस्य परिणामवित् फलपरिपाकपटुतां जानातीति। यत्र राज्ये ॥२॥

इन्द्राण्या धर्षणात् शच्याः संस्पर्शनिमित्तात् पितरि नहुषे स्वर्गस्थानात् द्विजैर्भ्रंशिते त्याजिते, अजगरत्वं महासर्पत्वं प्रापिते सति.॥३॥

यवीयसः कनिष्ठान्[1] संयातिपूर्वान् काव्यस्य शुक्रस्य पुत्र्या देवयान्या, वृषपर्वणो दैत्यस्य पुत्र्या शर्मिष्ठया कृतदारः ॥४॥

प्रातिलोम्येन विवाह· कथं घटते इति पृच्छति - **ब्रह्मर्षिरिति** ॥५॥

दैववशादिदंपाणिग्रहणं प्राप्तं, न तु मानुषवदिति प्रकाशयितुमाख्यायिकां कथयति - **एकदेति** ॥६,७॥

सिञ्चतीः अन्योन्यजलप्रक्षेपं कुर्वन्त्यः ॥८॥

**वीक्ष्य व्रजन्तं गिरिशं सहदेव्या वृष[2]स्थितम्।**
**सहसोत्तीर्य वासांसि पर्यधुर्व्रीडिताः स्त्रियः ॥९॥**
**शर्मिष्ठाऽजानती वासो गुरुपुत्र्यास्[3]समव्ययत्।**
**स्वीयं मत्वा प्रकुपिता देवयानीदमब्रवीत् ॥१०॥**

1 AB य॰ 2 MMa ॰षे 3 HV पुत्र्यास्समप्यधात् , TW पुत्र्यास्तु पर्यधात्

**अहो निरीक्ष्यतामस्मद्दास्याः[1] कर्म ह्यसाम्प्रतम्।**
**अस्मद्धार्यं धृतवती शुनीव हविरध्वरे ॥११॥**

**यैरिदं तपसा सृष्टं मुखं पुंसः परस्य ये[2]।**
**धार्यते यैरिह[3] ज्योतिः शिवः पन्थाश्च दर्शितः ॥१२॥**

**यान्नमन्त्युपतिष्ठन्ते[4] लोकनाथास्सुरेश्वराः।**
**भगवानपि विश्वात्मा पावनः श्रीनिकेतनः ॥१३॥**

**वयं तत्राऽपि भृगवः शिष्योऽस्या नः पिताऽसुरः।**
**अस्मद्धार्यं धृतवती शूद्रो वेदमिवाऽसती ॥१४॥**

**एवं शपन्तीं[5] शर्मिष्ठा गुरुपुत्रीमभाषत।**
**रुषा श्वसन्ती[6] व्यालीव धर्षिता दष्टदच्छदा ॥१५॥**

**आत्मवृत्तमविज्ञाय[7] कत्थसे बहु भिक्षुकि[8]!**
**किं न प्रतीक्षसेऽस्माकं गृहान् बलिभुजो यथा ॥१६॥**

**श्रीध० शर्मिष्ठेति**। अजानती स्वीयं मत्वा गुरुपुत्र्या वासः समप्यधात्[9] पर्यधात् ॥९,१०॥

**अहो इति**। "असाम्प्रतमन्याय्यम्" ॥११॥

अन्यायमेव ब्राह्मणोत्कर्षवर्णनेन व्यनक्ति **यैरिति** त्रिभिः। ये ब्राह्मणाः परस्य पुंसो मुखम्। मुखादुत्पन्नत्वेन तृप्तिद्वारत्वेन च श्रेष्ठा इत्यर्थः। ज्योतिर्ब्रह्म। पन्था वेदमार्गः ॥१२,१३॥

तदेवं ब्राह्मणमात्रमेव तावत्पूज्यं - **वयमिति**। तत्राऽपि वयं[10] भृगवः। अस्याश्च पिता असुरः[11] नः शिष्यः एवं सत्यपि अस्माभिः धार्यं वासः इयमसती धृतवती ॥१४-१६॥

**वीर० वीक्ष्येति**। तदा ताः स्त्रियः देव्या उमया सह वृषे स्थितं व्रजन्तं गिरिशं रुद्रमवलोक्य व्रीडिता आशु उत्तीर्य तीरमारुह्य वासांसि पर्यधुः धृतवत्यः ॥९॥

---

1 ABGJ 'तामस्या दा', MMa ता मह्य दा' 2 M Ma वै 3 M Ma यै पर 4 ABGJ यान्वन्दन्त्युप', MMa येऽपीदमुप 5 H V ब्रुवन्ती', MMaTW क्षिपन्ती'
6 ABGJ 'न्त्युरगीव, M Ma 'न्ती नागीव 7 MMa 'त्ति' 8 H V 'की 9 ABJ समव्ययत् 10 ABJ वय 11 ABJ असुर

**शर्मिष्ठेति**। तदा शर्मिष्ठा अजानती गुरुपुत्र्या देवयान्या वासः पर्यधात् । ततो देवयानी शर्मिष्ठया परिधृतं वासः स्वकीयं मत्वा प्रकुपिता सती इदं वक्ष्यमाणमब्रवीत् ॥१०॥

तदेवाऽऽह- **अहो** इत्यादिना क्षिपन्तीमित्यतः प्राक्तनेन । अहो अस्या दास्या असाम्प्रतमयुक्तं कर्म निरीक्ष्यताम्। किं तत्? यदस्मद्धार्यं वासो धृतवतीत्येतत्। असाम्प्रतत्वं स्फुटीकर्तुं दृष्टान्तमाह - शुनी यथा अध्वरे यज्ञे हविर्ग्रहीतुमनर्हा, तद्व दस्मद्धार्यं वस्त्रमियं परिधातुमनर्हेत्यर्थः ॥११॥

असाम्प्रतत्वमेव ब्राह्मणोत्कर्षवर्णनेन व्यनक्ति- **यैरिति**। यैः ब्राह्मणैः भृग्वादिभिस्तपसा परमपुरुषस्य मुखं मुखस्थानीयमिदंब्राह्मणकुलं[1] सृष्टम्, यैश्चेदं ज्योतिः स्वरूपं परं ब्रह्म धार्यते उपास्यते, यैश्च शिवः क्षेमङ्करः[2] पन्थाः वैदिकमार्गश्च प्रदर्शितः ॥१२॥

**यानिति**। यान् ब्राह्मणान् सुरेश्वरा लोकनाथाः। किमुत, परमपावनः श्रीनिवासो विश्वात्मा भगवानपि, प्रणमन्ति, उपतिष्ठन्ते प्रत्युद्गच्छन्ति ॥१३॥

**तत्रेति**। तत्राऽपि उक्तैर्धर्मैः श्रेष्ठेषु तेषु ब्राह्मणेष्वपि वयं भृगवः भृगुवंशजाः। अस्याः शर्मिष्ठायाः पिता असुरो वृषपर्वा नोऽस्माकं शिष्यश्च। एवं स्थिते इयमसती अनर्हा अस्मद्धार्यं वस्त्रं धृतवती, यथा, अनर्हः शूद्रो वेदं तद्वत् ॥१४॥

**एवमिति**। एवमित्थं क्षिपन्तीं तिरस्कुर्वन्तीं गुरुपुत्रीं देवयानीं शर्मिष्ठोवाच। कथम्भूता? धर्षिता, निष्ठुरवाक्यैरिति शेषः। रुषा उरगी पन्नगीव श्वसन्ती श्वासं मुञ्चती, दष्टो दच्छदोऽधरोष्ठो यथा तथाभूता ॥१५॥

भाषणमेवाऽऽह - **आत्मवृत्त मिति**। हे भिक्षुकि ! त्वमात्मवृत्तमविज्ञाय बहुधा कत्थसे आत्मानं श्लाघसे। वृत्तिमेव दर्शयन्त्याऽऽह- किमिति। यथा बलिभुजो वायसाः श्वानो वा तथा त्वमस्माकं गृहान्न प्रतीक्षसे किम्? जीवनार्थं न प्रतीक्षितवत्यसि किम् ? ॥१६॥

**विज०** पर्यधुराच्छादितवन्त्यः ॥९॥

अजानती शर्मिष्ठा गुरुपुत्र्या वासः स्वीयं मत्वा समव्ययत् संवीतवती। 'व्यय संवरणे' इति धातुः। तथा प्रकुपिता प्रारब्धकोपा देवयानी इदं वाक्यमुवाचेत्यन्वयः ॥१०॥

मह्यं मम असाम्प्रतमयुक्तम् ॥११॥

---

1 TW ब्रह्मकुलं 2 AB °मकर

स्वकुलप्रशंसार्थं ब्राह्मणानां माहात्म्यं कथयति - यैः इदमित्यादिना। इदं विश्वं यैर्ब्राह्मणैस्तपसा सृष्टं, ये परमस्य पुंसः मुखं, यैरिदं परं ज्योतिर्ब्रह्माख्यं धार्यते, यैश्च शिवः पन्थाः वेदमार्गो दर्शितः ॥१२॥

ये लोकनाथास्सुरेश्वराः, तेऽपीदं ब्राह्मणकुलमुपतिष्ठन्ते अग्निमुखेन हविरादातुं प्रतीक्षन्ते विश्वात्मा भगवानपि ब्राह्मणप्रियः तिष्ठतीति शेषः ॥१३॥

वयं तत्र ब्राह्मणेषु भृगवः भृगुकुलजाः, अत एव श्रेष्ठा इति शेषः। अस्याः पिता वृषपर्वाऽसुरो नोऽस्माकं शिष्यः अस्मत्पितृशिष्यत्वादहमपि तत्पुत्रीत्वान्मान्येति यस्मात्तस्मात् अस्मद्धार्यं वस्त्रमिदं धृतवती, यथा वेदग्रहणायोग्यो वृषलो वेदं धारयति तथेति ॥१४॥

धर्षिता अप्रगल्भीकृता, तुच्छीकृतेत्यर्थः ॥१५॥

बहु कत्थसे व्यर्थवचनं वदसि, भिक्षुकि! त्वं स्पष्टमित्याह किन्नेति। बलिभुजः श्वानः काको वा? ॥१६॥

एवंविधैस्सुपरुषैः क्षिप्त्वाऽऽचार्यसुतां सतीम्।
शर्मिष्ठा प्राक्षिपत्कूपे वासश्चा[1]दाय मन्युना ॥१७॥

तस्यां गतायां स्वगृहं ययातिर्मृगयाञ्चरन्।
प्राप्तो यदृच्छया कूपे जलार्थी[2] तां ददर्श ह ॥१८॥

दत्त्वा स्वमुत्तरं वासस्तस्यै राजा विवाससे।
गृहीत्वा पाणिना पाणिमुज्जहार दयापरः ॥१९॥

तं वीरमाहौशनसी प्रेमनिर्भरया गिरा।
राजंस्त्वया गृहीतो मे पाणिः परपुरञ्जय ॥२०॥

हस्तग्राहो[3]ऽपरो मा भूद्गृहीतायास्त्वया हि मे।
एष ईशकृतो वीर। सम्बन्धो नौ न पौरुषः।
यदिदं कूपलग्नाया[4] भवतो दर्शनं मम ॥२१॥

न ब्राह्मणो मे भविता हस्तग्राहो महाभुज।
कचस्य बार्हस्पत्यस्य शापाद्यमशपं पुरा ॥२२॥

1 ABGJ 'स आ', MMa 'सस्त्वा' 2 H V 'र्थं 3 W 'ह परो 4 MMa 'म'

**ययातिरनभिप्रेतं दैवोपहृतमात्मनः ।**
**मनश्च[1] तद्गतं बुद्ध्वा प्रतिजग्राह तद्वचः ॥२३॥**

**गते राजनि सा वीरे तत्र स्म रुदती पितुः ।**
**न्यवेदयत्ततः सर्वमुक्तं शर्मिष्ठया कृतम् ॥२४॥**

**श्रीध०** निषिद्धोऽयं प्रतिलोमसम्बन्ध इति चेत्तत्राऽऽह **एष** इति ॥१७-२१॥

ब्राह्मणमेव त्वं वृणीहि किमनेनाऽऽग्रहेण इति चे त्तत्राऽऽह न **ब्राह्मण इति**। बृहस्पते सुतः कच· शुक्रान्मृतसञ्जी वर्नी विद्यामध्यगात्[2]। तदा च देवयानी तं पतिं चकमे। स च गुरुपुत्री मम पूज्येति न तामुदवहत्। ततश्च कुपिता सती 'तवेयं विद्या निष्फला भव' त्विति तं[3] शशाप। स च, 'तव ब्राह्मणः पतिर्न भवे' दिति तां शशाप। तदेतदाह - कचस्येति। **य महमशपं तस्य** शापात् ॥२२॥

**ययातिरिति**। अशास्त्रीयत्वादनभिप्रेतमपि दैवेनोपहृतं प्रापितं बुद्ध्वा तद्गतं तस्यां सकामं स्वं[4] मनश्च बुद्ध्वा, न ह्यधर्मे मदीयं मन· प्रविशेदिति तस्या· वच· प्रतिजग्राहाऽङ्गीकृतवान् ॥२३॥

शर्मिष्ठा सम्बन्धोऽपि दैववशादेवाभव[5] दिति दर्शयन्नाऽऽह- **गते राजनीति** नवभि·। उक्तं भिक्षुकि! इत्यादि। कृतं[6] कूप प्रक्षेपादि ॥२४॥

**वीर० एवंविधैरिति**। एवंविधैरन्यै· परुषैर्वचोभिराचार्यस्य गुरोस्सुतां क्षिप्त्वा उपालभ्य सती शर्मिष्ठा मन्युना वासो वस्त्रंश्चादाय तामाचार्यसुतां कूपे प्राक्षिपत् पातयामास ॥१७॥

**तस्यामिति**। अथ तस्यां शर्मिष्ठायां स्वगृहं प्रतिगतायां सत्यां ययातिर्मृगयां चरन् यदृच्छया जलार्थी तत्र कूपसमीपं प्राप्त· गतः तत्र तां कन्यां देवयानीं नग्नां ददर्श ॥१८॥

**दत्त्वेति**। ततो विवाससे नग्नायै तस्यै देवयान्यै स्वकीयमुत्तरीयं वस्त्रं दत्वा राजा ययाति दयापर· पाणिना तस्या· पाणिं गृहीत्वा तां बहिरुद्धृतवान् ॥१९॥

**तमिति**। तमुद्धृतवन्तं वीरं ययातिम् औशनसी काव्यसुता प्रेमपूर्णया गिरा उवाच। तदेवाऽऽह - राजन्निति त्रिभिः। हे राजन्! परेषां पुराणि जयतीति तथाभूत! मम पाणिः त्वया गृहीतः ॥२०॥

---

1 ABGJMMa °स्तु 2 H V °मभ्य° 3 H V omit त 4 B स्वस्य म, H V °स्वम° 5 H V °भूदिति 6 ABJ कूपे प्र°

अतस्त्वया गृहीताया मम परो हस्तग्राहः अन्यदीयपाणिना मत्पाणिग्रहो मा भूत्, मामुद्वहस्वेत्यर्थः। ननु, त्वं ब्राह्मणी अहन्तु राजन्यः। कथमावयोः प्रातिलोमिको विवाहः स्यादित्यत्राऽऽह- **एष** इति। हे वीर! नौ आवयोरेष भर्तृभार्याभावरूपः सम्बन्ध ईश्वरकृतः, न तु पौरुषो मनुष्यकृतः। अतोऽत्र न दोष इति भावः।

नन्विमं सम्बन्धं कुर्वन्नीश्वरोऽत्र न दृश्यत इत्यत्राऽऽह- यदिति। यत् यस्मात् कूपलग्नाया ममेदमसम्भावितं भवतो दर्शनमभूत्, यथेदं दर्शनमीश्वरकारितमनुमीयते, तथा सम्बन्धश्चेति भावः॥२१॥

किञ्च। मम राजन्य एव पति र्भविता, न ब्राह्मण इत्याह - **नेति**। हे महाबाहो! मे मम हस्तग्राहः, पाणेर्ग्राहको भर्तेति यावत्, ब्राह्मणो न भविता, न भविष्यति। कुतः बार्हस्पत्यस्य बृहस्पतिसुतस्य कचस्य शापत्। कोऽसौ कचः? तत्राऽऽह -यं कचमहं पुरा प्रथममशपं, तस्य शापशदित्यर्थः। बृहस्पतेः सुतः कचः शुक्रान्मृतसञ्जीवनीं विद्यामध्यगात्। तदा देवयानी तं पतिं चकमे। स च गुरुपुत्री त्वं मम पूज्या इत्युक्त्वा न तामुपयेमे। ततस्सा कुपिता सती तवेयं विद्या निष्फला भवत्विति शशाप। स च तव पतिर्ब्राह्मणो न भविष्यतीति शशापेति कथाऽत्राऽनुसन्धेया ॥२२॥

ततो ययातिरशास्त्रीयत्वादनभिप्रेतमपि दैवेनोपहृतं प्रापितं बुद्ध्वा तद्गतं तस्यामासक्तं मनश्च बुद्ध्वा, न ह्यधर्मे मदीयं मनः प्रविशेदिति तस्या वचः प्रतिजग्राह अङ्गीकृतवान् ॥२३॥

शर्मिष्ठासम्बन्धोऽपि दैववशादेवाऽभवदिति दर्शयन्नाऽऽह - **गते राजनीति** नवभिः। वीरे राजनि ययातौ गते सति सा देवयानी तत्र गता रुदती पितुः समीपम्, एत्येति शेषः। शर्मिष्ठया कृतमुक्तञ्च तत्सर्वं न्यवेदयत् ॥२४॥

**विज०** उत्तरमुत्तरीयम्। उज्जहार कूपादिति शेषः॥१७-१९॥

प्रेमनिर्भरया स्नेहपूर्णया। हस्तं गृह्णातीति हस्तग्राहः, पाणिग्रहणकर्ता अपरोऽन्यो न स्यात् हस्तग्राह इति पाठे हस्ते ग्राहो ग्रहणं यस्य स तथा। 'कुम्भकारवदण् प्रत्ययान्तो वा' । कूपमग्नाया मम भवतो यदिदं दर्शनम्। एष सम्बन्धः ईशकृतः श्रीनारायणविहितः न पौरुषः पुरुषकाररचितो न भवति ॥२०,२१॥

ब्राह्मणपुत्र्यास्तव ब्राह्मण एव भर्ता युक्तो न क्षत्रियः, प्रतिलोमप्रवेशप्रसङ्गादिति शङ्कां परिहरति - **न ब्राह्मण** इति। हे महाभुज! मे ब्राह्मणो हस्तग्राहो न भविता न भविष्यति। कुत इति तत्राऽऽह- कचस्येति। बार्हस्पत्यस्य बृहस्पतेरपत्यस्य नाम्ना कचस्य शापात् मृतसञ्जीवनीविद्यार्थी कचस्तत्प्रतिग्रहाय बहुतिथं गुरुपरिचर्यां विधाय तत्प्रसादमापाद्य तद्विद्यामादाय गुरो रनुज्ञया गन्तुकामं कचमुपलभ्य, सर्वप्रकारेण कचस्य हितमाचरन्त्या मया भो कच! त्वं मम भर्ता भव-इत्युक्तो मामुवाच हे देवयानि! त्वया नैवं वक्तव्यं यत् भ्राताऽऽहमिति, तदा कुपिताऽहं तमशपम् - मत्पितुरवाप्तविद्या न

फलत्वितीयमाख्यायिकाऽनेनोच्यते। यमशपं पुरेति अहं पुरा यं कचमशपं शप्तवती, तस्य शापादिति ॥२२॥

अनन्तरं ययातिना किं कृतं इत्यत्राऽऽह- **ययातिरिति**। यदनभिप्रेतं प्रातिलोम्येनोद्वहनं तदेवाऽऽत्मनः दैवेन श्रीनारायणेन उपहृतमर्पितमात्मनो मनश्च तस्यां गतमनुरक्तं बुध्द्वा तस्या देवयान्याः वचः प्रतिगृहीतवानित्यन्वयः ॥२३,२४॥

**दुर्मना भगवान्काव्यः पौरोहित्यं विगर्हयन्।**
**स्तुवन् वृत्तिश्च कापोतीं दुहित्रा स ययौ पुरात् ॥२५॥**

**वृषपर्वा तमाज्ञाय प्रत्यनीकविवक्षितम्।**
**गुरुं प्रसादयन्मूर्ध्ना पादयोः पतितः पथि ॥२६॥**

**क्षणार्धमन्युर्भगवान् शिष्यं व्याचष्ट भार्गवः।**
**कामोऽस्याः क्रियतां राजन् नैनां [1] सन्त्यक्तुमुत्सहे ॥२७॥**

**तथेत्यवस्थिते प्राह देवयानी मनोगतम्।**
**पित्रा दत्ता यतो यास्ये सानुगा यातु मामनु ॥२८॥**

**स्वानां तत्सङ्कटं वीक्ष्य तदर्थस्य च गौरवम्।**
**देवयानीं पर्यचरत् [2-] दासीवत्स्त्रीगणैस्सह [-2] ॥२९॥**

**नाहुषाय सुतां दत्त्वा सह शर्मिष्ठयोशना।**
**तमाह राजच्छर्मिष्ठा[3]मधास्तल्पे [4] न कर्हिचित् ॥३०॥**

**विलोक्यौशनसीं [5] राज्ञीं शर्मिष्ठा [6] सुप्रजां क्वचित्।**
**तमेव वव्रे रहसि [7-] सख्या परिवृता [-7] सती ॥३१॥**

**राजपुत्र्याऽर्थितोऽपत्ये धर्मज्ञाऽऽवेक्ष्य धर्मवित्।**
**स्मरच्छुक्रवचः काले दिष्टमेवाभ्यपद्यत ॥३२॥**

**श्रीध० दुर्मना इति।** कापोतीं उञ्छवृत्तिम् ॥२५॥

**वृषपर्वेति।** प्रत्यनीका देवास्ते विवक्षिता जयं प्रापणीया इत्यभिप्रेता [8] यस्य तथाभूतं ज्ञात्वा। प्रत्यनीकानां विवक्षित मिति वा ॥२६,२७॥

1 ABBJMMa त्यक्तुमिहोत्सहे 2- -2 ABGJ स्त्रीसहस्रेण दासवत् , MMa स्त्रीसहस्रेण दासिवत् 3 ABGJ °ष्ठामाधा° , Mma °ष्ठा माधा° 4 MMa तु 5 ABGJ राजन् ! , MMa राज्ञी 6 AGJ सप्रजा , H V सुप्रजा 7 ABGJMMa सख्या पतिमृतौ 8 ABJ °त

**तथेति**। सानुगा सखीभिः[1] सहिता शर्मिष्ठा मामनुयात्विति ॥२८॥

**स्वानामिति**। तत्तस्मात् निर्गताच्छुक्रात्सङ्कटं वीक्ष्य। तत्तस्मात् अवस्थितार्थस्य प्रयोजनस्य गौरवञ्च वीक्ष्य ॥२९॥

**नाहुषाय** इति। तल्पे नाधा· नोपगच्छेः इत्यर्थः ॥३०,३१॥

**राजेति**। अपत्यार्थमृतुकाले प्रार्थनात्तस्याः कामपूरणं धर्ममवेक्ष्य शुक्रस्य वचश्च स्मरन् तिष्ठन् दैवप्रापितमेव तत्सङ्गमभ्यपद्यत न तु कामतः इत्यर्थः ॥३२॥

**वीर० दुर्मना** इति। तदाकर्ण्य स भगवा न्काव्यो दुर्मना विमनाः पौरोहित्यं विगर्हयन् कापोतीं वृत्तिं उञ्छवृत्तिं स्तुवंश्च दुहित्रा सह वृषपर्वण· पुरात् ययौ निश्चक्राम ॥२५॥

**वृषपर्वेति**। ततो वृषपर्वा प्रत्यनीका देवास्ते विवक्षिता· जयं प्रापणीया इत्यभिप्रेता यस्य तथाभूतं तं गुरुं, ज्ञात्वा पथि पादयोः पतितो गुरुं प्रसादयामास प्रार्थयाञ्चक्रे ॥२६॥

**क्षणार्धेति**। क्षणार्धमेव मन्युः क्रोधो यस्य स भगवान् भार्गवः काव्यः शिष्यं वृषपर्वाणमाचष्ट अब्रवीत्। हे राजन्! अस्या देवयान्याः काममिष्टं क्रियतां यदि यमिच्छति तत् क्रियताम्। एनां देवयानीं त्यक्तुमहं नोत्सहे न प्रभवामि, स्नेहादिति शेषः ॥२७॥

**तथैवेति**। तथैवास्त्वित्यङ्गीकृत्य वृषपर्वणि स्थिते सति देवयानी स्वमनोगतं प्राह - किमिति? पित्रा दत्ता सत्यहं यतो यास्ये गमिष्यामि तत्रेयं शर्मिष्ठा सानुगा ससखी मामनुयातु अनुगच्छतु, मद्दास्यं कर्तुमिति भाव इति ॥२८॥

**स्वानामिति**। ततश्शर्मिष्ठा तत् तस्मात् शुक्रात् स्वानां पित्रादीनां सङ्कटं निरीक्ष्य तत्तस्मादवस्थितादर्थस्य प्रयोजनस्य गौरवञ्च वीक्ष्य स्त्रीसहस्रेण सह दासीवद्देवयानीं पर्यचरत् ॥२९॥

**नाहुषेति**। ततः उशना काव्य· शर्मिष्ठया सह सुतां देवयानीं नाहुषाय ययातये दत्त्वा तं नाहुषमाह - किमिति ? हे राजन्! तल्पे शय्यायां शर्मिष्ठां कर्हिचिदपि नाऽधाः न विन्यस्येरिति ॥३०॥

**विलोक्येति**। तत· कदाचित् शर्मिष्ठा राज्ञो ययातेः स्त्रियमौशनसीं देवयानीं सुप्रजां शेभनापत्यवतीं विलोक्य स्वय मपि ऋतौ वर्तमाना सख्या देवयान्या· पतिं तमेव ययातिमेव वव्रे ॥३१॥

**राजपुत्र्येति**। तदा अपत्यार्थं राजपुत्र्या शर्मिष्ठया अर्थितः धर्मवित् ययातिः धर्ममवेक्ष्य अपत्यार्थमृतुकाले प्रार्थयमानायाः

---

1 A B J सखी स

कामपूरणं धर्म एवेति विचार्य शुक्रवचः[1] शर्मिष्ठा '[2]मधा स्तल्पे न कर्हिचित्' इति वचः स्मरन्नपि काले दिष्टं दैवप्रापितमेवाभ्यपद्यत। दैवप्रापितमेव तत्सङ्गमभ्यपद्यत, न तु कामत इत्यर्थः ॥३२॥

विज० कापोतीं कपोतसम्बन्धिनीं वृत्तिं स्तुवन्। ग्रन्थाधिकभयान्न कापोती वृत्ति र्विव्रियते। देवयान्या दुहित्रा सह ॥२५॥

प्रत्यनीकानां असुरद्वेषिणां देवानां वक्तुमिष्टं कार्यम् ॥२६॥

अस्या देवयान्याः कामोऽपेक्षाविशेष· स्वाभीष्टसाधनाय यात्वियं शर्मिष्ठा भवानस्मत्प्रियायास्तामिति तत्राऽऽह- नैनामिति ॥२७॥

यदभीष्टं तत्तथा करिष्ये इत्येवमुक्त्वा वृषपर्वण्यवस्थिते सति वृषपर्वणा तव किं कर्तव्यमिति पृष्टा देवयानी मनोगतं स्वमनसि स्थितं कार्यं प्राह - किं तदाह - पित्रेति। अहं पित्रा दत्ता यास्ये यतोऽतो मामियं शर्मिष्ठा सानुगा दासीसहस्रेण सहिता अनुयातु अन्वागच्छतु इति ॥२८॥

शर्मिष्ठा तत्सर्वं श्रुत्वा यद्यहं नाऽनुगमिष्यामि तदा गुरुद्रोहात् मत्कुलं सर्वं नष्टं भवतीति यत्स्वानां सङ्कटं तद्वीक्ष्य तदर्थस्य तदनुगमनलक्षणप्रयोजनस्य गौरवं गुरुप्रसादेन स्वकुलाभिवृद्धिलक्षणमस्तीति मनसा निश्चित्य स्त्रीसहस्रेण परिवृता तथा करिष्यामीति पितरमुक्त्वा देवयानीं दासीवत् पर्यचरत् ॥२९॥

उशना सुतां देवयानीं नाहुषाय नहुषपुत्राय ययातये शर्मिष्ठया सह दत्त्वा तं राजानमाह - किमाह? कचिदपि शर्मिष्ठां तल्पे शयनीयस्थाने माधाः धृतां मा कर्षीः मिथुनीभावं न कुरु इत्यर्थः ॥३०॥

औशनसीं देवयानीं कार्यमालेच्य रहस्येकान्ते सख्या· पतिं तमेव ययातिमेव ऋतुकाले वव्रे ॥३१॥

अपत्ये सन्तानर्थे राजपुत्र्या शर्मिष्ठया[1] प्रार्थितो धर्मवित् धर्मज्ञः "न काञ्चन परिहरेत् तद्व्रतम्" इति श्रुतेः। स्वयमागतां परिहर्तुमशक्यश्चेति धर्मश्चावेक्ष्य शुक्रवचः स्मरन्नपि काले दिष्टमेव दैवमेवाऽत्र कारणमिति निश्चित्याभ्यपद्यत तामिति शेषः ॥३२॥

यदुश्च तुर्वसुश्चैव देवयानी व्यजायत।
द्रुह्युं श्चाऽनुश्च पूरुश्च शर्मिष्ठा वार्षपर्वणी ॥३३॥
गर्भसम्भवमासुर्या भर्तुर्विज्ञाय मानिनी[3]।
देवयानी पितुर्गेहं ययौ क्रोधविमूर्छिता ॥३४॥

1 AB भृगु 2 AB मा 3 MMa भामिनी

**प्रियामनुगतः कामी वचोभि[1]रुपमन्त्रयन्।**
**न प्रसादयितुं शेके पाद[2]सम्मर्दनादिभिः ॥३५॥**

**शुक्रस्तमाह कुपितः स्त्रीकामाऽनृत[3]पूरुष।**
**त्वां जरा विश[4]तां मन्द विरूपकरणी नृणाम् ॥३६॥**

**ययातिरुवाच**

**अतृप्तोऽस्म्यद्य कामानां ब्रह्मन्। दुहितरि स्म ते।**
**व्यत्यस्य[5]तां यथाकामं वयसा योऽभिधास्यति ॥३७॥**

**इति लब्धव्यवस्थानः पुत्रं[6] ज्येष्ठमवोचत।**
**यदो तात। प्रतीच्छेमां जरां देहि निजं वयः ॥३८॥**

**मातामहकृतां वत्स[7] न तृप्तो विषयेष्वहम्।**
**वयसा भवदीयेन रंस्ये कतिपयास्समाः ॥३९॥**

**यदुरुवाच**

**नोत्सहे ज[8]रसा स्थातुमन्तरा प्राप्त[9]याऽनघ।**
**अविदित्वा सुखं ग्राम्यं[10] शान्तिं नोपैति पूरुषः ॥४०॥**

**श्रीध० गर्भेति।** आसुर्यां शर्मिष्ठायाः भर्तुस्सकाशात् ॥३३,३४॥

**प्रियामिति।** उपमन्त्रयन् प्रसादयन् ॥३५॥

**शुक्र इति।** विकृतं रूपं करोतीति तथा ॥३६॥

**अतृप्त इति।** ते दुहितरि कामैरद्याऽप्यतृप्तोऽस्मि, कामानां भोगैरिति वा। शुक्र आह - तर्हि योऽभिधास्यति अभितो धारयिष्यति तस्य वयसा यथाकामं व्यत्यस्यतां यथेच्छं जरा व्यत्ययं यातु। व्यत्ययं नीयतामिति वा। यद्वा व्यत्यस्येति छेदः। तां जरां[11] व्यत्यस्य व्यत्यासं गमयेत्यर्थ ॥३७॥

**इतीति।** इति लब्धं व्यवस्थानं जराया व्यवस्थितिर्येन सः ॥३८-४०॥

1 MMa °रभि° 2 ABGJMMa सवाहना° 3 HTVW पौ° 4 MMa °ते 5 MMa °स्यै° 6 H V °मया° 7 H V ग° 8 ABGJ"W °सा 9 ABGJMMa °या तव। 10 ABGJMMa वैतृष्ण्य नैति 11 H V omit व्यत्यस्य

**वीर० यदुमिति** । तत्र देवयानी यदुं तुर्वसुञ्च द्वौ पुत्रौ व्यजायत सुषुवे । वार्षपर्वणी वृषपर्वणो दुहिता शर्मिष्ठा तु द्रुह्युमनुं पूरुञ्चेति त्रीन् सुतान् व्यजायत ॥३३॥

**गर्भसम्भवमिति** । ततो मानिनी देवयानी भर्तुस्सकाशादेव आसुर्याः शर्मिष्ठायाः गर्भसम्भवं विज्ञाय क्रोधमूर्छिता पितुः काव्यस्य गेहं जगाम ॥३४॥

**प्रियामिति** । प्रियां देवयानीमनुगतः कामी ययातिः तां पादसंवाहनादिभिः पादग्रहणादिभिः सान्त्ववचनैः[1] - श्चोपमन्त्रयन्प्रार्थयमानोऽपि तां प्रसादयितुं न शेके न प्रबभूव ॥३५॥

**शुक्र** इति । तदा तं ययातिं कुपितः शुक्र आह - किमिति हे स्त्रीकाम हे अनृतपूरुष! पुरुषाकृत्यापन्नानृतरूप! हे मन्द! दुर्बुद्धे! नृणां विरूपं विकृतरूपं करोतीति तथा । सा जार त्वां विशताम् आविशतु इति ॥३६॥

**अतृप्त** इति । एवं शप्तो ययातिराह -अतृप्तोऽ स्मीति । हे ब्रह्मन्, ते तव दुहितरि कामानां कामैर ... ऽप्यतृप्तोऽस्मि । कामानां भोगैरिति शेषो वा । ततः शुक्र आह - व्यत्यस्यतामिति योऽभिधास्यति जरामहं ग्रहिष्यामीत्य... ...स्मिन् वयसा तस्य वयसा यथाकामं यावत्कामं व्यत्यस्यतां, जरेति शेषः । जरां तस्मै दत्त्वा तद्वयो गृहाणेत्यर्थः ॥३७॥

इतीत्थं लब्धं व्यवस्थानं जराव्यवस्थितिर्येन स ययातिः ज्येष्ठं पुत्रं यदुमवोचत । किमिति? हे यदो! हे तात! इमां तव मातामहेन कृतां प्रहितां जरां प्रतीच्छ प्रतिगृहाण, निजं त्वदीयं वयो देहि । विषयेष्वहं न तृप्तोऽस्मि । अतो भवदीयेन त्वद्दत्तेन वय साऽहं कतिचिद्वर्षाणि रंस्ये इति ॥३८,३९॥

यदु राह - **नोत्सहे** इति । तव अन्तरा वयो मध्ये प्राप्तया जरसा जरया स्थातुमहं नोत्सहे । अनुत्स... हे हेतुमाह - ग्राम्यं सुखमविदित्वा अननुभूय पुमान् शान्तिं वैराग्यं नोपैति । अनुभूतग्राम्यसुखः त्वमेव शान्तिं नोपैषि । अहन्तु अनासादितग्राम्य सुखः कथं शान्तिमुपेयाम् इत्यर्थः ॥४०॥

**विज०** आसुर्याः शर्मिष्ठायाः ॥३४-३५॥

हे स्त्रीकाम! अनृतपूरुष! असत्यवादिपुरुषज्ञानी पुरुषो नेति वा, त्वां जरा विशते इति लट् लोडर्थे, जरा त्वामाविशत। मिति शापमदादित्यर्थः ॥३६॥

ते तव दुहितरि कामानां शब्दादिविषयाणां स्मरणेनातृप्तोऽस्मि अलम्बुद्धिं न प्राप्तोऽस्मि । "स्मृतौ वृत्ते निषेधे स्म स्वः स्वर्गपरलोकयोः" (वैजः कोः 8-7-7) इति । अत एवमनुग्रहः कर्तव्य इत्याह व्यत्यस्येति । यो मह्यं वयोऽभिदास्यते तस्मिन्न

---

1 AB सान्त्वन

जरां व्यत्यस्य सङ्क्रमय्य तद्वयसा यथाकामं भुञ्ज इति ॥३७॥

तर्हि तथाऽस्त्विति लब्धव्यवस्थानो ययातिर्ज्येष्ठं पुत्रमुवाच - प्रतीच्छ गृहाण ॥३८॥

मातामहेन शुक्रेण कृतां रंस्ये सुरतमनुभवामि ॥३९॥

कुतो नोत्सहे इति तत्राऽऽह- अविदित्वेति। अविदित्वा अननुभूय, वैतृष्ण्यं वैराग्यम् ॥४०॥

तुर्वसुश्चोदितः पित्रा द्रुह्युश्चाऽनुश्च भारत।
प्रत्याचख्युरधर्मज्ञा[1] अनित्ये नित्यबुद्धयः ॥४१॥

अपृच्छत्तनयं पूरुं वयसोनं गुणाधिकम्।
न त्वमग्रजवद्वत्स। मां प्रत्याख्यातुमर्हसि ॥४२॥

पूरुरुवाच -

को नु लोके मनुष्येन्द्र पितुरात्मकृतः पुमान्।
प्रतिकर्तुं[2] क्षमो यस्य प्रसादाद्विन्दते परम् ॥४३॥

उत्तमश्चन्तितं कुर्यात् प्रोक्तकारी तु मध्यमः।
अधमोऽश्रद्धया कुर्यादकर्तोच्चरितं पितुः ॥४४॥

इति [3]प्रत्युदितः पूरुः प्रत्यगृह्णाज्जरां पितुः।
सोऽपि तद्वयसा कामान् यथावज्जुजुषे नृप। ॥४५॥

सप्तद्वीपपतिः सम्यक् पितृवत्पालयन् प्रजाः।
यथोपजोषं[4] विषयान् जुजुषेऽव्याहतेन्द्रियः ॥४६॥

देवयान्यप्यनुदिनं मनोवाग्देहवृत्तिभिः[5]।
प्रेयसः परमां प्रीतिमुवाह प्रेयसी रहः ॥ ४७॥

अयजद्यज्ञपुरुषं क्रतुभिर्भूरिदक्षिणैः।
सर्वदेवमयं देवं सर्वयज्ञमयं[6] हरिम् ॥४८॥

---

1 A B G J ह्यु॰ 2 M,Ma °ह॰ 3 A B G J M Ma प्रमु॰ 4 M Ma जुजोषाऽ॰ 5 A B G J M Ma वस्तुभि 6 A B G J M Ma वेद

**श्रीध० तुर्वसुरिति।** यतो न धर्मज्ञाः अनित्ये च यौवने नित्यबुद्धयः ॥४१॥

**अपृच्छदिति।** त्वं जरां किं ग्रहीष्यसीत्यपृच्छत्। प्रत्याख्यानं मा कृथा इत्याह - न त्वमिति ॥४२॥

**क** इति। आत्मकृतः स्वदेहकर्तुः प्रत्युपकारं कर्तुं को नु क्षमः ॥४३॥

**उत्तम** इति। तथाऽपि पितु र्यश्चिन्तितं कुर्यात् स उत्तमः। यस्तु प्रोक्तकारी स मध्यमः। यस्तु अश्रद्धया कुर्यात् - स अधमः। अकर्ता पितुरुच्चरितं पुरीषप्रायः ॥४४॥

**इतीति।** जुजुषे सेवितवान् ॥४५॥

**सप्तेति।** यथोपजोषं यथाप्रीति जुजुषे ॥४६-४८॥

**वीर०** तत इत्थमेव पित्रा ययातिना चोदितः तुर्वसुरनुश्च हे भारत। यदुवदूचतुरिति शेष । एवं त्रयः पुत्रा· अनित्ये देहे नित्युबुद्धिर्येषां, तथाभूता, अत एवाऽधर्मज्ञाः प्रत्याचख्युः ॥४१॥

**अपृच्छदिति।** ततो ययाति पुत्रत्रयादपि वयसा ऊनं गुणैरधिकं तनयं पूरुमपृच्छत्। किमिति ? हे वत्स! त्वमग्रजवत् ज्येष्ठवत् मां प्रत्याख्यातुं नार्हसीति ॥४२॥

एवमुक्त· पूरुराह - **को न्विति** द्वाभ्याम् । हे मनुष्येन्द्र! आत्मकृत· पितृदेहेनोत्पादितः को नु पुमान् लोके पितु· प्रतिकर्तुं प्रत्युपकर्तुं क्षमः प्रभु । असामर्थ्ये हेतुं वदन् पितरं विशिनष्टि - यो[1], यस्य पितुरनुग्रहात् परमधिकमैहिकमामुष्मिकञ्च श्रेयो विन्दते लभते ॥४३॥

यद्यपि कोऽप्यक्षमः तथा पितुश्चिन्तितमभिप्रेतं य· कुर्यात् स उत्तम यथोक्तकरी तु मध्यमः, अश्रद्धया यः कुर्यात् सोऽधमः, अश्रद्धयाऽप्यकर्ता तु पितुरुच्चरितं पुरीषप्रायः ॥ ४४॥

इतीत्थं भाषमाणः पूरु· प्रीत पितुर्जरां प्रत्यगृह्णात् स्वीयं वयो दत्त्वेति शेष । तत सोऽपि ययातिरपि नृप· तद्वयसा पुत्रदत्तेन वयसा कामान् यथावत् जुजुषे सेवितवान् ॥४५॥

तदेव प्रपञ्चयति - **सप्तद्वीपेति।** सप्तद्वीपाधिपतिस्सान् प्रजाः पितृवत्पालयन् यथोपजोषं यथाप्रीति विषयान् जुजुषे। कथम्भूतः? अव्याहतानि दृढानीन्द्रियाणि यस्य तथाभूत·॥४६॥

**देवयानीति।** प्रेयसी देवयानी प्रेयसो भर्तु· रहः एकान्ते परमां प्रीतिमुवाह, नितरां प्रीतिविषया बभूवेत्यर्थः ॥४७॥

---

1 TW omit य

**अयजदिति**। तथा ययातिः भूरि दक्षिणा येषु तैः क्रतुभिः सर्वदेवताशरीरकमाराधकार्तिहरं सर्वयज्ञाराध्यं तत्फलदं तत्प्रोक्तारं भगवन्तमयजत् आराधितवान् ॥४८॥

**विज०** प्रत्याचख्युः निराकृतवन्तः। अनित्ये क्षणभङ्गुरे ॥४१॥

वयःरोनं कनिष्ठं ममाऽऽज्ञाम् ॥४२॥

अकृतः शरीरोत्पादनकर्तुः, परं लोकम् ॥४३॥

उच्चारितं गुदनिर्गतं मलम् ॥४४॥

जुजुषे बुभुजे ॥४५॥

यथोपजोषं यथा सुखम् ॥४६॥

प्रेयसः भर्तुः ॥ ४७,४८॥

**यस्मिन्निदं विरचितं[1] व्योम्नीव जलदावलिः।**
**नानेव भाति नाभाति स्वप्नमायामनोरथः ॥४९॥**

**तमेव हृदि विन्यस्य वासुदेवं गुहाशयम्।**
**नारायणमणीयांसं निराशीरयजत् प्रभुः[2] ॥५०॥**

**एवं वर्षसहस्राणि मनष्षष्ठैर्मनस्सुखम्।**
**विदधानोऽपि नाऽतृप्यत् सार्वभौमः कदिन्द्रियैः ॥५१॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
नवमस्कन्धे अष्टादशोऽध्यायः ॥१८॥

**श्रीध०** यस्मिन्निति। नानेव भाति यावदिन्द्रियवृत्तिः[3]। तदुपरमेनाऽऽभाति च। स्वप्नमायाभ्यां सहितो मनोरथ इवेत्यर्थः ॥४९,५०॥

**एवमिति**। मनस्सुखं कामभोगम्। कदिन्द्रियैः कुत्सितैः पराङ्मुखैरिन्द्रियैः ॥५१॥

1 M Ma चरितं 2. A B G J प्रभुम् 3 ABJ प्रवृत्ति

इति श्रीमद्भागवते महापुराणे
श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्यख्यायां नवमस्कन्धे अष्टादशोऽध्याय.॥१८॥

**वीर०** यजनप्रकारमेवाऽऽह - **यस्मिन्निति** द्वाभ्याम्। **यस्मिन्नित्यस्य तमित्यु**त्तरेणान्वयः। यस्मिन्वासुदेवे इदं कृत्स्नं चिदचिदात्मकं जगत् विरचितं सत् व्योम्नि जलदपङ्क्तिरिव **नानेव** भाति नाभाति **च**; पाल्यते संह्रियते चेत्यर्थः। यस्मिन्निति धारकत्वदोषास्पर्शित्वे विवक्षिते विरचितमित्यस्य येनेति शेषः। **अनेन स्रष्टृत्वमुक्तं**, नाना भाति इत्यनेन पालनदशायां देवमानुष्यादिनामरूपभेदेन बहुधा प्रतीतिरुक्ता। इवशब्देन वस्तुत **स्थूलचिदचिच्छरीरकं** ब्रह्मैकमेव विश्वरूपेणावस्थितमिति सूच्यते। अनेनैव सूक्ष्मचिदचिच्छरीरकस्य ब्रह्मणो जगदुपादानत्वमपि लब्धं, **कारणस्यैव** वस्तुन कार्यात्मनाऽवभासमानत्वात्। यस्मिन् नाना नाभातीत्यनेन लयाधिकरणत्वोक्त्या च तल्लभ्यते लयाधिकरणस्यैव लीयमानोपादानत्वदर्शनात् यस्मिन् धारके नाना भातीत्यनेन अन्तःप्रविश्य धारकत्वेन प्रशासनमेव पालनमिति सूचितम्। प्रपञ्चं विशिनष्टि - स्वप्नमायामनोरथ इति। स्वप्नमायामनोरथतुल्य इत्यर्थः। अत्र स्वप्नदृष्टान्तत्वेन आश्चर्यत्वं, मनोरथदृष्टान्तेन मनोनुकूलत्वञ्च दार्ष्टान्तिकेऽभिप्रेतम्। अत एव दृष्टान्तत्रयमन्यथा वैयर्थ्यप्रसङ्गात्, एकेनैव विवक्षितसाधर्म्यलाभात् ॥४९॥

**तमिति**। तमेवम्भूतं वासुदेवशब्दप्रवृत्तिनिमित्तपौष्कल्याश्रयं गुहाशयं हृदयकुहरे वसन्तम् अणीयांसमणोर्जीवादप्यणु, तदन्तः प्रवेशयोग्यतया ततोऽपि सूक्ष्ममिति भावः। नारायणं जीवसमूहानां प्राप्यं प्रापकमाधारञ्च हृदि विन्यस्य ध्यानेन सन्निहितं कृत्वा इत्यर्थः। निराशीः फलाभिसन्धिरहितः प्रभुर्ययातिरयजत् ॥५०॥

एवमित्थं मनःषष्ठं येषां तैः कुत्सितैरिन्द्रियैर्वर्षसहस्राणि मनस्सुखं कामभोगं विदधान कुर्वन्नपि सार्वभौमो ययाति नातृप्यत् ॥५१॥

इति श्रीमद्भागवते नवमस्कन्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां अष्टादशोऽध्याय ॥१८॥

**विज०** स्वप्नमाया मनोरथवदनित्यफलमस्वतन्त्रञ्च ॥४९॥

निराशीः कृच्छ्रचान्द्रायणादितपोऽभिलाषरहित· ॥५०॥

कदिन्द्रियैः दुष्टेन्द्रियैः ॥५१॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहिताया
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकाया
नवमस्कन्धे अष्टादशोऽध्यायः ॥१८॥

# एकोनविंशोऽध्यायः

## (विजयध्वजरीत्या षोडशोऽध्यायः)

### श्रीशुक उवाच

स इत्थमाचरन् कामान् स्त्रैणोऽपह्नवमात्मनः ।
बुद्ध्वा प्रियायै निर्विण्णो गाथा मेतामागायत ॥१॥

शृणु भार्गव्यमूं गाथां मद्विधाचरितां भुवि ।
धीरा यस्यानुशोचन्ति वने ग्रामनिवासिनः ॥२॥

बस्त एको वने कश्चित् विचिन्वन् प्रियमात्मनः ।
ददर्श कूपे पतितां स्वकर्मवशगामजाम् ॥३॥

तस्या उद्धरणोपायं बस्तः कामी विचिन्तयन् ।
[1-]व्यधत्त तीर्थ[1]मुद्धृत्य विषाणाग्रेण रोध[2]सि ॥४॥

सोत्तीर्य कूपात् सुश्रोणी तमेव चकमे किल ।
तया [3]वृतं समुद्वीक्ष्य बह्व्योऽजाः कान्तकामिनीः ॥५॥

पीवानं श्मश्रुलं [4]भेजुः मीढ्वांसं [5]याभकोविदम् ।
स एको[6]ऽजवृषस्तासां बह्वीनां रतिवर्धनः ।
रेमे कामग्रहग्रस्त आत्मानं नावबुध्यत ॥६॥

[7]तमेवं [8]प्रेष्ठतमया रममाणमजान्यया ।
विलोक्य [9]कूपसं[10]विग्ना नामृष्यद्बस्तकर्म तत् ॥७॥

तं दुर्हृदं सुहृद्रूपं कामिनं क्षणसौहृदम् ।
इन्द्रियाराममुत्सृज्य स्वामिनं दुःखिता ययौ ॥८॥

### श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

ऊनविंशे ययातिः स्वं चेष्टितं नन्वजोपमम् । देवयानीं समाश्राव्य विरक्तो मुक्तिमाप्तवान् ॥

---

1--1 MMa निर्वर्त्य तीर्थ उ° 2 AGJ °सी 3 HV युत , MMa वृत्तं 4 ABGJMMa प्रेष्ठ 5 HV यभ° , M Ma याव° 6 TW °ऽथ° 7 ABGJMMa तमैव 8. MMa ग्रन्य° 9 TW रूप 10 HV °ल°

भुक्तभोगामजां[1] हास्यन्नजवद्वृत्तिमात्मनः। विडम्बयन्प्रियामाह निर्वेदयितुमात्मवान् ॥

**स** इति। कामानाचरन्नुपभुञ्जानः। गाथामितिहासम् ॥१॥

**शृण्विति।** मद्विधेन मत्सदृशेनाचरितामनुष्ठिताम्। मद्विधस्याचरितं यस्यामिति वा। यस्य ग्रामनिवासिनः कामिनो, मद्विधस्याचरितं वने स्थिता धीराः शोचन्ति तस्य गाथां शृणु ॥२॥

आत्मानमनुलक्ष्याऽऽह - **बस्त** इति। प्रियामनुवीक्ष्याऽऽह[2] - अजामिति। वने संसारे, प्रियं विषयम् ॥३॥

**तस्या** इति। रोधसि तटे विषाणाग्रेण मृदादिकमुद्धृत्य तीर्थं[3] निर्गममार्गं व्यधत्त ॥४॥

**स** इति । बह्व्य इति शर्मिष्ठा प्रमुरवाः [-4]कामयामासुः[-4] कान्तं प्रति कामिनीः कामवत्यः[5] [6-]प्रथमार्थे द्वितीया[-6] ॥५॥

**पीवानमिति।** पीवानं पुष्टं श्मश्रुलं श्मश्रुबहलम्। रतिसमर्थमित्यर्थः। मीढ्वांसं रेतस्सेक्तारं, [7-]यभकोविदं मैथुनाभिज्ञम्[-7] [8]भेजुः नाऽवबुध्यत नाऽन्वबुध्यत ॥६,७॥

**तमिति।** स्वामिनमिति शुक्राभिप्रायेणाह ॥८॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

**स** इति। स ययातिरित्थं स्त्रैणः स्त्रीवश्यः कामान् चरन् भक्षयन् अनुभवन्निति भाव[9]। कदाचिदात्मनोऽपह्नवमपहारं बुद्ध्वा "योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते" (भारते 1-68-26) इत्युक्तविधमपह्नवं ज्ञात्वा निर्विण्णः निर्वेदं प्राप्तः, प्रियायै देवयान्यै इमां वक्ष्यमाणां गाथामात्मवृत्तिप्रख्यापिकां [10]कथामगायत कथयामास ॥१॥

तामेवाऽऽह - **शृण्विति।** हे भार्गवि! भुवि मद्विधेन माहृशेनाऽऽचरितां, मद्विधस्याऽऽचरितं यस्यामिति वा। ताममूं मया वक्ष्यमाणां गाथामितिहासं शृणु। यस्य मद्विधस्य ग्रामवासिनो गृहस्थस्याऽऽ चरितं वने स्थिता धीराः जितेन्द्रियाः कृपया शोचन्ति ॥२॥

**बस्त** इति। अन्यापदेशेनाऽऽत्मवृत्तिप्रतिपादनार्थं प्रवृत्तोऽयमितिहासः। एकोऽसहायः कश्चिद्बस्तो मेषो वने आत्मनः स्वस्य प्रियं विचिन्वन् कूपपतितां कर्मवशगां कश्चिदजां ददर्श। बस्त इत्यनेनाऽऽत्मा विवक्षितः, वन इत्यनेन संसारः; प्रिय

---

1 ABJ 'त' 2 ABJ 'ल' 3 ABJ तीर्थं निर्गमाय मा' 4--4 HV omit 5 HV कामयन्त्य 6--6 ABJ omit 7--7 ABJ याभे कोविद मभिज्ञम् 8.ABJ अत एव प्रेष्ठम् 9 TW वावत् 10 TW omit कथाम्

मित्यनेन शब्दादिविषयः; अजामित्यनेन देवयानी - एवं यथासम्भवमुत्तरत्राप्यूह्यम् ॥३॥

तस्या अजायाः स बस्त. उद्धरणोपायं व्यचिन्तयत् स्वोत्तरीयादिप्रदानेनोद्धरणोपायं चिन्तितवानिति भावः। उपाय मेव दर्शयन्नाऽऽह - रोधसि तटे विषाणाग्रेण मृदादिक मृद्धृत्य तीर्थं निर्गममार्गमुत्तारणमार्गमिति यावत्। व्यधत्त कृतवान्। विषाणाग्रेणेत्यनेन खनित्रादिकं विवक्षितम् ॥४॥

तत· सा सुश्रोणी अजा कूपादुत्तीर्य तमेव बस्तं पतिं चकमे। विक्लेत्यात्मवृत्तान्तप्रत्यभिज्ञापकः। ततस्तया अजया वृतं बस्तं समुद्वीक्ष्य बह्व्योऽन्या अजा· कान्तं प्रति कामिनीः कामवत्यो बभूवुः। बह्व्योऽजा इति शर्मिष्ठाप्रमुखा विवक्षिताः। कथम्भूतम् ? पीवानं परिपुष्टसर्वावयवं, श्मश्रुलं रतिसमर्थमित्यर्थः। मीढ्वांसं रेतस्सेक्तारं याभे मैथुने कोविदमभिज्ञम्। अजाभिर्वृत स्स एक एव बस्तस्तासां बह्वीनामजानां रतिवर्धनः, काम एव ग्रहः पिशाचस्तेन ग्रस्त· केवलं रेमे नत्वात्मानमबुध्यत देहविलक्षणमात्मस्वरूपं नाऽनुसंहितवान् इति भाव.। मेषपक्षे आगाम्यनर्थाश्रयं नाऽवबुध्यतेत्यर्थ· ॥५,६॥

**तमिति**। एवमन्यया प्रेष्ठतमया अन्यया अजया सह रममाणं तं बस्तं विलोक्य तेन पूर्वं कूपादुद्धृता अजा रूपसंविग्ना मत्तो रूपवतीमन्यामजां परिगृह्य मां त्यजत्ययमिति भीता सती बस्तस्य तत्कर्म अजान्तरपरिग्रहरूपं नाऽमृष्यत् नाऽसहत ॥७॥

तं बस्तं दुर्हृदं, वस्तुत इति शेष , सुहृद्रूपं सुहृदाभासम् अत एव क्षणं सौहृदं यस्य कामिनम्, अत एव इन्द्रियारामं, न तु धर्मज्ञं, ज्ञात्वेति शेष·। स्वामिनं पतिं त्यक्त्वा दुःखिता ययौ ॥८॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

अन्यापदेशेन स्ववृत्तान्तं शिक्षाकरणत्वेन स्वभार्यायै कथयति **स इत्थमिति**। स्त्रैणः स्त्रीजितः स ययाति रित्थ मात्मज्ञाननाशहेतून् कामान् विषयान् आचरन् भुञ्जान·, आत्मनोऽपह्नवं नित्यसुखहानिलक्षणनाशं विज्ञाय निर्विण्णो विरक्तः, एतां वक्ष्यमाणत्वेन बुद्धिसन्निहितां गाथां स्वकीयवृत्तान्तरूपामागायतेत्यन्वयः ॥१॥

भार्गवि ! भृगुकुलजाते ! मद्विधै· मादृशैः स्त्रीजितै· पुरुषै· आचरितां वने धीराः निवृत्तिमार्गलक्षणे स्थिराः मुक्तसङ्गा ज्ञानीनो यस्य ग्रामवासिनो गृहस्थस्याऽऽचरणमनुशोचन्ति। अहो लोकस्य मौढ्यमिति परिखिन्ना भवन्तीत्यर्थः तस्य मम सदृशै राचरितामित्यर्थ. ॥२॥

बस्तोऽज· प्रियं स्त्रीजनं कूपे संसारलक्षणे । अत्राऽजशब्देन प्रकृतिपुरुषावुपलक्ष्येते ॥३॥

तीर्थे कूपजले अवतारस्थले वा, निर्वर्त्य किञ्चिदवतीर्य विषाणाग्रेणोद्धृत्य रोधसी कूपतीरे न्यधत्त, तामिति शेषः।

"तीर्थं मन्त्राद्युपाध्याये शास्त्रेष्वम्भसि पावने। पात्रोपायावतारेषु स्त्रीपुष्पे योनियज्ञयोः" (वैज. को. 6-3-13,14 )इति यादवः। उपायं वा निर्वर्त्य उद्धरणोपायं दृष्ट्वेत्यर्थः ॥४॥

कान्तविषयः कामो यासामस्तीति कान्तकामिन्यः ॥५॥

श्मश्रुलं बहुलश्मश्रुयुक्तं, मीढ्वांसं रेतस्सेकसमर्थं यावकोविदं यावान्नभक्षणपाटवोपेतम्। यावो यवकः कुल्माष तद्भक्षणे शक्त इति वा। "यावःकेवल कुल्माषे यव केतोयवर्णिके " (वैज को. 3-8-53) इति याभकोविदमिति पठित्वा मैथुनकुशलमिति व्याख्यानं मीढ्वांसमित्यनेन गतार्थत्वात्पुनरुक्तता, असम्प्रदायज्ञता चाऽत्र प्रसज्येत। भेजं मेषमित्यपि तद्वत् भेजशब्दस्य मेषवाचित्वाश्रवणात् । मीढ्वांसमिति पदं विवृण्वन्नाऽऽह - स एक इति ॥६॥

रूपसंलग्ना रूपगुणसम्पन्ना, कुचसंलग्नेतिपाठे कुचभरसन्नतमध्या व्रज्यतमया प्राप्तुं योग्यतमया अन्ययाऽजया एवं रममाणं तं विलोख्य बस्तस्य मम तत्कर्म अन्यासक्तिलक्षणं नाऽमृष्यदित्यन्वय· ॥७॥

अनेनात्मकटाक्षीकारेण स्वामिनं शुक्रमित्येकोऽर्थ· सूच्यते, अन्यत्राजम् ॥८॥

[1-] स चैवानुगतः [-1] स्त्रैणःकृपणस्तां प्रसादितुम् ।
[2] कुर्वन्निडबिडाकारं [-2] नाऽशक्नोत् पथि सन्धितुम् ॥९॥

तस्य तत्र द्विजः कश्चित् अजास्वाम्यच्छिनद्रुषा ।
लम्बन्तं वृषणं भूयः सन्दधेऽर्थाय योगवित् ॥१०॥

[3-] स लब्धवृषणस्तत्र [-3] ह्यजया कूपलब्धया ।
[4-] क्रीडन् कालं बहुविधं [-4] कामैर्नाद्यापि तुष्यति ॥११॥

तथाऽहं [5-] कृपणः सुभ्रु [-5] भवत्याः प्रेमयन्त्रितः।
आत्मानं नाऽभिजानामि मोहितस्तव मायया ॥१२॥

यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ।
न [6] दुहन्ति मनःप्रीतिं पुंसः [7] कामहतस्य ते ॥१३॥

1--1.ABGJ MMa सोऽपिचानु॰ 2--2 HV कुर्वन्निलिबिलाशब्द , MMa कुर्वन्विलि बिलाकार , TW कुर्वन्बिडी बिडाकार 3--3 ABGJ सम्बद्ध वृषण सोऽपि , MMa संवृद्ध वृषणस्सोपि 4--4 ABGJMMa काल बहुतिथ भद्रे 5--5 HV कूपलब्धाया 6 ABGJMMa दुह्य॰ 7 MMa मे

न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाऽभिवर्धते ॥१४॥

यदा न कुरुते भावं सर्वभूतेष्वमङ्गलम् ।
समदृष्टेस्तदा पुंसः सर्वास्सुखमया दिशः ॥१५॥

या दुस्त्यजा दुर्मतिभिर्जीर्यतो या न जीर्यते ।
तां तृष्णां दुःखनिवहां शर्मकामो द्रुतं[1] त्यजेत् ॥१६॥

**श्रीध० स** इति [2]इलिबिला[-2]कारं बस्तजातिशब्दम्। सन्धितुं प्रसादयितुम् ॥९॥

**तस्येति**। वृषणमच्छिनत् जरया सम्भोगाऽसमर्थमकरोत्। अर्थाय स्वपुत्र्याः का[3]मोपभोगाय। योगवित् उपायज्ञः। जराव्यत्ययेन रतिशक्तिं ददावित्यर्थः ॥१०॥

**स** इति। कूपलब्धया सह कामैस्सेव्यमानैः न तुष्यति ॥११,१२॥

ननु तर्हि पुनरपि बहवो विषयास्सेव्यन्ताम्, ततो मनसि प्रीते सति कामोपशान्त्या मोहो निवर्तेतेति चेत् तत्राऽऽह **यदिति** द्वा[4]भ्याम्। न दुहन्ति न पूरयन्ति ॥१३॥

**नेति**। हविषा घृतेन कृष्णवर्त्मा अग्निरिव ॥१४॥

तर्हि कदा केनोपायेन वा मनसः सम्पूर्णा प्रीतिः स्यात्, यया कामोपशमः स्यादित्यत आह - **यदेति षड्भिः**। अमङ्गलं भावं रागद्वेषादिवैषम्यम् ॥१५॥

**येति**। दुःखानि नितरां वहतीति तथा, ताम् ॥१६॥

**वीर०** ततस्सोऽपि बस्तोऽपि, स्त्रैणः - हेतुगर्भमिदम्। स्त्रैणत्वात्तां यान्तीमजां प्रसादयितुं कृपणस्सन्ननुगतः बिडीबिडाकारं बिडीं मार्जालीमनुगतस्य बिडस्य य आकारः सान्त्वशब्दमुखरमुखत्वरूपः तङ्कुर्वन् पथि मार्गे सन्धितुं प्रसादयितुं नाशक्नोत् ॥९॥

तत्र तस्य बस्तस्य लम्बन्तं वृषणं कश्चिद्द्विजो रुषा अच्छिनत्। कश्चिद्द्विजोऽज इति शुक्रो विवक्षितः। अण्डशब्देन वयो विवक्षितम्। जरापादनेन वयोपहारेण च सम्भोगासमर्थमकरोदिति भावः ततो भूयःपुनः अर्थाय प्रयोजनाय स्वपुत्र्याः काम भोगायेति भावः। योगविदुपायज्ञः लम्बन्तं वृषणं सन्दधे।जराव्यत्यासेन रतिसमर्थमकरोदिति भावः ॥१०॥

1 TW ध्रुव 2--2 ABJ इडबिडा' 3 HV 'मभो' 4 ABJ 'ह्या'

ततस्स लब्धवृषणः, उपात्तपुत्रवया इति भावः। स बस्तोऽपि कूपलब्धया अजया सह बहुविधं काममनुभवन्नपीति शेषः। बहुतिथमिति पाठे बहुकालमित्यर्थः। हे भद्रे! अधुनाऽपि[1] न परितुष्यति ॥११॥

एवमन्यापदेशेनोपवर्णितमितिहासमात्मनि सङ्क्रमयति **तथेति**। हे सुभ्रु! तथा बस्तवदहमपि भवत्यास्तव प्रेम्णा यन्त्रितः वशीकृतः तव मायया विभ्रमादिरूपया मोहितोऽधुनापि आत्मानं नाभिजानामि ॥१२॥

ननु तर्हि पुनरपि बहवो विषयास्सेव्यन्तां, ततो मनसि प्रीते सति कामोपशान्त्या मोहो निवर्तेतेत्यत्राऽऽह - **यदिति** द्वाभ्याम्। यत् ये पृथिव्यां व्रीह्यादयस्ते सर्वे कामहतस्य कामासक्तस्य पुंसो मनः प्रीतिं न दुहन्ति न पूरयन्ति ॥१३॥

जातु कदाचिदपि कामानामुपभोगेन कामो विषयतृष्णा न शाम्यति। किन्तु हविषा घृतेन कृष्णवर्त्मेवाऽग्निरिव भूयोऽभिवर्धत एव ॥१४॥

तर्हि कथं केनोपायेन मनसः पूर्णप्रीतिः स्यात्, यया कामोपशमः स्यादित्यत आह - **यदेति** षड्भिः। यदा भूतेष्वमङ्गलं भावं रागद्वेषादिवैषम्यरूपं भावं न कुरुते तदा समदृष्टेः स्वात्मसमदृष्टेः पुंसः सर्वा दिशः सुखमयाः क्वापि गतस्याऽप्यस्य सुखमेवेत्यर्थः ॥१५॥

अतो दुर्मतिभिः दुस्त्यजा विषयतृष्णा कथम्भूताः या जीर्यतस्सतोऽपि पुंसो न जीर्यते न जीर्णतां प्राप्नोति, तां दुःखनिवहां दुःखानि नितरां वहत्यावहति प्रापयतीति तथा तां तृष्णां शर्मकामः दुःखासम्भिन्नं सुखं कामयमानः ध्रुवं नूनं त्यजेत् ॥१६॥

**विज०** सोऽपि बस्तोऽपि ययातिशब्दवाच्योऽपि बिलिबिलाकारं मैथुनानुकरणलक्षणं तिर्यक्कण्ठोत्थितशब्दविशेषं, अन्यत्तत्सीत्कारादिशब्दश्च कुर्वन् सन्धितुं सन्धानं कर्तुं "तिर्यक् बिलिबिलाकारो मैथुनानुकृतो रसः" इत्यभिधानम् ॥९॥

अजस्वामी शुक्रः अन्यत्र प्रसिद्धः लम्बन्तं वृषणं उपभोगसमर्थं अच्छिनत्, शस्त्रेणेति शेषः। अन्यत्र जराकरणेन पुत्रेषु जरावत्स्वाक्षेनोपायेन सन्दधे भोगसामर्थ्यमापादितवान्। योगवित्सन्धानोपायज्ञः, अन्यत्र जराव्यत्यसनोपायकरणेन अर्थाय मैथुनलक्षणप्रयोजनाय ॥१०॥

अजया, रममाण इति शेषः ।११।

आत्मानं परमात्मानं स्वस्वरूपं मायया विभ्रमलक्षणया सुरतवैयात्यलक्षणया वा ॥१२॥

काममोहनास्त्रविद्धस्य पुंसः नैतच्चित्रमित्याह - **यत्पृथिव्यामिति**। व्रीहियवमित्येकवद्भावः। व्रीह्यदयः मनःप्रीतिं न पूरयन्ति न दुह्यन्ति। 'दुह प्रपूरणे' इति। प्रपूरणं नाम ऊधसो रिक्तीकरणं, भाण्डलक्षणपात्रस्य पूर्णीकरणमिति। अतः स्त्रीपुंसयोरपि कामभोगादिना अलम्बुद्धिर्नास्तीति भावः ॥१३॥

---

1 TW अद्याऽपि

ननु प्रावृडुपरमे नदीजलह्रासवत् कामानामुपभोगेन शान्तिः स्यादिति, तत्राऽऽह - **नेति**। कामः तृष्णा कामानां विषयाणां हविषाऽऽज्येन "हविर्हव्ये घृते तोये हेम्नि काञ्चनचेतने" (वैजः को 6-3-37) इति। कृष्णवर्त्माऽग्निः ॥१४॥

न त्वेवश्चेत्साधनाभावेन कदाऽपि मुक्तिर्न स्यादिति तत्राऽऽह - **यदेति**। यदा सर्वभूतेषु अमङ्गलं पापसन्धानं हिंसालक्षणं भावं स्वभावं न कुरुते यः तदा तस्य समदृष्टेः, सर्वस्य ब्रह्माधीनत्वेन तत्तद्योग्यताविशिष्टवस्तुदर्शिनः पुंसः सर्वा दिशः सुखमयन्ते प्रापयन्तीति सुखमया; सुरवप्रधाना वा ; एकस्यामपि दिशि अणुमात्रं दुःखं नाऽस्तीत्यर्थः। "भावः पदार्थे सत्ताया मात्मयोनिस्वभावयो·" (वैज. को. 6-1-43) इति यदावः ॥१५॥

ननु स्थाविर्ये निराहारत्वे वा विषयतृष्णात्यागेन मुक्तिः किं न स्यादिति तत्राऽऽह - **येति** । सत्यम्. तृष्णात्यागे मुक्तिः स्यात्, स एव नास्ति तस्मात् ज्ञानेन तत्सुत्यागोऽतस्तदेवापाद्यमित्यर्थः। शर्मकामःसुखार्थी वयसा अनशनेन वा जीर्यतो जरा माप्नुवत ॥१६॥

**मात्रा स्वस्रा दुहित्रा वा [1]न विविक्तासनो भवेत् ।**
**बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति ॥१७॥**

**पूर्णं वर्षसहस्रं मे विषयान् सेवतोऽसकृत्।**
**तथाऽपि चाऽनुसवनं तृष्णा तेषूपजायते ॥१८॥**

**तस्मा देतामहं त्यक्त्वा ब्रह्मण्याधाय मानसम् ।**
**निर्व्दन्द्वो निरहङ्कारश्चरिष्यामि मृगैस्सह ॥१९॥**

**दृष्टं [2-]श्रुतमसद्बुध्द्वा[-2] नाऽनुध्यायेन्न संविशेत् ।**
**संसृतिश्चात्मनाशश्च तत्र विद्वान् स आत्मदृक् ॥२०॥**

**इत्युक्त्वा नाहुषो जायां तदीयं पूरवे वयः ।**
**दत्त्वा स्वां जरसं तस्मादाददे विगतस्पृहः ॥२१॥**

**दिशि दक्षिणपूर्वस्यां [3]द्रुह्युं दक्षिणतो यदुम् ।**
**प्रतीच्यां तुर्वसुं [4]चक्रे ह्युदीच्यामनुमीश्वरम् ॥२२॥**

---

1 ABGJMMa नावी॰ 2--2 MMa 'सद्विद्वान्ना॰ 3 H M Ma V द्रुह्य 4 ABGJMMa चक्र उ॰

**भूमण्डलस्य सर्वस्य पूरुमर्हत्तमं विशाम्[1]।**

**अभिषिच्याऽग्रजांस्तस्य वशे स्थाप्य वनं ययौ ॥२३॥**

**[2]आसेवितं वर्षपूगान् षड्वर्गं विषयेषु सः।**

**क्षणेन मुमुचे नीडं जातपक्ष इव द्विजः ॥२४॥**

**श्रीध०** स्त्रीसन्निधानंतु सर्वथा त्याज्यमित्याह - **मात्रेति**।विविक्तं[3] असंङ्कीर्णमासनं यस्य सः। कर्षत्याकर्षति ॥१७-१९॥

ननु तृष्णात्यागस्य आतिदुष्करत्वात् कथं ब्रह्मणि मनस आधानं स्यात्, तत्राऽऽह **दृष्टमिति**। यो नानुध्यायेत् न संविशेत् न चोपभुञ्जीत, तत्र दृष्टश्रुतयोरनुध्यानादौ, स आत्मदृक् भवति ॥२०-२२॥

**भूमण्डलस्येति**। तस्य पूरो वंशे स्थापयित्वा ॥२३॥

**आसेवितमिति**। विषयेषु शब्दादिष्वासेवितं षड्वर्गं षडिन्द्रियसुखं मुमुचे तत्याज । यद्वा विषयेष्वासेवितं सेवां कारितं षण्णामिन्द्रियाणां वर्गं मुमुचे उपैक्षतेत्यर्थ· ॥२४॥

**वीर०** स्त्रीसन्निधानान्तु सर्वथा त्याज्यमित्याह - **मात्रेति**। मात्रादीनामन्यतमया वाऽपि (अ)विविक्तं सङ्कीर्णमासनं यस्य तथाभूतो न भवेत्, अन्यथा बलवान् प्रमाथी इन्द्रियसमूहः विद्वांसमप्यपकर्षतति आकर्षेच्चालयेदित्यर्थः ॥१७॥

जीर्यतोऽपि न जीर्यत इत्येतदेव स्वदृष्टान्ते नोपपादयति - **पूर्णमिति**। असकृत् वारं वारं विषयाननुभवतो मम वर्षसहस्रं पूर्णमभूत्। तथाऽ प्यद्याऽपि अनुसवनं तत्तद्विषयानुभवसमयमनतिक्रम्य अतिमात्रं तृष्णा उपजायते न तु शाम्यति ॥१८॥

तस्मात्कामानामुपभोगेन कामाशान्तेरहमेतां विषयतृष्णां त्यक्त्वा ब्रह्मणि मानसमाधाय शीतोष्णादि द्वन्द्वै रनभिभूते देहात्मभ्रामरहितश्च मृगैस्सह चरिष्यामि, वनं प्रविशामीत्यर्थः ॥१९॥

ननु, तृष्णाया दुस्त्यजत्वात्कथं सहसा तव मनसो ब्रह्मण्याधानं स्यात्। तत्राऽऽह - **दृष्टमिति**। दृष्टमैहिकविषयजातं श्रुतमाष्मिकं, तदुभयमसदपुरुषार्थरूपं विद्वान् पुमान् नानुध्यायेत् न संविशेत्, नाऽनुध्यायाति नोपभुङ्क्तेच, कथम्भूतः? तत्राऽनुध्यानसंवेशनयो· सतो संसृतिमत्मनाशमन्तत स्थावरताप्राप्तिश्च विद्वान् अननुध्यानासंवेशयोर्हेतुं वदन् विद्वासं विशिनष्टि - सः दृष्टादीनामसद्रूपत्वादिकं विद्वान् पुमान् आत्मदृक् दृष्टश्रुताद्यपेक्षया निरतिशयानन्दरूपस्वात्मपरमात्मयाथात्म्यं पश्यति, तथा निरतिशयानन्दरूपयाथात्म्यानुभवनिष्ठस्य अर्थादेव तृष्णा निवर्तत इति भाव· ॥२०॥

---

1 TW दिशाम् 2 Mma आम्रेडित 3 ABJ अविविक्त सङ्की°

इतीत्थं जायां देवयानीमुक्त्वा नाहुषो ययातिः पूरवे पुत्राय तदीयं वयो दत्वा विगतविषयतृष्णः तस्मात्पूरोस्सकाशात् स्वकीयां जरामाददे जग्राह ॥२१॥

ततो दक्षिणपूर्वस्यामाग्नेय्यां दिशि द्रुह्युमीश्वरमधिपतिं चक्रे। दक्षिणतो दक्षिणस्यां तु दिशि यदुं, प्रतीच्यां दिशि तुर्वसुमुदीच्यामनुमीश्वरं चक्रे ॥२२॥

दिशां, मध्यवर्तिन इति शेषः। सर्वस्य भूमण्डलस्य ईश्वरमधिपतिमर्हत्तमं बहुमन्तव्यं पुरुमभिषिच्य अग्रजान् यदुप्रभृतीन् तस्य पूरोर्वंशे स्थाप्य स्थापयित्वा, असमासेऽपि ल्यबार्षः। तदधीनान् कृत्वेत्यर्थः। स्वयं वनं ययौ ॥२३॥

स ययातिः वर्षपूगान् विषयेषु शब्दादिषु अस्खलितं षड्वर्गं षडिन्द्रियसुखं क्षणेन मुमुचे तत्याज। यथा जातौ पक्षौ यस्य स द्विजो विहङ्गः नीडं त्यजति, तद्वत् ॥२४॥

विज० [1-]अविविक्तासनः एकशय्यासनः[-1] ॥१७॥

स्वतो विषयतृष्णा न शाम्यतीत्यत्र स्वानुभवमाह - पूर्णमिति ॥१८॥

अतः किं फलितमिति तत्राऽऽह **तस्मादिति**। मृगयन्ते तत्त्वमिति मृगाः ज्ञानिनः तैस्सह अरण्यचरैः हरिणादिभिर्वा तपश्चरिष्यामीत्यर्थः ॥१९॥

दृष्टश्रुतत्यागेन अदृष्टाश्रुतसुखाय कः कुशलः प्रयतते अरण्ये कायक्लेशं विद्वान् इति तत्राऽऽह - **दृष्टमिति**। दृष्टं राज्यादिविभवं, श्रुतं स्वर्गादिमङ्गलमित्युभयं असत् क्षणभङ्गुरं विद्वान्, तन्नाऽनुध्यायेत्, तद्विषयचिन्ता न कार्या। न संविशेत् भोगलक्षणप्रवेशो न कर्तव्य इत्यन्व्यः। कुत इति तत्राऽऽह - संसृतिमिति। तत्रानुध्यान संवेशयोस्सृतोः संसारमात्मनाशं स्वरूपज्ञाननाशं विद्वान् यः स आत्मदृक् आत्मज्ञानीत्युच्यत इत्यन्वयः। "ध्यायतो विषयान्पुंसः सङ्गस्तेषूपजायते" (भ. गी.2-62) इत्यादेः, अनेन दृष्टश्रुतसुखस्य सदातनत्वं विद्वान् बालिशो यतोऽस्य दुःखोदर्कत्वज्ञनी पश्यतीति ज्ञायते ॥२०॥

तदीयं पूरोर्विद्यमानम् ॥२१॥

दक्षिणपूर्वस्यां आग्नेय्यामीश्वरं राजानम् ॥२२॥

विशां प्रजानामर्हत्तमं पूज्यतमं स्थापयित्वा ॥२३॥

शब्दादिविषयेषु अम्रेडितमभ्यस्तं षडिन्द्रियवर्गं मुमुचे विषयादाहृत्य भगवद्विषयं चकारेत्यर्थः ॥२४॥

---

1--1 Ma omits

**स तत्र निर्मुक्तसमस्तसङ्ग आत्मानुभूत्या विधुतत्रिलिङ्गः ।**
**परेऽमले[1] ब्रह्मणि वासुदेवे लेभे गतिं भागवतीं प्रतीतः ॥२५॥**

**श्रुत्वा गाथां देवयानी मेने प्रस्तोभमात्मनः ।**
**स्त्रीपुंसोः स्नेहवैक्लव्यात्परिहासमिवोदितम्[2] ॥२६॥**

**सा सन्निवासं सुहृदां प्रपायामिव गच्छताम् ।**
**विज्ञायेश्वरतन्त्राणां मायाविरचितं प्रभोः[3] ॥२७॥**

**सर्वत्र सङ्गमुत्सृज्य स्वप्नौपम्येन भार्गवी ।**
**कृष्णे मनस्समावेश्य व्यधुनोल्लिङ्गमात्मनः ॥२८॥**

**नमस्तुभ्यं भगवते वासुदेवाय वेधसे ।**
**सर्वभूतनिवासाय[4] शान्ताय बृहते नमः ॥२९॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
नवमस्कन्धे एकोनविंशोऽध्याय ॥१९॥

**श्रीध० स इति ।** विधुतं निरस्तं त्रिगुणात्मकं लिङ्गं येन । प्रतीत· प्रख्यात ॥२५॥
**श्रुत्वेति ।** प्रस्तोभमेवाऽऽह - परिहासमिवेति । यद्वा प्रस्तोभं निवृत्तिमार्गे प्रेत्साहनं मेने ॥२६-२८॥
कथं समावेश्य इत्यत आह[5] - **नम** इति, नमनादिभिस्समावेश्येत्यर्थः । श्रीशुको वा नमस्करोति **॥२९॥**

इति श्रीमद्भागवते महापुराणे
श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्यख्यायां नवमस्कन्धे एकोनविंशोऽध्याय ॥१९॥

**वीर०** प्रतीतः प्रख्यातः स ययातिस्तत्र वने निर्मुक्तः समस्ता देहतदनुबन्ध्यादिसङ्गा येन स आत्मानुभूत्या ब्रह्मोपासनया विधुतत्रिलिङ्गः निर्मुक्तगुणत्रयकार्यः पदे प्राप्ये परस्मिन् ब्रह्मणि वासुदेवाख्ये भागवतीं गतिं लेभे **आसन्नमोक्षो बभूवेत्यर्थः ।** अन्यथा भारतविरोधात्, तत्र तस्य स्वर्गादिप्राप्तेरेव कथनात् इति तत्रैव विस्तरतो द्रष्टव्यम् ॥२५॥

1 TW पदे परे ब्रं॰ 2 ABGJ ॰मिवेरितम् 3 M Ma प्रभो । 4 ABGJMMa ॰ताधि॰ 5 ABJ तदाह

देवयानी तु भर्त्रा कथितां कथामात्मनः **प्रस्तोभं** मेने तावत् परिहासरूपाममन्यत। प्रस्तोभतामेव व्यनक्ति -**स्त्रीपुंसो** रिति। समासान्ताभाव आर्षः। तदनित्यत्वाद्वा **स्त्रीपुंसयोः** य· परस्परं स्नेहस्तत्कृतं **यद्वैक्लब्यमधाष्ट्यं तस्माद्धेतोः** परिहास मिवेरितं कथितमितिहासं प्रस्तोभं मेन इत्यन्वयः, ईरितामिति पाठे गाथाविशेषणम्। ईहितमिति पाठे आत्मनोश्चेष्टितं कथारूपेणोपवर्णितं परिहासमिव मेने ॥२६॥

**सेति**। ततः सा देवयानी ईश्वरतन्त्राणां सुहृदां पतिपुत्रादीनां सन्निवासं सुहृद्भिः सहवासमित्यर्थः। गच्छतां पान्थानां प्रपायां पानशालायामिव अनित्यं प्रभोरीश्वरस्य मायया विरचितश्च विज्ञाय स्वप्नदृष्टान्तेन सर्वत्र देहतदनुबन्ध्यादिषु सङ्ग मुत्सृज्य स्वप्नवत् सर्वैस्सम्बन्धोऽनित्य इति निश्चित्येत्यर्थ· ॥२७॥

भार्गवी देवयानी स्वमन· कृष्णे भगवति निधाय कृष्णं ध्यात्वेर्त्थः आत्मनो लिङ्गं शरीरं व्यधुनोत्, तत्याज ॥२८॥

प्रसक्तानुप्रसक्तं भगवन्तं नमस्करोति शुकस्सूतो वा **नम** इति। वेधसे जगत्स्रष्ट्रे सर्वभूतानामाधारभूताय शान्ताय अशनायाद्यूर्मिषट्क रहिताय बृहते ब्रह्मणे वासुदेवाख्याय तुभ्यं नम ॥२९॥

इति श्रीमद्भागवते नवमस्कन्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां एकोनविंशोऽध्याय ॥१९॥

**विज०** आत्मानुभूत्या परमात्मापरोक्षज्ञानेन विधुतं त्रिभि· सत्त्वादिकैः गुणैर्निर्मितं लिङ्गमभिमानलक्षणं यस्य स तथा। विध्वस्ताध्यात्मिकाधिभौतिकाधिदैविकलिङ्गो वा भागवतीं भागवतधर्मलभ्यां गतिं मुक्त्यवस्थां, प्रतीतः कोविदः ॥२५॥

प्रस्तोभं वञ्चनम् ॥२६,२७॥

लिंङ्गं शरीरम्। व्यधुनोदमुञ्चत् ॥२८॥

नमस्तुभ्यमिति, जपित्वेति शेष· ॥२९॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
नवमस्कन्धे एकोनविंशोऽध्याय· ॥१९॥
विजयध्वजरीत्या षोडशः ॥१६॥

# विंशोऽध्यायः

श्रीशुक उवाच

पुरोर्वंशं प्रवक्ष्यामि यत्र जातोऽसि भारत ।
यत्र राजर्षयो वंश्या ब्रह्मवंश्याश्च जज्ञिरे ॥१॥

जनमे[1]जयोऽभवत्पूरोः प्रचिन्वां[2]स्तत्सुतस्ततः ।
[3]प्रविरोऽथ नमस्यु[4]र्वै तस्मा च्चारुः सुतोऽभवत् ॥२॥

तस्य सुद्युरभूत्पुत्रस्तस्माद्बहुगवस्ततः ।
[6]शर्यातिस्त[7]स्याहंयाती रौद्रा[8]श्वस्तत्सुतः स्मृतः ॥३॥

[9-]ऋतेपुस्तस्य कक्षेपुः स्थलेपुश्च कृते[-9]पुकः ।
[10-]जलेपुः सन्नतेपुश्च धर्मसत्यव्रते[-10]पवः ॥४॥

दशैतेऽप्सरसः पुत्रा वने[11]पुश्चाऽवमः स्मृतः ।
घृताच्यामिन्द्रियाणीव मुख्यस्य जगदात्मनः ॥५॥

ऋते[12-]पो रन्तिसा[-12]रोऽभूत् त्रयस्तस्याऽत्मजा नृप ।
सुमतिर्ध्रुवोऽप्रतिरथः कण्वोऽप्रतिरथात्मजः ॥६॥

तस्य मेधातिथिस्तस्मात् प्रस्क[13]ण्वाद्या द्विजातयः ।
पुत्रोऽभूत्सुमते रैभ्यो दुष्यन्तस्तत्सुतो मतः ॥७॥

दुष्यन्तो मृगयां यातः कण्वाश्रमपदं गतः ।
तत्राऽऽसीनां स्वप्रभया मण्डयन्तीं रमामिव ॥८॥

---

1 ABGJ °यो ह्यभूत्पूरो , MMa ०योऽभूत्पूरोस्तु 2 MMa °स्स्मृत 3 AGJMMa प्रवी° , B प्रधी° 4 ABGJMMa °च्चारुपदो 5 H V [illegible] 6 ABGJ संयाति , MMa शयाति 7 H V स्तस्य सयाती 8 TW °ति° 9- -9 ABGJ ऋतेयुस्तस्य कुक्षेयु स्थण्टिलेयु कृतेयुक , MMa ऋतेयुस्तस्य कक्षेयु स्थ[illegible] कृतेयुक. 10- -10 ABGJ जलेयु सन्ततेयुश्च धर्मसत्यव्रतेयव , MMa जलेयु सन्नतेयुश्च धर्मसत्यव्रतेयव 11 ABGJMMa °यु 12- -12 AGJ °यो रन्ति° , B M Ma °यो रन्तिभा° , B M Ma °योरन्तिना° 13 H V °न्दा°

## श्रीश्रीधरस्वामिविरचिता भावर्थदीपिका

विंशे पितृप्रसादाप्तराजासनमहोन्नतेः ।

पूरोर्वंशे[1] तु दौष्यन्तेर्भरतस्येर्यते यशः ॥

तस्येति[2]। तत्सुतः संयाते· सुत ॥२-३॥

ऋतेपुरिति[3]। धर्मेपुश्च[4] सत्येपुश्च[5] व्रतेपुश्च[6] धर्मसत्यव्रतेपवः ॥४॥

दशेति[7]। वनेपुश्चावमः स्मृतः। एवं दशैते[8] ऋतेपुप्रमुखाः तस्य रौद्राश्वस्य घृताच्यामप्सरसि पुत्रा जाताः। अप्सरस इति षष्ठी सप्तम्यर्थे। वशवर्तित्वे दृष्टान्त· जगदात्मनो जगत आत्मभूतस्य मुख्यस्य प्राणस्येन्द्रियाणीव ॥५-७॥

दुष्यन्तस्य शकुन्तलायां भरत· पुत्रोऽभवदिति कथाद्वोरणाऽऽह 'दुष्यन्तो मृगया'मिति पञ्चदशभिः। तदा[9]श्रमपदं[-9] मण्डयन्तीम्[10] भूषयन्तीम्[-10] ॥८॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

एवं ययातेश्चरित्रमुपवर्ण्य इदानीं तत्सुतस्य पूरोर्वंशकथनं प्रतिजानन् राज्ञस्तत्र शुश्रूषामुत्पादयति - **पूरोरिति**। हे भारत! यत्र यस्मिन् वंश त्वं जातोऽसि, यत्र राजर्षयो वंश्या ब्रह्मवंश्याः ब्राह्मणाश्च वंश्या जज्ञिरे, तं पूरोर्वशं प्रवक्ष्यामि वंशे साधवो [11]वंश्या वंश्यवर्धना· राजर्षयो ब्राह्मणाश्च यत्र जज्ञिरे इत्यर्थः ॥१॥

जनमेजय इति। पूरोस्तावज्जनमेजय· सुत· समभूत्[12] तत्पुत्रो[13] जनमेजयस्य सुतः प्रधन्वान्, प्रचिन्वानिति पाठान्तरम्। तस्मात् प्रविरोथ· तस्मान्नमस्युः, तत स्तस्मात् नमस्यो· चारुरिति प्रसिद्धः सुतः समभवत् ॥२॥

तस्य चारो· सुद्युः पुत्रोऽभवत्। तस्मात्सुद्योः बहुगवः समभवत्। तस्य बहुगवस्य शर्यातिः, संयातिरिति पाठान्तरम्। तस्य अहंयाति·, तत्सुतोऽहंयातिसुतो रौद्रातिः, रौद्राश्व इति पाठान्तरम् ॥३॥

तस्य रौद्राश्वस्य ऋतेपुप्रभृतयो[14] दशपुत्रा घृताच्या अप्सरसः अप्सरसि जाता· ॥४॥

यथा जगदात्मनो भगवतो दशेन्द्रियाणि जातानि तद्वत् तेषां दशानामवम· कनीयान्वने[15]पुः जले[16]पुरिति कुले[17]पुरिति च पाठान्तरम्। धर्मेति - ई[18]पु शब्दस्य धर्मादिभि प्रत्येकं सम्बन्धः द्वन्द्वान्ते श्रुतत्वात्। ततश्च धर्मे[19]पुः, सत्ये[20]पुः व्रते[21]पुश्चेति फलितम् ॥५॥

---

1 ABJ हि 2 ABJ अहयाते 3 ABJ 'युश्च 4 AGJ 'युश्च 5 ABJ 'युश्च 6 ABJ 'यव 7 ABJ 'यु' 8 ABJ 'यु' 9--9 ABJ तमाश्रमं 10--10 ABJ omit 11 A omits वंश्या 12 TW तत्सुतो 13 TW 'यसु' 14 ABJ 'यु 15 AB 'यु' 16 AB 'ु 17 A 'ृ 18 A 'यु 19 A 'यु 20 A 'यु 21 ABJ 'यु

तत्र ऋतेपो[1]स्सुतः रन्ति[2]सारो बभूव। हे नृप! तस्य रन्ति[3]सारस्य त्रयस्सुताः। तान्निर्दिशति स्मृतिर्ध्रुवोऽप्रतिरथश्चेति। सुमतिरिति पाठान्तरम्। तत्राऽप्रतिरथस्याऽऽत्मजः कण्वः ॥६॥

• **तस्येति**। तस्य कण्वस्य मेधातिथिः, तस्मान्मेधातिथेः पुत्राः प्रस्कण्वप्रभृतय ब्राह्मणा जज्ञिरे। सुमतेरन्तिसारसुतस्य पुत्रो रैभ्यः, तत्सुतो रैभ्यसुतः दुष्यन्तो मतः प्रख्यातः ॥७॥

दुष्यन्तस्य शकुन्तलायां भरतोऽभवदिति वक्तुं, तद्वृत्तान्तमाह - दुष्यन्त इत्यादिना पितर्युपरत इत्यतः प्राक्तनेन। कदाचित् दुष्यन्तो मृगयाश्चरन् यदृच्छया कण्वस्य ऋषेराश्रमस्थानं गतः तत्राश्रमे आसीनामुपविष्टां रमामिव लक्ष्मीमिव स्वप्रभया मण्डयन्तीम्, आत्मानमिति शेषः। तमाश्रममिति पाठान्तरम् तदा तं मण्डयन्तीम् ॥८॥

## विजयध्वजतीर्थकृता पदरत्नावली

यत्र पूरोर्वंशे जज्ञिरे, तेषु केचन राजर्षयो भवन्ति राजवंश्याः, केचन ब्रह्मवंश्याश्च भवन्ति, वंशे भवाः वंश्याः ॥१-३॥

तस्य रौद्राश्वस्य ऋतेय्वादयो दश पुत्राः ॥४॥

जगदात्मनः जगद्व्याप्य तिष्टतो मुखस्य प्राणस्य ॥५,६॥

कण्वाद्याः राजवंश्याः, प्रस्कण्वाद्याः ब्रह्मवंश्या ॥७,८॥

**विलोक्य सद्यो मुमुहे देवमायामिव स्त्रियम्।**
**[5]जगाम तां वरारोहां भटैः कतिपयैर्वृतः ॥९॥**

**तद्दर्शनप्रमुदितः संनिवृत्तपरिश्रमः।**
**प्रपच्छ कामसन्तप्तः प्रहसन् श्लक्ष्णया गिरा ॥१०॥**

**दुष्यन्त उवाच**

**का त्वं कमल[7]गर्भाभे! कस्यासि हृदयङ्गमे!**
**किं वा चिकीर्षितन्त्वत्र भवत्या [8]विजने वने ॥११॥**

---

1 ABJ °यो 2 AB °नारो 3 AB °मा° 4 A B °ना° 5 ABGJMMa बभाषे 6--6 ABGJMMa omit 7 ABGJ पत्राक्षि 8 ABGJ निर्जने

**व्यक्तं राजन्यतनयां वेद्म्यहं त्वां सुमध्यमे !**
**न हि चेतः पौरवाणामधर्मे रमते क्वचित् ॥१२॥**

**शकुन्तलावाच-**

**विश्वामित्रात्मजैवाऽहं त्यक्ता मेनकया वने।**
**वेदैतत् भगवान् कण्वो वीर किं करवाम ते ॥१३॥**

**आस्यतामरविन्दाक्ष![1] गृह्यतामर्हणञ्च नः।**
**भुज्यन्तां[2] सन्ति नीवाराः उष्यतां यदि रोचते ॥१४॥**

**दुष्यन्त उवाच -**

**उपपन्नमिदं सुभ्रु जातायाः कुशिकान्वये।**
**स्वयं हि [3]वृण्वते राज्ञां कन्यकाः सदृशं वरम् ॥१५॥**

**ओमित्युक्ते यथाधर्ममुपयेमे शकुन्तलाम्।**
**गान्धर्वविधिना राजा देशकालवि[4]धानवित् ॥१६॥**

**श्रीध० विलोक्येति**। स्त्रियं विलोक्य मुमुहेऽमुह्य[5]त् ॥९॥

**तदिति। तस्या** दर्शनेन प्रमुदितोऽत एव सन्निवृत्त परिश्रमो यस्य ॥१०,११॥

**व्यक्तमिति।** पौरवाणां चेतो न ह्यधर्मे रमते, अतो मच्चेतसस्त्वयि रमणादेवाऽहं त्वां राजन्यतनयां वेद्मि ॥१२॥

**विश्वामित्रेति।** विश्वामित्रस्याऽऽत्मजाऽहं मेनकायां जाता, तया च स्व[6]र्गं गच्छन्त्याऽत्र [7]वने त्यक्ता। अतो राज[8]न्यकन्यैवाऽह मित्यर्थ. ॥१३,१४॥

**किंकारवऽमे**त्यादिवाक्यात्तदभिप्रायं ज्ञात्वाऽऽह- **उपपन्नमिति** ॥१५॥

**ओमिति।** गान्धर्वविधिना मिथस्समयपूर्वकेण ॥१६॥

**वीर० देव**मायां मोहिनीमिव स्थितां शकुन्तलाख्यां स्त्रियं विलोक्य, सद्यस्तदैव मुमुहे मोहं प्राप्तः। तस्याः दर्शनेन

1 ABGJ 'तांम' 2. ABGJM MaV भुज्यतां 3 ABGJ वृणते , MMa वृणुते 4 B 'भा' 5 H V 'तर् 6 B स्वगग' 7 ABJ omit वने 8 ABJ राजक'

नितरां मुदितः हृष्टः अत एव सन्निवृत्तः परिश्रमः मृगयाऽऽयासः यस्मात् स कतिपयैः भृत्यैः वृतः कामेन सन्तप्तो दुष्यन्त प्रहसन्, मधुरया गिरा तां वरारोहां बभाषे ॥९,१०॥

तदेवाऽऽह- का त्वमिति ? हे कमलगर्भाभे! हे हृदयङ्गमे! नोङ्गे। त्वं का? इति जातिप्रश्न । कस्याऽसि कस्य सम्बन्धिन्यसि? निर्जनेऽस्मिन्वने भवत्या त्वया किञ्चिकीर्षितं कर्तुमिष्टम्॥ ११॥

व्यक्तमिति। हे सुमध्यमे! त्वामहं राजन्यतनयां व्यक्तं नूनं वेद्मि, अन्यथा मच्चेतस्त्वयि न सक्तं स्यादित्याह - नहीति पौरवाणां पूरोर्वंशजानां चेतः कदाचिदप्यधर्मे न रमते ॥१२॥

एवमुक्ता शकुन्तलाऽऽह - विश्वामित्रात्मजेति। विश्वामित्रस्यैव तनया मेनकया मात्रा स्वर्गच्छन्त्या अस्मिन्वने त्यक्ता अहं राजन्यकन्यैवेत्यर्थः। अत्र मानमाह - वेदेति। एतच्च भगवान् कण्वः वेदमजानाति। हे वीर! ते तव किं करवाम? ॥१३॥

हे अरविन्दाक्ष आस्यतां स्थीयतां त्वयेति शेषः। नोऽस्माकमर्हणं[1] गृह्यताम्[1] आस्मत्कृतमर्हणं गृह्यताम्। अत्र नीवारा आरण्यव्रीहयः सन्ति। ते भुज्यन्तां यदि रोचते, तर्हि उष्यताम् ॥१४॥

किङ्करवामेति वाक्यात्तदभिप्रायं ज्ञात्वाऽऽह दुष्यन्तः - उपपन्नमिति। हे सुभ्रु! कुशिकान्वये जातायास्तवेदं किङ्करवामेति वच उपपन्नं युक्तमेव। तथा हि राज्ञां कन्यकाः स्वयमेव सदृशं वरं पतिं वृण्वते ॥१५॥

ततस्तया दुष्यन्तोक्ते अङ्गीकृते[2] सति स राजा दुष्यन्तो देशकालविधानज्ञो गान्धर्वविधिना मिथस्समयपूर्वकेन यथाधर्मं शकुन्तलामुपयेमे ॥१६॥

विज० कमलगर्भाभे! पद्मोदरप्रभे हृदयङ्गमे! सुन्दरि! ॥९-१३॥

अर्हणम् अर्घ्यादिपूजां, नीवाराः देवव्रीह्यः, तैरापादितं, अन्नमिति शेषः ॥१४,१५॥

ब्राह्मो राक्षसो गान्धर्व इत्यादयो बहवो विवाहविधयः सन्ति। तेषु गान्धर्वविधिना स्वयंवरलक्षणेन ॥१६॥

**अमोघवीर्यो राजर्षिर्महिष्यां वीर्यमादधे ।**
**श्वोभूते स्वपुरं यातः कालेनासूत सा सुतम् ॥१७॥**

---

1- -1 TW omit 2 AB omit सति

काण्वः कुमारस्य वने चक्रे समुचि[1]ताः क्रियाः।
बद्ध्वा मृगेन्द्रांस्तरसा क्रीडति स्म स बालकः ॥१८॥

तं दुरत्ययविक्रान्तमादाय प्रमदोत्तमा।
हरेरंशांशसम्भूतं भर्तुरन्तिकमागमत् ॥१९॥

यदा न जगृहे राजा भार्यापुत्रावनिन्दितौ।
शृण्वतां सर्वभूतानां खे वागाहाशरीरिणी ॥२०॥

माता भस्त्रा पितुः पुत्रो [2]येन जातस्स एव सः।
[3]भरस्व पुत्रं दुष्यन्त! मावमंस्थाश्शकुन्तलाम् ॥२१॥

[4]रेतोधाः पितरं पुत्रो नयत्येव[-4] [5]यमक्षयात् ।
भरस्व पुत्रं भरतं वासुदेवांशसम्भवम्।
ब्रह्मण्यं सत्यसन्धञ्च गुणज्ञं कीर्तिवर्धनम् ॥

महोत्साहं स्थूललक्षं कृतज्ञं वृद्धसेवकम्।
अशरीरवचः श्रुत्वा स्वीचकार तदात्मजम् ॥*

त्वञ्चास्य धाता गर्भस्य सत्यमाह शकुन्तला ॥२२॥

पितर्युपरते सोऽपि चक्रवर्ती महायशाः।
महिमा गीयते [6]यस्य हरेरंशभुवो भुवि ॥२३॥

चक्रं दक्षिणहस्ते[7]ऽस्य पद्मकोशश्च पादयोः।
ईजे महाभिषेकेण सोऽभिषिक्तोऽधि[8]राड्विभुः ॥२४॥

श्रीध० तमिति। दुरत्ययं विक्रान्तं वि[9]क्रमः यस्य ॥१७-२०॥

भस्त्रा [10]चर्मपात्रं, तद्वन्माता आधारमात्रम्। पितुरेव तु पुत्रः। तत्र हेतुः, येनेति। "आत्मा वै पुत्रानामाऽसि" (कौ षी. उ.

1 MMa 'चि' 2. MMa यस्माज्जात 3 MMa दौष्यन्ति 4--4 ABGJ पुत्रो नयति नरदेव , MMa पुत्रं नयति नरदेव 5 MMa 'यम् * These two extra verses are found in H T.V.W edition and the second verse is commented by Sridhara, 6 ABGJMMa तस्य 7 ABGJ 'शोऽस्य' 8 MMa 'राट्प्रभु 9 ABJ 'भर्ण 10. A 'पा'

2-11 ) इति श्रुतेः। पुत्रं[1] भरस्व पुषाण। अनेन भरतनाम निरुक्तम् ॥२१॥

किञ्च, रेतोधा इति रेतोधा रेतस्सेक्ता वंशकृत्पुत्रो यमक्षयात् निरयात्[2] पितरं नयति पारयति। तथा च स्मृतिः - "पुन्नाम्नो नरकाद्यस्मात्पितरं त्रायते सुतः। तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयम्भुवा" (मनु. स्मृ.9-138) इति। [3]रेतोधा पुत्रं नयति नरदेवेति[3] पाठान्तरे मातापित्रोः पुत्रं प्रति विवादे यमक्षयाद्धर्मनिर्णेतुर्यमस्य सभायाः सकाशात् रेतोधा रेतस्सेक्ता पितैव धर्मेण विजित्य पुत्रं नयति, न तु मातेत्यर्थः। ततश्च भार्यापुत्रौ स्वीकृतवानिति ज्ञेयम् ॥२२॥

पितरीति। चक्रवर्ती बभूवेति शेषः। तस्य महिमा गीयते "तदप्येते श्लोका अभिगीताः" इत्यादि बह्वृचश्रुत्या। हरे रंशभुवः अंशाज्जातस्य ॥२३॥

तत्र लिङ्गमाह - चक्र मिति ॥२४॥

वीर० अमोघेति। अमोघमवितथं वीर्यं यस्य स राजर्षिर्दुष्यन्तो महिष्यां शकुन्तलायां वीर्यं रेत आदधे निहितवान्। ततः श्वोभूते प्रभाते स्वपुरं गतः।ततः कालेन प्राप्तकालेन सा शकुन्तला सुतं पुत्रमसूत सुषुवे ॥१७॥

कण्वेति। तस्य कुमारस्य समुचिताः क्रियाः जातकर्मादिक्रिया. कण्वो वन एव चक्रे। स च बालक[4]स्तरसा बलेन सिहं बद्ध्वा तेन क्रीडति स्म। बाल्यादारभ्य अपरिमितबलशौर्यादिगुणसम्पन्न इत्यर्थ· ॥१८॥

तमिति। तमपारविक्रमं भगवतोऽशांशेन सम्भूतं कुमारमादाय शकुंन्तला भर्तुर्दुष्यन्तस्यान्तिकं आगमत् ययौ ॥१९॥

यदेति। तावागतावनिन्दितौ निर्दुष्टौ भार्यापुत्रौ राजा दुष्यन्तो यदा न जगृहे ममैवेमौ भार्यापुत्राविति न स्वीकृतवान् तदा सर्वभूतानां शृण्वतां सतां खे अकाशे अशरीरिणी वाक् आह - अश्रूयतेत्यर्थः ॥२०॥

तामेव दर्शयति - मातेति। भस्त्रा चर्ममयं पात्रं तद्वत् माता आधारमात्रं स पुत्रःपितुरेव पुत्रः।तत्रहेतुः- येनेति। येन पित्रा जातः उत्पादितः स एव पितैव - "आत्मा वै पुत्रनामा" (कौ. षी. उ.2-11) इति श्रुते·इति[5] भावः। अतःपुत्रं दौष्यन्तिं दुष्यन्तस्य तवैवाऽपत्यं अनेन क्षेत्रजत्वशङ्का परिहृता। भरस्व पोषय। शकुन्तलां [6]मावमंस्थाः[6] नावमन्यस्व भरस्वेत्युक्त्या भरतनाम निरुक्तम् ॥२१॥

किञ्च रेतोधाः रेतस्सेक्ता वंशकृत्पुत्रः हे नरदेव! यमक्षयात् यमसदनात्पितरं [7]स्वर्नयति[7]। पुत्रमिति द्वितीयान्तपाठः

1 ABJ omit पुत्रं 2 ABJ omit निरयात् 3-3 ABJ omit 4 AB omit 'क' 5 A.B omit इति भाव 6-6 A.B मावमानं कुरु 7-7 A omits

प्रायिकः। तत्र यमक्षया दिनेति शेष·। पुत्रं रेतोधाः पिता नयति मृतपुत्रं विनाऽन्यं क्वापि स्थितं पुत्रं पिता स्वीकारोतीत्यर्थः। यमक्षयमिति पाठान्तरम्। तदा तद्वाक्यान्तरं यं रेतोधातारं पुत्रः अक्षयं स्थानं नयति। स रेतोधाः पुत्रं नयति स्वीकरोतीत्यर्थः। पूर्वपाठे एवं वा अन्वयः - हे नरदेव, अधा इति छेदः रेतो निहितवानसि शकुन्तलायामिति। विभक्तिपरिणामेनाऽनुषङ्गः। अतोऽयं तव पुत्र त्वां यमक्षयान्नयति, नेष्यति, स्वर्गमिति शेषः। अतः स्वीकुर्विति भाव·। शकुन्तलोक्तं नानृतमित्याह - त्वमिति। अस्य गर्भस्यापत्यस्य धाता विधाता उत्पादकस्त्वमेवेति यच्छकुन्तला आह तत्सत्यमेव नानृतमित्यर्थ·। ततश्च स भार्यापुत्रौ स्वीकृतवानिति ज्ञेयम् ॥२२॥

तत **पितरि** दुष्यन्ते उपरते मृते सति सोऽपि भरतोऽपि चक्रवर्ती सप्तद्वीपाधिपतिः महायशा· बभूव। तं विशिंषन् तद्वृत्तान्तमाह - महिमेत्यादिना। भुवि हरेर्भगवतोऽशेन जातस्य यस्य भरतस्य महिमा गीयते तत्, "अप्येते श्लोका अभिगीताः"

इत्यादि बह्वृचश्रुत्येति शेष· ॥२३॥

हरेरंशभवत्वे लिङ्गं वदन्विशिनष्टि - **चक्र**मिति। अस्य भरतस्य दक्षिणे हस्ते चक्रं चक्राकाररेखा पादयोस्तु पद्मकोशाकारा अवर्तत इति शेषः। स च भरतो महाभिषेकविधिनाऽभिषिक्तोऽधिराट् सार्वभौमो विभुर्भूत्वा ॥२४॥

**विज०** समुदिताः विध्युक्ताः ॥१८॥

तं कुमारं प्रमदोत्तमा शकुन्तला ॥१९॥

अशरीरिणी वाक् दैवी वाणी आह - गुह्यभाषया राजानमिति शेषः। "त्रिभाषां यो न जानाति रीतीनां शतमेव च।" इत्युक्तेः। पुराणेषु भाषात्रयस्य न्यायप्राप्तत्वात् ॥२०॥

यथा कारुशाला चुल्लीस्थिताग्निशक्त्युद्दीपकत्वेन अग्नेराधारमात्रं, भस्त्रा 'भस भक्षणदीप्त्योः' इति धातोः। तथा माता भार्त्राऽऽहितं वीर्यमादाय करचरणाद्यवयवविशिष्टदेहाकारेण परिणामप्राप्तस्य वीर्यस्य प्रथमाधारभूतत्वात्[1] मातुः पुत्रत्व मौपचरिकम्।तर्हि कस्य मुख्यपुत्रत्वमिति तत्राऽऽह - पितुरेव पुत्र इति। मुख्यपुत्रत्वं पितुरेव कुत इत्यत्राऽऽह - **यस्मा** दिति। स पितैव पुत्रो जातः इति यस्मात्तस्मात् स पुत्रः पितुरेवेत्यर्थः॥ "आत्मा वै पुत्रनामाऽसि" (कौ. षी. उ. 2-11)

इति श्रुतेः "तज्जाया जाया भवति (जायाया स्तद्धि जायात्वं) यदस्यां जायते पुनः" मनुस्मृ 1-8 इति च। पुत्रदेहस्याऽपि पितृदेहैकदेशस्योपादानत्वद्योतनाय पितुरित्युक्तम्। अन्यथा पिता पुत्र इति प्रयोगस्याऽपि सम्भवात्। प्रकृते किमपेक्षितमिति

---

1 M 'म आ'

तत्राऽऽह - **भरस्वेति**। भरस्व स्वीकुरु[1] अन्यपुत्रं कथं स्वीकरोमीत्यत उक्तं दौष्यन्तिमिति। औरेसं पुत्रमित्यर्थः। अतः शकुन्तला स्वैरिणीति मावमंस्थाः अवज्ञातां न कुरु ॥२१॥

ननु, पुत्रेण मम किं प्रयोजनं स्यात् येन भार्या स्यादिति तत्राऽऽह- रेतोधा इति। पुत्रं पुत्र· रेतोधा रेतोधातारं पितरं यमक्षयं योऽक्षयोऽनन्तो लोकस्तं वैकुण्ठादिकं नयति प्रापयति। "यस्मात्पुत्रमनुशिष्टं लोकमाहुस्तस्मादेनमनुशासति" इति हि श्रुतिः। नरदेव दुष्यन्त! दौष्यन्तिं पुत्रं स्वीकुर्विति शेषः। मयाऽनाहितगर्भजातं पुत्रं कथं दौष्यन्तिमिति वदतीति तत्राऽऽह - **त्वश्चेति**। च शब्द एवार्थे। त्वमेवाऽस्य गर्भस्य धाता आधानकर्ता। क आहेति तत्राऽऽह - सत्यमिति। शकुन्तला सत्यं यथार्थ मेव नानृत माह- यः पुत्र· स रेतोधातारमक्षयं नयतीति वा, "सुप्तिङुपग्रहलिङ्गनराणाम्" इति सूत्रात् व्यत्ययो युक्त·। अथवा अस्वीकारेणानर्थमाह - रेतोधा इति। रेतोधा भवान्पुत्रं यमक्षयं मृत्युलोकं नयति, मृतप्रायं करोति अस्वीकारात्। तेन सत्पुत्रहत्या दोषप्राप्तिस्तव स्यात्। अतस्तद्भयादपि स्वीकुर्वित्यर्थ·। ननु नाहं रेतोधा इति, नेत्याह - त्वश्चेति। अथवा तदुक्तं श्रुत्वा अस्वीकरो[2]मि किं अत इत्यतस्तल्लक्षणमाह - रेतोधा इति। यमयति शिक्षयति शिष्यमिति यमो गुरुः। 'क्षि निवासगत्यो·' इति। क्षयो निवास· रेतोधाः पुत्रं गुरुनिवासं नयतीति न्यायाद्भवानपि पुत्रं, स्वीकृत्य गुरुकुलवासं प्राप्य नयति न्यायशास्त्रादिविशारदं करोतीत्यर्थ। त्वत्पुत्रत्वसंशयो मा भूदित्याह त्वश्चेति। अथवा रेतोधाः अक्षयमगतिमनन्याधारं यं पुत्रं नयति स्वाश्रयं करोति स पुत्रः, तं रेतोधातारं अक्षयं लोकं नयति, अनन्याधारत्वे हेतुगर्भविशेषणमाह त्वश्चेति। अस्य सर्वस्य प्रमाणं शकुन्तलावचन मित्याह - सत्यमिति। द्वितीया च प्रथमेत्यनुवर्तते, द्वितीयाविभक्ति सप्तसु वर्तत इति द्वितीयाया प्रथमात्वसम्भवात् पुत्रमित्यादेः प्रथमात्वं सप्रामाणिकं, रेतोधा इत्यस्य द्वितीयात्वश्चेत्यर्थः। माता भस्त्रेति लुप्तोपमम्। हिरण्यधान्यादिग्राहिणी[3] पात्री भस्त्रा नाम यथा तथा भर्तुराहित[-3][4]वीर्यधारिणी। माता पुत्रस्य द्वारमात्रं पितृवीर्यात्मकत्वात् पितुरेव पुत्र इति वा योजना। शेष· पूर्ववत् ॥२२॥

पितरि दुष्यन्ते उपरते मृते सति स दुष्यन्तपुत्रः भरस्वेत्युक्तत्वात्, भरतो भरेण हरिणा ततत्वाद्वा, भूमे र्भरं भरणं तनोतीति वा शुभे रतत्वाच्च गुरुत्वलक्षणभारेण ततत्वाद्वा, चक्रवर्ती आज्ञयैव धर्माधर्मशास्ताऽभूदित्यन्वयः ॥२३॥

नाम्ना महाभिषेकेणाऽभिषिक्त इति वा ॥२४॥

**पञ्चपञ्चाशता[5] मेध्यैर्गङ्गायामनु वाजिभिः।**
**[6]दीर्घतमसं पुरोधाय यमुनायामनु प्रभुः ॥२५॥**

---

1 A.B omit स्वीकुरु 2 AB 'मि इत्यतस्तल्ल' 3--3 Ma omito 4 AB धारणी, MMa omit धारिणी 5 M Ma 'तैर्मे' 6 AGJM Ma मामतेय, B सामन्तेय

अष्टसप्ततिमेध्याश्वान् बबन्ध प्रद[1]द्वसु।
भरतस्य हि दौष्यन्तेरग्निः साचीगुणे चितः ॥
सहस्रं [2]बद्धशो यस्मिन् ब्राह्मणा गा विभेजिरे ॥२६॥

तया त्रिंशच्छतं ह्यश्वान् बद्धा विस्मापयन् नृपान्।
दौष्यन्तिरत्यगान्मायां देवानां [3]गुरुमाययौ ॥२७॥

मृगाञ्छुक्लदतः कृष्णान् हिरण्येन [4]समावृतान्।
अदात्कर्मणि [5]मष्कारे नियुतानि चतुर्दश ॥२८॥

भरतस्य महत्कर्म न पूर्वे नापरे नृपाः ।
[6]नैवापुर्नैव प्राप्स्यन्ति बाहुभ्यां त्रिदिवं यथा ॥२९॥

किरातहूणान्यवना[7]नन्ध्रान् [8]वङ्गान् शकान् [9]खषान्।
अब्रह्मण्यान् नृपांश्चाहन् म्लेच्छान् दिग्विज[10]ये बलात् ॥३०॥

जित्वा पुरा[11-]ऽसुरा देवान् ये रसौ[-11]कांसि भेजिरे ।
देवास्त्रियो रसां नीताः [12]प्राणिभिः पुनराहरत् ॥३१॥

[13]सर्वान् कामान् दुदुहतुः प्रजानां तस्य रोदसी ।
समास्त्रिणवसाहस्रीर्दिक्षु चक्रमवर्तयत् ॥३२॥

**श्रीध० पञ्चेति** । गङ्गायां [14]अनुलोमं पञ्च पञ्चाशता वाजिभिरीजे। पुरोधाय पुरोहितं कृत्वा। यमुनायामनु च यमुनाया श्चनुलोमम् ॥२५॥

**अष्टेति**। अष्टाधिकसप्ततिमेध्यान् अश्वान् बबन्ध किं कुर्वन्। वसु धनं प्रकर्षेण ददत् साचीगुणे प्रकृष्टे गुणवति देशेऽग्निश्चितोऽभूत्। यस्मिन्नग्निचयने देशे वा सहस्रं ब्राह्मणा भरतेन भूरिदानेन दत्ता गा [15]बद्धशः प्रत्येक [16-]बद्धं [-16]बद्धं विभेजिरे विभज्य

1 MMa °दे 2 H M MMa V द्वन्द्वश , TW बद्धश 3 MMa पुरु मायया , TW गुरुमायिनाम् 4 ABGJ परीवृतान् , MMa परिष्कृतान् 5 ABGJMMa मष्णारे 6 M Ma नोदायु° 7 H V °ना° 8 ABGJMMa कङ्कान् 9 ABGJ °शा° 10 ABGJMMa ०येऽखिलान् 11--11 MMa °रान् देवा येन स्वौ° 12 MMa पणिभि 13 ABGJMMa सर्वका° 14 A B J omit अनु 15 H V द्वन्द्वश 16--16 H V द्वन्द द्वन्द्व

जगृहुः। चतुरशीत्यधिकैस्त्रयोदशसहस्रैरेकं बद्वं[1] भवति। तथाहि- "हिरण्येन परिवृतान्कृष्णान् शुक्लदतो मष्णारे[2] भरतोऽददाच्छतं बद्वानि[3] सप्त च इति श्रुत्युक्तानि सप्ताधिकशतं बद्वानि[4] श्रीशुकेनोत्तरश्लोके चतुर्दशलक्षत्वेन[5] सङ्गृहीतानि " अदात्कर्मणि मष्मणार[6] नियुतानि चतुर्दश" इति। एवं चतुर्दशलक्षाणां सप्ताधिकशतभागो बद्वमित्युक्तम्[7]। इयञ्च[8] बद्वसंख्या[9] श्लोकेन सङ्गृह्यते - "चतुर्दशानां लक्षाणां सप्ताधिकशतांशका[10]बद्वं[11] चतुरशीत्यग्रसहस्राणि त्रयोदश" इति[12] ॥२६॥

त्रयस्त्रिंशदिति। देवानामपि मायां वैभवमत्यगादत्यशेत। यतो गुरुं पूज्यं हरिमाययौ प्राप्तः तदंशभवत्वात्[13]। मायवत्तर इति पाठे ह्रस्व· श्रुत्यनुसारेण। मायावतां श्रेष्ठ· हरिरेवाऽसावित्यर्थः ॥२७॥

मृगानिति। मृगान् [14-]मृगजातान्[-14] श्रेष्ठगजान्। मन्द्रमृगादयो गजजातिभेदाः। मष्णारे[15] इत्यस्य श्रुतिपदस्य व्याख्यानं कर्मणीति कस्मिंश्चित्कर्मविशेषे केचित्तु मष्णारे[16] तीर्थ इति व्याचक्षते ॥२७-३०॥

जित्वेति। पुरा देवान् जित्वा येऽसुरा रसौकांसि रसातलादिस्थानानि भेजिरे तैः प्राणिभिर्बलिभिर्देवस्त्रियो रसातलं नीतास्सतीः पुनराहरदानिन्ये[17]। प्राणिभिरन्यैर्मनुष्यादिभिस्सह नीता इति वा। पणिभिरिति पाठे पणायोऽसुरास्तैर्नीता स्सतीः। यद्वा पणयो दूतास्तैर्दूतान् प्रस्थाप्याऽहरदिप्यर्थः ॥३१॥

सर्वानिति। त्रिणवसाहस्रीः समाः सप्तविंशति सहस्रं[18] वत्सरान्[19]। चक्रं[20] सेना आसा वा ॥३२॥

वीर० गङ्गाया मनु गङ्गातीरे, गङ्गाया अनुलोमं वा। गङ्गासागरसङ्गमा दारभ्य यावत्तदुत्पत्ति तावदित्यर्थः। पञ्चपञ्चपञ्चाशता पञ्चाशदधिकशतद्वयसंख्याकैः वाजिभिरश्वै र्भगवन्तमीजे, उक्तसंख्याकैरश्वमेधैस्तत्र भगवन्तमाराधितवानित्यर्थः[21]। तथा दीर्घतमसं ऋषिं पुरोधाय पुरोहितं कृत्वा प्रभुर्भरतः यमुनायामनु, पूर्ववदर्थः ॥२५॥

अष्टसप्तति अष्टाधिकसप्तति संख्याकान् मेध्यान्निर्दुष्टानश्वान् बबन्ध तावतामश्वानां बन्धनपूर्वकैर्मेधैरीजे इत्यर्थः। कथम्भूत·? वसु धनं प्रददत् प्रयच्छन्। दौष्यन्तेर्दुष्यन्तसुतस्य भरतस्याऽग्निः साचिगुणे प्रकृष्टगुणवति देशे चितः यस्मिन्नाग्नि चयने तद्देशे वा सहस्रं ब्राह्मणा· भरतेन भूरिदानेन दत्ता[22] गाः बद्धशः प्रत्येकं बद्धा। विभेजिरे विभज्य जगृहुः। सहस्रशब्दः बहूना मुपलक्षकः ॥२६॥

तथा मष्कारे तीर्थविशेषेकर्मणि यक्षकर्मणि मष्काराख्यो कर्मणि वा त्रयस्त्रिंशच्छतसंख्याकान् अश्वान् बद्वा नृपान्

---

1 HV द्वन्द्वश 2 HV मष्कारे 3 HV द्वन्द्वानि 4 HV द्वन्द्वानि 5 HV °क्ष तेन 6 HV मष्कारे 7 HV द्वन्द्वमि° 8 HV add भवति 9 HV द्वन्द्व° 10 HV द्वन्द्व 11 HV °र्दं° 12 HV श्रीधरीयो एलोक । अत्र उदाहृत श्रुतिप्रतिपादित सख्याया शुकोक्ते द्वादशाभि क्य वर्तत इति मन्तख्यम् 13 HV add स 14--14 ABJ Omit 15 AB मत्कारे 16 HV मष्कारे 17 HV omit आनिन्ये 18 HV स्र सव° 19 HV °ना 20 HV °ज्ञा 21 A.B तदा 22 TW add बद्वा

पार्थिवान् विस्मापयन् पुरु बह्व्यः माया एषां सन्तीति तथा तेषां देवानां मायामश्व[1] वारणादिरूपां दौष्यन्तिर्भरतोऽत्यगात् देवैर्नृपैश्च चिकीर्षितं यज्ञविघ्नमपाकृत्यायजतेत्यथः ॥२७॥

**शुक्लदतः** शुक्लदन्तान् हिरण्येन परिवृतान् परिवृतान् चतुर्दशा[2]नियुतसंख्याकान् मृगान् भद्रमृगादिसंज्ञि[3]कान् गजानदात् प्रायच्छत् ॥२८॥

किञ्च। **भरतस्य** महदद्भुतं कर्म पूर्वे अपरेऽर्वाचीनाश्च नृपाः नैवाऽऽ पुर्नैव कृतवन्तः, नाऽपि[4] प्राप्स्यन्ते नाऽपि करिष्यन्ति यथा जना· बाहुभ्यां गमनसाधनाभ्यां त्रिविष्टपं नैव प्रापुः नाऽपि प्राप्नुवन्ति प्राप्स्यन्ति च तद्वत् ॥२९॥

महत्कर्मैव दर्शयति - **किरातहूणा** निति। अब्रह्मण्यान् ब्राह्मणेष्वसाधून् किरातादीन् हीनजातीन् नृपांश्च म्लेच्छां श्चसर्वान् दिग्विजयेऽहन् हतवान् ॥३०॥

किञ्च। ये असुरा राक्षसाःपुरा पूर्वकाले देवान् **जित्वा** रसौकांसि रसातलस्थानानि भेजिरे प्राप्ताः तैः प्राणिभिः बलिभिः या देवस्त्रियो रसां रसातलं प्रतिनीता· प्रापिताः,ता· पुनराहरत् आनयत्। प्राणिभिरन्यैर्मनुष्यादिभस्सह नीता इति वा। पणिभिरिति पाठे पणयोऽसुराः तैर्नीता·। यद्वा पणयो दूता. दूतान् प्रस्थाप्याहरदित्यर्थः ॥३१॥

किञ्च। भरते राजनि सति रोदसी द्यावापृथिव्यौ तस्य प्रजानां तद्विषयस्थानां सर्वान्कामान् दुदुहतुः पूरयामासतुः। एवं त्रिणवसाहस्त्रीस्समा· सप्तविंशतिसहस्रसंवत्सरान् दिक्षु चक्रम् आज्ञामवर्तयत् ॥३२॥

**विज०** को महाभिषेको नाम यज्ञः? इत्यतस्तत्स्वरूपमाह - **पञ्चेति**। गङ्गायामनु समीपतरे पञ्चपञ्चाशतैः पञ्चभिः पञ्चाशता च दीर्घतमसं पुरोधाय पुरोहितं कृत्वा प्रभुरुत्तमकल्पेन यष्टुं समर्थः पुनर्यमुनायां अनुतीरे **अष्टसप्तति** मेध्याश्वान् बबन्ध तदा दक्षिणां वसु रत्नराशिमेव प्रददौ। **भरतस्य** इदञ्च सामर्थ्यमाह -**भरत** स्येति। कैकेयीपुत्रव्यावृत्त्यर्थं **दौष्यन्ते** रिति। भरतस्य यज्ञे अग्निरग्रभाग[5] नेतृत्वादग्निनामा, साचीगुणे चितः सचिवगुणे कृतः, साचिव्यं कृतवानित्यर्थः ॥२५॥

यस्मिन् यज्ञे ब्राह्मणा द्वन्द्वश· सहस्रं द्विसाहस्रं गा विभेजिरे विभज्य स्वीकृतवन्तः। दौष्यन्तिः नृपस्तस्मिन्यज्ञे त्रयस्त्रिंशच्छत मश्वान् बध्द्वा नृपान्विस्मापयन् विस्मितान्कुर्वन् उरुमायया महता महिम्ना देवानां मायां निज[6]भोगेच्छामत्यगात्, काङ्क्षितादप्याधिकं दत्तवानित्यर्थ·। यज्ञे विघ्नकरीमतिक्रान्तवानिति वा ॥२६,२७॥

शुक्लदत· शुक्लदन्तान् कृष्णान्, मृगान् कृष्णमृगान् गजान् वा "भद्रो मंदो मृगश्चेति" (हला को 2-60) हलः। मष्णारे व्रतविशेषसमाप्तिलक्षणे कर्मणि क्रियमाण इति शेषः। तीर्थविशेषे वा ॥२८॥

---

1 AB 'ह' 2 TW 'शायुत 3 AB 'ज्ञ' 4 TW omit नापि 5 AB 'भागे 6 M 'जभा'

पूर्वे नृपा न उदायुः प्रापुः अपरे पश्चात्तना न प्राप्स्यन्ति इदानीन्तना नाऽप्नुवन्तीति किमु वक्तव्यम्। तत्र दृष्टान्तमाह - बाहुभ्यामिति। अग्निष्टोमादिसाधनमन्तरेण केवलं बाहुभ्यां स्वर्गं यथा न[1] गच्छति[-1] तथा। आकाशं "त्रिदिवे व्योम्नि दिव्यपि" (वैजःकोः 7-1-29 इति यादवः) ॥२९॥

स किरातादीन् म्लेच्छानब्रह्मण्यान् ब्राह्मणविरोधिनो नृपानहन् ॥३०॥

असुरांश्च जित्वा येन भरतेन देवाः स्वौकांसि स्वस्थानानि भेजिरे सः नाम्ना पणिभिरसुरैः रसातलं नीता देवस्त्रियः पुनराहरत् - आनीतवान् ॥३१॥

त्रिणवसाहस्त्रीः समाः सप्तविंशत्सहस्रपरिमितान् वर्षान् चक्रमाज्ञां "चक्रं सैन्यं जलावर्तः" इत्यादि। "चक्रमाज्ञा रथाङ्गयोः" (वैजः कोः 6-3-7 इति) ॥३२॥

स सम्राट् लोकपाला[2]नामैश्वर्यमधिराट् श्रियम्।
[3]चक्रं जायास्सुतान्[-3] प्राणान् मृषेत्युपरराम ह ॥३३॥

तस्याऽऽसन्नृप वैदर्भ्यः पत्न्यस्तिस्रस्सुसम्मताः ।
जघ्नुस्त्यागभयात्पुत्रान् नाऽनुरूपा इतीरिते ॥३४॥

तस्यैवं वितथे वंशे तदर्थं यजतस्सुतम्।
मरुत्स्तोमेन मरुतो भरद्वाजमुपाद्दुः ॥३५॥

अन्तर्वत्न्यां[4] भ्रातृपत्न्यां[5] मैथुनाय बृहस्पतिः।
प्रवृत्तो वारितो गर्भं शप्त्वा वीर्य[6]मपासृजत् ॥३६॥

तं त्यक्तुकामां ममतां भर्तुः[7] त्यागविशङ्किताम्।
नामनिर्वचनं तस्य श्लोक[8]मेतं सुरा जगुः ॥३७॥

मूढे भरद्वाजमिमं भरद्वाजं बृहस्पते[9]।
यातौ यदुक्त्वा पितरौ भरद्वाजस्ततस्त्वयम् ॥३८॥

चोद्यमाना सुरैरेवं मत्वा[10] वितथमात्मजम्।
व्यसृजन् मरुतोऽबिभ्रन् दत्तोऽयं वितथेऽन्वये ॥३९॥

1--1 AB omit 2 ABGJ 'लाख्य 3--3 ABGJ चक्रश्चाऽस्खलित, MMa चक्र वाऽस्कलित 4 MMa 'न्त्या 5 MMa 'न्त्या' 6 ABGJMMa 'मवा' 7 ABGJ भर्तुस्त्या' 8 ABGJ 'कमेन 9 MMa 'स्पते 10 MMa त देवमा'

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
नवमस्कन्धे विंशोऽध्यायः ॥२०॥

**श्रीध०** तस्य वैराग्येण मोक्षप्रकारमाह - **स इति**। मृषेति, विचार्येति शेषः ॥३३॥

**तस्येति**। नाऽनुरूपा मत्सदृशा न भवन्तीति भर्त्रा ईरिते सति व्यभिचारशङ्कया अस्त्रांस्त्यक्षतीति भयात्पुत्रान् जघ्नुः। पुनः[1] पुनः पुत्राणां दर्शने वै सादृश्यानुसन्धानेन त्यजेत्, नाऽन्यथेत्याशयेन हतवत्यः ॥३४॥

**तस्येति**। वितथे व्यर्थे सति तदर्थं पुत्रार्थं मरुत्स्तोमेन यागेन यजतस्तस्य प्रसन्नास्सन्तो मरुतो भरद्वाजं नाम पुत्रमुपा ददुः समर्पयामासुः ॥३५॥

मरुतां भरद्वाजागमप्रकारं प्रदर्शयन्नाह[2] - **अन्तर्वत्यामिति** चतुर्भिः। अन्तर्वत्न्यां गर्भिण्यां भ्रातुरुतथ्यस्य[3] पत्न्यां ममतायां चौर्येण मैथुनाय कदाचित्प्रवृत्तो बृहस्पतिः, तदा द्वितीयगर्भस्यावकाशाभावात् आक्रोशपूर्वके गर्भस्थेन वारितः ततः क्रुद्धो बृहस्पति अन्धो भव इति तं गर्भं शप्त्वा बलाद्वीर्यं न्यषिञ्चत्। ततो बृहस्पतेश्शापात् गर्भस्थो दीर्घतमा अन्धो बभूव। तेन च तद्वीर्यं पार्ष्णिप्रहारेण योनेर्बहिर्निस्सारितं भूमौ पतितं सद्य एव कुमारोऽभवत् ॥३६॥

**तमिति**। तञ्च परवीर्यजं भर्तुस्त्यागाद्विशङ्कितां सतीं त्यक्तुकामां ममतां प्रति सुरा एतं[4] बृहस्पतेर्ममतायाश्च विषादरूपं श्लोकं जगुः। किमर्थं जगुः अत आह। तस्य नाम निरुच्यते येन तम्[5]। तन्नामनिर्वचनेनैव भर्तुस्त्यागशङ्कामपाकर्तु[6]-मित्यर्थः ॥३७॥

**मूढे इति**। तत्र पुत्रं त्यक्त्वा यान्तीं ममतां बृहस्पतिराह - हे मूढे! इमं पुत्रं भर पुषाण। भर्तुर्बिभेमीति चेत् तत्राऽऽह-द्वाजम् एकस्य क्षेत्रेऽन्यस्य बीजादित्येवं द्वाभ्यां जात, अतस्तस्याऽप्ययं पुत्र इति न तस्माद्भयशङ्का इत्यर्थः। एवमुक्ता सती तं प्रत्याह - हे बृहस्पते! त्वमिमं भर, यतो द्वाजं द्वाभ्यामावाभ्यां अन्यायतो[7] जातम्। अतो नाहमेकाकिनी भरामित्यर्थः। यत् यस्मा देवमुक्त्वा पितरौ ममताबृहस्पती विवदमानौ पुत्रं परित्यज्य यातौ, ततो हेतोरयं भरद्वाज इति। पाठान्तरे यस्य पुत्रस्य[8] त्यागात्[9] दुःखात्[10] पितरौ यातावित्यर्थः ॥३८॥

---

1 A.B J omit पुन 2 H V omit प्र 3 H V 'च' 4 A b J 'न 5 A B J 'त् 6 H V भर्तृत्या' 7 H V अन्वाच्यत· 8 ABJ omit पुत्रस्य 9 ABJ 'गदु' 10 H V omit पितरौ

**चोद्यमानेति**। वितथं व्यभिचारसम्भवा त्तमात्मज वितथं निरर्थकं मत्वा ममता व्यसृजत् तत्याज । पाठान्तरे आदिजं[2] प्रथमजं भर्तृबीजाज्जातमेव मुख्यमात्मजं मत्वा बृहस्पतेर्जातं तत्याजेत्यर्थः। एवं तथा त्यक्तं मरुतोऽबिभ्रन् अभिभरुः। तदेवं मरुद्भिः प्राप्तोऽयं भरतस्यान्वये वितथे सति दत्तः ॥३९॥

इति श्रीमद्भागवते महापुराणे
श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्यख्यायां नवमस्कन्धे विंशोऽध्याय ॥२०॥

**वीर०** एवं वर्तयन् स सम्राट् सार्वभौमो भरतः लोकपालानामैश्वर्यमतुलां स्वां श्रियं अव्याहतमाज्ञाचक्रं प्राणांश्च मृषेति अनित्या इति निश्चित्य उपरराम विरक्तोऽभवत् ॥३३॥

हेनृप! तस्य भरतस्य सुसम्मतास्तिस्रः पत्न्यः विदर्भस्य सुता· आसन्। ताश्चेकैकं जातान् पुत्रान् मम नानुरूपा· सदृशा इमे पुत्रा न भवन्तीति भर्त्राऽभिहिते सति व्यभिचारशङ्कयाऽस्मान् त्यक्ष्यतीति भयार्ता जघ्नु ॥३४॥

एवं तस्य भरतस्य वंशे वितथे व्यर्थे सति तदर्थं पुत्रार्थं मरुत्सोमाख्येन यागेन जयत आराधयतः तस्य प्रसन्ना मरुतः भरद्वाजाख्यं सुतमुपाददुः समर्पयामासुः ॥३५॥

तस्य भरद्वाजनाम निर्वक्तुं कथा माह - अन्तर्वत्न्याया मिति। कदचित् बृहस्पति· भ्रातुरुतथ्यस्य भार्यामन्तर्वत्न्यां गर्भिण्यां ममताख्यायां मैथुनार्तं प्रवृत्तः, तदा द्वितीयगर्भाव[3] वकाशाभावात् आक्रोशपूर्वकं गर्भस्थेन वारितः, तत.क्रुद्धो बृहस्पतिः, दीर्घं तमः प्रवेक्ष्यसि, अन्धश्च भविष्यतीति तं गर्भं शप्त्वा बलाद्वीर्यं न्यषिञ्चत् ॥३६॥

अतो बृहस्पतेः शापात् गर्भस्थो दीर्घतमा बभूव - तेन च तद्वीर्यं पार्ष्णिप्रहारेण योनेर्बहिर्निस्सारितं, भूमौ पतितं सद्य एव कुमारोऽ भवत्। तञ्च परवीर्यजं भर्तुस्त्यागाद्विशङ्कितां सतीं त्यक्तुकामां ममतां प्रति सुरा बृहस्पतेश्च ममातायाश्च विवादरूपं श्लोकमेतं 'मूढे' इति वक्ष्यमाणं श्लोकं जगुः। किमर्थं जगुः? इत्यत आह - नामनिर्वचनं तस्येति। नाम निरुच्यते येन प्रवृत्तिनिमित्तेन तन्नामनिर्वचनं, तत्प्रतिपादकं श्लोकं जगुरित्यन्वयः। यद्वा - नाम निरुच्यते येन श्लोकेन तं जगुरित्यन्वय.। तस्य नामनिर्वचनेनैव भर्तृत्यागशङ्कामपाकर्तुं जगुरित्यर्थः ॥३७॥

श्लोकमाह - **मूढे** इति। तत्र पुत्रं त्यक्त्वा यान्तीं ममतां बृहस्पतिराह - हे मूढे! इमं पुत्रं भर पुषाण। भर्तुर्बिभेमीति चेत् तत्राऽऽह - द्वाजम् एकस्य क्षेत्रे अन्यस्य वीर्यादित्येवं द्वाभ्यां जातमतस्तस्याप्ययं पुत्र इति न तस्माद्भयशङ्केत्यर्थः। एवमुक्ता सती तं प्रत्याह हे बृहस्पते! त्वमेवेमं द्वाजं द्वाभ्यामावाभ्यांमन्यायेन जातं भर, नाहमेनं भरामीत्यर्थ । यत् यस्मात् एवमुकत्वा पितरौ

1 HV 'वत्वात्त' 2-2 A.B.J omit 3 AB 'र्भाव

ममताबृहस्पती विवदमानौ पुत्रं परित्यज्य यातौ। ततो हेतोरयं भरद्वाजसञ्ज्ञिक[1] इति ॥३८॥

एवं सुरैश्चोद्यमाना श्लोकगानपूर्वकं परिशङ्कयमाना ममता तमात्मजं वितथं व्यभिचारजत्वान्निरर्थकं मत्वा व्यसृजत्। 'मत्वाऽऽ दितरमात्मजम्' इति पाठान्तरम्। तदा आदितरं प्रथमजं भर्तु वीर्याज्जातमेव मुख्यमात्मजं मत्वा बृहस्पतेर्जातं तत्याजेत्यर्थ । एवं तया त्यक्तं मरुतोऽबिभ्रन् अबिभरुः। तदेवं मरुद्भिः प्राप्तोऽयं भरतस्याऽन्वये वितथे सति दत्तः। एवञ्च वितथाऽख्योऽपि बभूवेति भाव ॥३९॥

इति श्रीमद्भागवते नवमस्कन्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां विंशोऽध्याय ॥२०॥

**विज०** भरतस्य वैराग्यप्रकारमाह - **स** इति। चक्रं राष्ट्रं प्राणान् इन्द्रियाणि लोकपालानामैश्वर्यं स्वराज्यादिकञ्च मृषा नाशशिरस्कमिति मत्वा उपरराम उपरतव्यापरोऽभूत् "आब्रह्मस्तम्बपर्यन्त मसारञ्चाऽप्यनित्यकम्" इत्यादिवाक्य प्रसिद्धिं[2] सूचयति। हेत्यनेन ग्रन्थान्तरेतिहास वा ॥३३॥

इदानीं तस्य सन्तानप्रकारं कथयति - **तस्येति**। वैदर्भ्यः विदर्भराजपुत्र्यः ते पुत्रा· अनुरूपा अनुकूला न भवन्तीति, राज्ञा ईरिते कथिते ता पत्न्य· त्यागभयात्पुत्रांस्तान् जघ्नुरित्यन्वय ॥३४॥

नन्वेवञ्चेद्भरतस्य पुत्राभावेन परलोकक्षेमाभाव प्रसक्त इति तत्राऽऽह - तस्येति। तस्य वंशे एवं वितथे उत्सन्ने सति अनुरूपवंशवर्धनेन पुत्रेण भाव्यमिति तदर्थं पुत्रार्थं नाम्ना मरुत्स्तोमेन मरुद्विषययज्ञेन यजतस्तस्य भरतस्य मरुतो नाम देवाः गुणनिमित्तेन नाम्ना भरद्वाजं सुतमुपाददु·पुत्रत्वेन दत्तवन्तः ॥३५॥

कस्मादस्य भरद्वाजाख्यं येन तन्नामयुक्त· स्यात्, अतस्तज्ज्ञापनाय तदुत्पत्तिप्रकारमाह - अन्तर्वत्न्येति। बृहस्पते भ्रातुरुपथ्यस्य पत्न्या अन्तर्वत्न्या उतथ्याहितशुक्रं दधानया नाम्ना ममतया अन्तर्गर्भिणीति वारितोऽपि मैथुनाय प्रवृत्तो बृहस्पतिः अन्धो भवेदिति गर्भं शप्त्वा धिक्कृत्य स्ववीर्यं तस्यां ममतायामसृजत् अधादित्यन्वयः ॥३६॥

तत· किमभूदिति तत्राऽऽह - **तामिति**। तं बृहस्पतिगर्भं त्यक्तुकामां किमर्थम्? उचथ्याख्यभर्तुत्यागशङ्कितां ममतां प्रति तस्य सुतस्य नाम्नो निर्वचनं, येन ज्ञायते स तथा तं श्लोकं सुरा जगुरित्यन्वय· ॥३७॥

भो मूढे' इमं द्वाजं भर। 'भृ भरणे' इति धातुः। न त्यज उचथ्यस्य क्षेत्रजं बृहस्पतेर्जातमिति द्वयोः उचथ्यक्षेत्रबृहस्पत्यो

---

1 ABT 'ज्ञ' 2 AB 'द्ध

र्जातत्वात् द्वाजमिति भरद्वाजनामानम् । क्रियापदस्य सुबन्तपदसायुज्येन नामत्वं, स्कन्दधर इत्यादौ द्रष्टव्यम्। धरस्कन्धेत्यर्थोपपत्तेः "पुरीमवस्कन्द लुनीहि नन्दनं मुषाण रत्नानि हराऽमराङ्गना " इति शिशुपालवधे दर्शनात् 'स्कन्दगतिशोषणयो' इति धातोः तदुक्तम्। द्वाजमिमं भर उचथ्यस्य क्षेत्रजो बृहस्पतेः जात इति द्वयोर्जातत्वात् द्वाज इति यश्च बृहस्पतेर्वाजं प्रजार्थं सन्तर्ति भरत् भरणशीलश्च इति वा बृहस्पतेर्निमित्तात् भरद्वाजं प्रजासन्तर्ति भरन्, भरंश्चाऽसौ बृहस्पतेर्वाज श्चेति विग्रहः । भरते श्शविकरणत्वात् अभ्यासाभावः। पितरौ दुःखात् भरत् भार्ता त्राता बृहस्पते र्वाजतो वाज , वा शब्दस्य पूर्वनिपातो ज्ञातव्य यथा बृहस्पतेर्जात तथा उचथ्यादपीत्यर्तः। ततः पितृभर्तृत्वात् बृहस्पते र्वाजत्वात् अयं भरद्वाज इति। तदुक्तम् बृहस्पतेर्वाजः प्रजा सन्ततिः येन भृता स बृहस्पतेर्भरद्वाजः इति ॥३८॥

सा ममता सुरैरेवं चोद्यमाना भरेति प्रेर्यमाणाऽपि तमात्मजं देवं बृहस्पतिं पुत्रात्मना जातं मत्वा भर्तुत्यागशङ्कया तमात्मजं व्यसृजत्। ततो देवा द्वाजं किमकुर्वन्निति तत्राऽऽह - मरुत इति। मरुतो देवा तं द्वाजं गर्भमबिभ्रन् भृतवन्त इति भरद्वाजः। तदुक्तम् - "भरद्वाजो मरुद्भिश्च भृतो जातो द्वयोर्यत " इति पाद्मे ममताया वाजं गतं सृतं गर्भं मरुतोऽभरन्नित्यतो वा भरद्वाज इत्येषोर्थोऽप्यवबोद्धव्यः। भृत्वा किं कृतं तैः? इति तत्राऽऽह - दत्तः इति। भरतस्याऽन्वये वितथे सति मरुद्भिरयं भरताय दत्तः, पुत्रत्वेनेति शेषः। अस्य भरतपुत्रत्वानन्तरं वितथेति नामान्तरमपि ज्ञातव्यम्। "वितथस्य सुतो मन्यु " भाग 9-21-1 इत्युत्तरवचनाच्चेति ॥३९॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां सहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
नवमस्कन्धे विंशोऽध्याय ॥२०॥

# एकविंशोऽध्यायः

श्रीशुक उवाच

वितथस्य सुतान्मन्योः[1] बृहत्क्षत्रो[2] जयस्ततः ।
महावीर्यो नरो गर्गस्सङ्कृतिस्तु नरात्मजः ॥१॥

गुरुश्च रन्तिदेवश्च सङ्कृतेः पाण्डुनन्दन!
रन्तिदेवस्य हि यश इहाऽमुत्र च गीयते ॥२॥

[3]वियद्वित्तस्य ददतो लब्धं लब्धं बुभुक्षतः ।
निष्किञ्चनस्य धीरस्य सकुटुम्बस्य सीदतः ॥३॥

व्यतीयुरष्टचत्वारिंशदहान्यपिबतः किल ।
घृतपायससंयावं तोयं प्रातरुपस्थितम् ॥४॥

कृच्छ्रप्राप्तकुटुम्बस्य क्षुत्तृड्भ्यां जातवेपथोः ।
अतिथिर्ब्राह्मणः काले भोक्तुकामस्य चाऽऽगमत् ॥५॥

तस्मै संव्यभजत् सोऽन्नमादृत्य[4] श्रद्धयाऽन्वितः ।
हरिं सर्वत्र संपश्यन् स भुक्त्वा प्रययौ द्विजः ॥६॥

अथाऽन्यो[5] भोक्तुकामस्य विभक्तस्य महीपतेः[6] ।
विभक्तं व्यभजत्तस्मै वृषलाय हरिं स्मरन् ॥७॥

याते शूद्रे तमन्योऽगादतिथिः[7] श्वभिरावृतः ।
राजन्मे दीयतामन्नं सगणाय बुभुक्षते ॥८॥

**श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका**

एकविंशे तु दौष्यन्ते सुतस्याऽन्वय उच्यते । रन्तिदेवाजमीढादेर्यत्र कीर्तिः प्रतन्यते ॥

यद्वा - एकविंशे भरद्वाजपुत्रमन्युसुतान्वय । वर्ण्यते रन्तिदेवाऽजमीढाद्या यत्र वंशिनः ॥

---

1 ABGJ सुतो मन्यु 2 MMa °त्क्षे° 3 MMa वीतवि° 4 TW °मादृत , MMa माहृत्य 5 AbGJMMa भोक्ष्यमाणस्य 6 ABGJ पते।
7 MMa तमभ्यगा°

**भरतस्यान्वये** वितथे सति तद्दत्तत्वाद्वितथसंज्ञो[1] भरद्वाजः। स च ब्राह्मणोऽपि भरतस्य दत्त.[2] पुत्रो जात इति तद्वंशोऽनुक्रम्यते **वितथस्येति**। वितथस्य सुतो मन्युः तस्मात् बृहत्क्षत्रजयमहावीर्यनरगर्गा· पञ्च पुत्रा बभूवुः ॥१,२॥

**वियदिति**। वियद्वित्तस्य वियतो गगनादिवोद्यमं विना दैवादुपस्थितमेव वित्तं भोग्यं यस्य। यद्वा, वियत् व्ययं प्राप्नुवत् वित्तं भोग्यं[3] यस्य, तदेवाह-बुभुक्षतोऽपि सतो लब्धं लब्धं ददत·। तत्प्रपञ्चयति - निष्किञ्चनस्येत्यादि सार्धै पञ्चदशभिः ॥३॥

**व्यतीयुरिति**। अपिबतो जलपानमप्यकुर्वतः घृतादित्रयाणां द्वन्द्वैक्यं, तोयञ्च ॥४-६॥

**अथेति**। अथाऽन्यो[4] वृषलातिथिरागमत्। विभक्तस्य कुटुम्बार्थमन्नादिकं विभक्तवतः ॥७॥

**याते** इति। सगणाय श्वयूथसहिताय ॥८॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

भरतस्य यो दत्तपुत्रस्य वितथस्य यस्सुतो मन्यु· तस्मात् मन्यो· बृहत्क्षत्रादय गर्गान्ता पञ्च जज्ञिरे, ततो जय, बृहत्क्षत्रानुजो जय इत्यर्थ·। भारद्वाजस्य ब्राह्मणत्वेऽपि भरतस्यान्वये वितथे सति दत्तत्वाद्वितथसंज्ञस्सन् भरतस्य दत्तपुत्रो भूत्वा तद्वंशङ्क रो जात इत्यभिप्रायेण मन्युप्रभृतीनां भारतत्वमत्रोच्यते। तत्र नरस्याऽऽत्मज सङ्कृति ॥१॥

हे पाण्डुनन्दन! सङ्कृतेस्तु गर्गो रन्तिदेवश्चेति द्वौ सुतौ। रन्तिदेवस्य कीर्तिस्तु इहऽऽमुत्र च लोके गीयते ॥२॥

कीदृशं तद्यशः - इत्यपेक्षायां सङ्ग्रहेण तद्वृतान्त माह-**वियद्वित्तस्येति**। वियतो गगनादिव उद्यमं विनैव दैवादुपस्थितमेव वित्तं भोग्यं यस्य। यद्वा, वियत् व्ययं प्राप्नुवत् वित्तं यस्य। तदेवाऽऽह - बुभुक्षत·, सम्प्रदानस्य शेषत्वाविवक्षया षष्ठी, भोक्तुमिच्छवे, लब्धं लब्धं यत् दैवाल्लब्धं तद्ददत प्रयच्छत अत एव निष्किञ्चनस्य सायन्तनश्वस्तनादिपरिग्रहरहितस्य सकुटुम्बस्य सीदत कृशस्यापि धीरस्य जितेन्द्रियस्य कदाचित् अपिबत· जलपानमप्यकुर्वत अष्टचत्वारिंशदहानि व्यतीयु· अतिक्रान्तानि बभूवु·। कृच्छ्रं क्लेशं प्राप्तः कुटुम्बो यस्य, क्षुत्तृड्भ्यां जातः वेपथुर्व्यथा यस्य तस्य। दैवात् प्रातरुपस्थितं, घृतादीनां द्वन्द्वैक्यं, घृतादित्रयं तोयञ्च भोक्तुकामस्य सतः काले भोजनकाले कश्चिद्ब्राह्मणोऽतिथिरागमत् ॥३-५॥

स रन्तिदेव आदृत आदरयुक्त श्रद्धया चाऽन्वित सर्वत्र भूतेषु हरिं सम्पश्यन् सर्वं भूतजातं भगवदात्मकमनु - सन्दधत् अन्नं घृतपायससंयावं तस्मै अतिथये संव्यभजत् विभज्य ददौ। तदन्नं भुक्त्वा स द्विजो ययौ ॥६॥

---

1 A.B J omit तत् 2 H V दत्तपुत्रो 3 H V omit भोग्य 4 H V 'लोऽति'

अथ विभक्तस्य कुटुम्बार्थं तद्द्विजभुक्तावशिष्टमन्नादिकं विभक्तवतो **भोक्ष्यमाणस्य सतः, हे महीपते! अन्यः कश्चि** द्वृषलोऽतिथिरागमत्। अथाऽन्य इति पाठे दानायाऽनर्ह·, तस्मै वृषलाय अतिथये **विभक्तं कुटुम्बार्थं** विभक्तं पुनः **व्यभजत्** विभज्य ददौ ॥७॥

शूद्रे वृषले गते सति कश्चित् श्वभिरावृत· परिवृतोऽतिथिरागत· तं रन्तिदेव**माह - किमिति? हे राजन्! बुभुक्षते** क्षुधाऽर्दिताय [1]सगणाय श्वयूथसहिताय[1] मह्यमन्नं दीयतामिति। अभ्यागादिति पाठे एवं वदन्न**भ्यागच्छदित्यन्वयः** ॥८॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

पूरो· सप्तदशमो दौष्यन्ति·, तस्याऽन्वय कथ्यते **वितथस्येत्यादिना** ॥१॥

भरताद्दशमो रन्तिदेव । तस्य माहात्म्यं भगवन्महिमोपचितत्वात्कथयति - रन्तिदेवस्ये**त्यादिना। चशब्दो दौष्यन्तिमहिम्ना** समुच्चीयते ॥२॥

कीदृशं यश ? शत्रुविजयाल्लब्धमुतास्मादिति संशयं निवारयति - **वीतवित्तस्येति। वीतवित्तस्य वस्तुशून्यस्य** दरिद्रस्येत्यर्थ । धनाभावे दानं कथं घटते? इति तत्राऽऽह - लब्धमिति। स्वयं बुभुक्षाभावाद्ददाति, **न तु** कर्तव्यत्वेनेति तत्राऽऽह - बुभुक्षत इति। भोगेच्छुश्चेत् सस्व , अन्यथा तदसम्भवादिति तत्राह - निष्किञ्चनस्येति। तर्हि **भिक्षुवत् कृपण इत्यतो** वाऽऽह निष्किञ्चनस्येति। अकृपणस्य कथमवगतं तदिति तत्राऽऽह - धीरस्येति। असद्विषयचिन्ता नाऽस्तीत्यतो वाऽऽह - **धीरस्येति। धीया सह** रमते न तु स्त्रियेति धीर· तस्य एकाकिन का चिन्ता इति तत्राऽऽह - सकुटुम्बस्येति। अत एव सीदतः बिभ्यतःशी**र्णस्य वा** ॥३॥

शीर्णत्वे निमित्तमाह - अपिबत इति। घृतञ्च पायसञ्च गोधूमान्नञ्च घृतपायससंयावं प्रातरुपस्थितं **प्राप्तम्, एतद्धोत्कृत्तमस्य** काले भोजनसमये ॥४,५॥

आहृत्य आनीय सर्वत्र व्याप्तं ब्राह्मणाय विभक्तस्यान्नस्य शेषं भोक्ष्यमाणस्य भोक्तुकामस्य महीपतेरन्योऽतिथिराग**मत्।** पूर्वविभक्तमन्नं सगणाय गणसहिताय नमश्चक्रे, हरये इति शेष· ॥६-८॥

**स [2]आतिथ्याऽवशिष्टं यद्बहुमानपुरस्कृतम् ।**
**[3]तस्य दत्वा नमश्चक्रे श्वभ्यः श्वपतये विभुः ॥९॥**
**पानीयमात्रमुच्छेषं [4]तच्चैकम्परितर्पणम् ।**
**पास्यतः पुल्कसोऽभ्यागादपो देह्य[5]शुभाय मे ॥१०॥**

---

1--1 TW omit 2 A B G J आदृत्या° 3 A B G J M Ma तच्च 4 M Ma तत्रै° 5 A B G J M Ma °भस्य

[1] तस्यातिकरुणां [2] वाचं निशम्य विपुल[3]श्रमाम् ।
कृपया भृशसन्तप्त इदमाहाऽऽमृतं वचः ॥११॥

न कामयेऽहं गतिमीश्व[4]राणा मष्टर्द्धियुक्तामपुनर्भवं वा ।
आर्तिं प्रपद्येऽखिलदेहभाजामन्तःस्थितो येन भवन्त्यदुःखाः ॥१२॥

क्षुत्तृट्[5]श्रमो गात्रपरिभ्रमश्च दैन्यं क्लमश्शोकविषादमोहाः ।
सर्वे निवृत्ताः कृपणस्य जन्तोर्जिजीविषोर्जीवजलार्प[6]णेन ॥१३॥

[7] इति प्रभाष्य पानीयं म्रियमाणः पिपासया ।
पुल्कसायाऽ ददाद्धीरो निसर्गकरुणो नृपः ॥१४॥

तस्य त्रिभुवनाधीशाः फलदाः फलमिच्छताम् ।
आत्मानं दर्शयाञ्चक्रुर्मा[8]यां विष्णुविनिर्मि[9]ताम् ॥१५॥

स वै तेभ्यो नमस्कृत्य निस्संङ्गो विगतस्पृहः ।
वासुदेवे भगवति भक्त्या चक्रे मनः परम् ॥१६॥

**श्रीध० पानीयमात्रमिति।** उच्छेषमुर्वरितम् । एकमेव तर्पतीति तथा ॥९-११ ॥

परदु खासहिष्णुतया सर्वेषां दु खं स्वयं भोक्तुमाशास्ते **नेति।** [10] अष्टार्द्धियुक्तां [10] अणिमाद्यष्टैश्वर्य[11]समृद्धियुक्तां गतिमपि मोक्षमपि चाऽहं न कामये। तर्हि किं कामयसे तदाह - अखिलदेहभाजामार्तिं दु खं तत्तद्भोक्तृरूपेणान्त·स्थितस्सन्नहं प्रपद्ये प्राप्नुयामित्येवं कामये, येन तद्दु·खभोक्त्रा मया हेतुभूतेन [12] ते सर्वेऽदु·खा भवन्ति ॥१२॥

ननु दु·खं किमिति प्रार्थयसे परदु खनिवृत्त्यैव मम सर्वदु·खनिवृत्तिरित्याह - **क्षुत्तृडिति।** कृपणस्य जन्तोर्जीवनहेतोर्जलस्यार्पणान्मे सर्वे क्षुत्तृडादयो निवृत्ता ॥१३॥

**इतीति।** इत्येवं प्रभाष्य ॥१४॥

---

1 ABGJ तस्य ता क , W तस्यापि क° 2 W °णा वाच 3 HV °श्रवा , W °श्रमा 4 ABGJ °रात्परामष्टर्द्धि° , MMa °राणा महर्द्धि 5 ABGJMMa श्रम° 6 ABGHJV °णान्मे। 7 MMa एव 8 ABGHJV °या 9 ABGHJV °ता 10- -10 ABJ omit 11 ABJ °द्यष्टसमृद्धि° 12 HV omit ते

**तस्येति।** त्रिभुवनाधीशा ब्रह्मादयः। मायास्तदीयधैर्यपरीक्षार्थं प्रथमं मायया वृषलादिरूपेण प्रतीता - स्सन्त इत्यर्थः ॥१५॥

**स** इति। परं केवलं वासुदेवे भक्त्या मनश्चक्रे न तु तान्किमपि याचितवान् ॥१६॥

**वीर०** स विभू रन्तिदेवो यदातिथ्याऽवशिष्टमन्नं तत् बहुमानपुरस्कृतं यथा तथा दत्वा, श्वभ्यः शुनां पतये[1] च तस्मै नमश्चक्रे भगवद्भावेनेति शेषः ॥९॥

अथोच्छेषमवशिष्टं पानीयमात्रं, तदप्येकपरितर्पणं एकपुरुषमात्रतृप्तिकरं पास्यतस्सतः कश्चित्पुल्कसः, अशुभाय नीचाय मह्यमप पानीयं जलं देहीति वदन्नभ्यागच्छत् ॥१०॥

तस्याऽपि पुल्कसस्यापि कृपणाः दीना विपुल श्रमो याभ्योऽवगम्यते ता वाचः आकर्ण्य कृपया नितरां सन्तप्तो रन्तिदेव इदं वक्ष्यमाणममृततुल्यं वच आह ॥११॥

तदेव दर्शयति - **न कामये** इति द्वाभ्याम्। अष्टर्द्धियुक्ताम् अणिमाद्यष्टैश्वर्ययुक्तां ईश्वराणां ब्रह्मादीनां गतिं प्राप्तिं अहं न कामये नेच्छामि नाऽप्यपुनर्भवं मोक्षं वा कामये। किन्तु अखिलाना देहभाजां देहिनां क्षुत्पिपासार्दितानां अन्तःस्थितामार्तिं दुःखं प्रपत्स्ये प्राप्नुयामिति कामये सर्वेषां दुःखमहमेक एव अनुभवेयमिति आशासे इत्यर्थः। कि मेवंविधकामनया? इत्यत आह - येन भवन्त्यदु खा इति। येन दुःखभोक्त्रा मया हेतुभूतेन सर्वे देहभाजो निर्दुःखा भवन्ति येनाऽस्मदनुभवेन इति वा ॥१२॥

ननु दुःखमिति प्रार्थयसे, परदुःखनिवृत्त्यैव मम सर्वदुःखनिवृत्तेरित्याह - **क्षुत्तृडिति।** कृपणस्य जीवितुमिच्छोः जन्तो र्जीवस्य[2] जलार्पणेन जीवनहेतोर्जलस्याऽर्पणेनैव[3] सर्वे क्षुत्तृडादयो निवृत्ता भवेयुरिति शेषः। जीवकलार्पणेनेति पाठेऽयमर्थः- जिजीविषोर्जन्तोर्मे जीवकलार्पणेनाऽस्मत्प्राणदानेन क्षुधादयो निवृताः स्युः, मम प्राणानपि दद्यामित्यर्थः ॥१३॥

स्वयं पिपासया म्रियमाणोऽपि एवम्प्रभाष्य धीरो निसर्गकरुण निरुपाधिककृपावान् नृपो रन्तिदेवः पुल्कसाय तदेकपरितर्पणं पानीयं ददौ ॥१४॥

फलमर्थकामादिरूपमिच्छतां कामयमानानां जनानां फलदास्त्रिभुवनस्याधीशाः ब्रह्मादयस्तस्य रन्तिदेवस्याऽऽत्मानं दर्शयाञ्चक्रुः प्रसन्ना बभूवुः। विष्णुना विनिर्मितां मायाञ्च दर्शयाञ्चक्रुः। माया प्रकृतिः, विष्णुनिर्मितामित्युक्तत्वात् कार्यरूपा प्रकृति विवक्षिता, प्रकृत्यात्मविवेकज्ञानं ददुरित्यर्थ। यद्वा तन्मनःपरीक्षार्थं वृषलादिमायारूपमात्मानं दर्शयाञ्चक्रुरित्यर्थः ॥१५॥

1 TW पत्ये 2 TW °वज° 3 TW °लार्प°

ततस्स वै रन्तिदेवः तेभ्यः त्रिभुवनाधीशेभ्यो, मायारूपेभ्यो वा नमस्कृत्य निस्सङ्गः देहतदनुबान्धिषु अहम्ममतारहितः विगतैहिकामुष्मिकफललिप्सः[1] परं केवलं वासदेवे मनश्चक्रे ॥१६॥

**विज०** घृतादिकं दत्त्वा पनीयमात्रमुच्छेषमवशिष्टं तदपि एकपरितर्पणम् एकस्य तृप्तिकरं, न तु बहूनाम्, पास्यतः पातुकामस्य पुल्कसो गोमांसभक्षकः ॥९-११॥

महर्द्धियुक्ताम् अगणितसमृद्धिसम्पन्नां योगेश्वराणां गतिमणिमादिलक्षणां, महरादिलोकं वा न कामये न वाञ्छामि, अपुनर्भवं मोक्षं वा। तर्हि कस्मिन् कांक्षा इति तत्राऽऽह - इति आर्तिमिति । येन देहभाजो मयाऽर्पितजलपानादिना क्षुधादिनिमित्त दुःख रहिता भवन्ति ये, तेन तेषामन्तःस्थितामार्तिं अहं प्रपद्ये इत्यन्वयः। येन जलेनाऽदुःखाः तत्तेभ्यो दत्त्वा तदार्तिमद्याऽहं प्रपद्य इति वा ॥१२॥

एवं भाषणमात्रेण किं फलमिति तत्राऽऽह - **क्षुत्तृ डति**। कृपणस्य जन्तोर्जीवस्य जलार्पणेन जीवनप्रदजलदानेन सर्वेषां सुखं स्यात्, तदार्तिर्मर्मास्त्विति । जिजिविषोर्जीवितुमिच्छतः पुंसः क्षुत्तृडादयो निवृत्ता भवन्तीत्यन्वयः। अनेन क्षुधादिमतः पुंसो[2] जलादिदानेन दातुरपि तन्निवृत्तिः तददाने तदनिवृत्तिरिति अन्वयव्यतिरेकौ द्रष्टव्यौ ॥१३॥

पिपासया म्रियमाणः ॥१४॥

आत्मानं मायां महिमोपेतं, महिमाऽपि, भगवदनुग्रहविजृम्भित इत्याह - विष्णिविति ॥१५,१६॥

**ईश्वरालम्बनं चित्तं कुर्वतोऽनन्यराधसः।**
**माया गुणमयी राजन् स्वप्नवत् प्रत्यलीयत॥ १७॥**

**तत्प्रसङ्गानुभावेन रन्तिदेवानुवर्तिनः ।**
**अभवन् योगिनस्सर्वे नारायणपरायणाः ॥१८॥**

**गर्गाच्छिनिस्ततो गार्ग्यः[3] क्षत्त्रद्ब्रह्म ह्यवर्तत[4] ।**
**दुरितक्षयो[5] महावीर्यात् तस्य त्रय्यारुणिः कविः ॥१९॥**

**पुष्करारुणिरित्यत्र ये ब्राह्मणगतिं गताः।**
**बृहत्क्षत्रात्सुहोत्रोऽस्मात्[6-6] हस्ती यद्धास्तिनापुरम् ॥२०॥**

---

1 A.B 'प्सु ' 2 M Ma 'दा' 3 M Ma गार्ग्यात् 4 H V 'द्ब्राह्ममवर्तत 5 H V उरुक्षयो 6- -6 A.B G J बृहत्क्षत्रस्य पुत्रोऽभूत् , M Ma बहत्क्षत्रस्य होत्रोऽस्मात्

**अजमीढो द्विमीढश्च पुरुमीढश्च हस्तिनः ।**
**अजमीढस्य वंश्यास्स्युः प्रियमेधादयो द्विजाः ॥२१॥**

**अजमीढाद्बृहदिषुस्तस्य पुत्रो बृहद्धनुः ।**
**बृहत्कायस्ततस्तस्य पुत्र आसीद्[1]बृहद्रथः ॥२२॥**

**तत्सुतो [2]विशदस्तस्य सेनजित् समजायत ।**
**रुचिरास्यो दृढहनुः काश्यो वत्सश्च तत्सुताः ॥२३॥**

**रुचिराश्वसुतः [3]प्राज्ञः पृथुसेनस्तदात्मजः ।**
**[4]पारस्तत्तनयो नीपस्तस्य पुत्रशतन्त्वभूत् ॥२४॥**

**श्रीध० ईश्वरेति ।** अनन्यराधस· ईश्वरातिरिक्तफलान्तरानपेक्षस्य । प्रत्यलीयताऽऽत्मन्येव लीना बभूव ॥१७,१८॥

मन्युसुतस्य नरस्य वंशमुक्त्वा तत्सुतस्यैव गर्गस्य वंशमाह - **गर्गादिति ।** महावीर्यस्य वंशमाह [-5]महावीर्यात् ऊरुक्षय[-5]· तस्य त्रय्यारुणिः कविः पुष्करारुणिश्चेति त्रय पुत्राः ॥१९॥

**पुष्करेति ।** [6]ते कथम्भूताः? ये अत्र क्षत्रवंशे ब्रह्मणगतिं [7]ब्राह्मणतां गतास्ते । मन्युपुत्राणां पंचानां ज्येष्ठस्य वंशमाह - [8-]बृहत्क्षत्रात् सुहोत्र अस्मात्[-8]:, हस्ती यद्येन हस्तिनापुरं कृतमित्यर्थ· ॥२०॥

**अजमीढ इति ।** अजमीढादयस्त्रयो हस्तिन· पुत्रा ॥२१॥

**अजमीढादिति ।** अजमीढादेवाऽन्यः पुत्रो बृहदिषुर्नामाऽभवत् ॥२२,२३॥

**रुचिराश्वेति ।** पारस्य तनयो नीप·, नीपस्य पुत्रशतम् ॥२४॥

**वीर० ईश्वरेति ।** अनन्यराधसा अनन्यप्रयोजनेन भावेन चित्तमीशालम्बनं वासुदेवनिष्ठं कुर्वतस्तस्य रन्तिदेवस्य हे राजन्! त्रिगुणात्मिका माया स्वप्नवत्प्रत्यलीयत न्यवर्तत, स प्रकृतिसम्बन्धान्मुक्तो बभूवेत्यर्थः ॥१७॥

किमुत तस्य रन्तिदेवस्य य प्रसंङ्ग , तस्यानुभावेन प्रभावेन हेतुना रन्तिदेवमनुवर्तमाना· सर्वेऽपि योगिन । योगित्वमेवाऽऽह - नारायणपरायणा बभूवु· ॥१८॥

---

6 A B G H J V 'ज्जयद्रथ 1 H V विश्वजित्' 2 A B G J पार , M Ma याज 3 A B G J 'स्य त' 4--4 A B J दुरितक्षय 5 A B J omit ते 6 A B J 'णरूपता' 7--7 A B J बृहत्क्षत्रियस्येति

एवं नरस्य वंश उपवर्णित । अथ गर्गस्य वंशमाह - **गर्गादिति**। गर्गाच्छिलो जज्ञे। शिनिरिति पाठान्तरम्। तस्मात्तु गार्ग्यः तत्र ततो गार्ग्याद्ब्रह्म ब्रह्मकुलमवर्तत पुत्रादिपरम्परया प्रावर्ततेत्यर्थ । अथ महावीर्यस्याऽन्वयमाह - महावीर्यात् दुरितक्षयो जज्ञे, तस्य दुरितक्षयस्य त्रय्यारुणि· कवि ॥१९॥

पुष्करारुणिश्चेति त्रयः पुत्राः, कथम्भूता.? येऽत्र क्षत्रवंशे ब्राह्मणगतिं ब्राह्मणरूपतां गता· प्राप्ता.। अथ जेष्ठस्य बृहत्क्षत्रस्य वंशमाह- 'बृहत्क्षत्रस्य पुत्रोऽभू' दित्यादिना। बृहत्क्षत्रस्य पुत्रो हस्ती बभूव, यत् येन हास्तिनं पुरं कृतमिति शेषः, स हस्ती बभूवेत्यर्थ. ॥२०॥

हस्तिनस्सुता अजमीढादय त्रयः पुत्रा[1] । तत्र अजमीढस्य वंश्याः वंशजा· प्रियमेधादयो द्विजा बभूवु· ॥२१॥

अजमीढादेवाऽन्यः पुत्रो बृहदिषुर्नामाऽभवत्। तस्य बृहदिषो· सुतो बृहद्धनु तस्य सुतो बृहत्काय· तस्य बृहद्रथ· पुत्र आसीत् ॥२२॥

तत्सुतो बृहद्रथसुतः विशदः, तस्य विशदस्य, तस्मादिति पाठे विशदात् फेनजित् समजायत। तस्य सुता· फेनजित्सुता· रुचिराश्वादयश्चत्वार ॥२३॥

तत्र रुचिराश्वस्य सुत· प्राज्ञ , तदात्मज प्राज्ञसुत पृथुसेनः तदात्मज· पृथुसेनतनय पारः, तत्तनय· पारतनय·नीप , तस्य नीपस्य पुत्रशतमभूत् ॥२४॥

**विज०** ईश्वरालम्बनं श्रीनारायणविषयम् अनन्यराधस भगवत्सिद्धिमन्तरेण अन्यसिद्धिशून्यस्य तदेकनिष्ठस्येत्यर्थ·। अन्यस्माद्राधस· सिद्धिर्मुक्ति तया रहितस्य भगवत एवापेक्षिताऽशेषपुरुषार्थवत· प्रत्यलीयत नष्टाऽभूत्, माया संसाराख्या ॥१७॥

तस्य रन्तिदेवस्य प्रसङ्ग· कथालक्षण तस्याऽनुभावेन भावसूचकेन। "अनुभावः प्रभावे स्यात् निश्चये भावसूचके" (वै.ज. को. 8-1-8) इति यादव· ॥१८॥

ब्रह्म ब्राह्मणकुलं, नाम्ना दुरितक्षय·, तस्य त्रैय्यारुणि कवि , पुष्करारुणिश्चेति त्रय· पुत्रा ये, ते अत्र क्षत्रवंशे ब्राह्मणगतिं ब्राह्मणरूपतां गता । भरतप्रपौत्रस्य बृहत्क्षत्रस्य वंशान्तरमाह - बृहत्क्षत्रस्येति। नाम्ना हस्ती यत् येन हस्तिनापुरं, कृतमिति शेष· ॥१९-२४॥

---

1 TW omit पुत्रा 2 A B omit तस्य

स कृत्व्यां शुककन्यायां ब्रह्मदत्तमजीजनत्।
[1]योगीशो गवि भार्यायां [2]विष्वक्सेनमधात्सुतम् ॥२५॥

जैगीषव्योपदेशेन योगतन्त्रं चकार ह।
[3]उदक्सेनस्ततस्तस्मात् भल्लादो [4]बार्हदीषवाः ॥२६॥

यवीनरो द्विमीढस्य [5]कृतिमांस्तत्सुतस्ततः।
नाम्ना [6]सत्यधृतिस्तस्मात् दृढनेमिः सुपार्श्वकृत् ॥२७॥

सुपार्श्वात्सुमतिस्तस्य [7]पुत्रस्सन्नतिमांस्ततः।
[8]कृती हिरण्यनाभाद्यो योगं प्राप्य [9]जगौ स्म षट् ॥२८॥

संहिताः [10]प्राच्य साम्नां वै [11-]तस्याप्युग्रायुधस्सुतः[-11]।
तस्य [12]क्षेम्यः सुवीरोऽथ [13]सुवीरस्य रिपुञ्जयः ॥२९॥

ततो [14]बहुरथो नाम पुरुमीढोऽप्रजोऽभवत्।
नलिन्यामजमीढस्य नीलः[15]शान्तिस्तु तत्सुतः ॥३०॥

शान्तेस्सुशान्तिस्तत्पुत्रः [16]पुरुजोऽर्कस्ततोऽभवत्।
[17]भर्म्याश्व[18]स्तत्सुतस्तस्य पंचाऽऽसन्मुद्गलादयः ॥३१॥

यवीनरो बृहदिषुः [19]काम्पिल्य[20]स्सृञ्जयस्सुताः।
[21]भर्म्याश्वः प्राह पुत्रा मे पञ्चानां रक्षणाय हि ॥३२॥

**श्रीध० स** इति। स एव [22]कृत्व्यां कृत्वीसंज्ञायां शुककन्यायां ब्रह्मदत्तं जनयामास। तदुक्तं हरिवंशादिषु "पाराशरकुलोत्पन्नः शुको नाम महायशाः। व्यासादरण्यां सम्भूतो विधूमोऽग्निरिवोज्ज्वलन्। स तस्यां पितृकन्यायां वीरिण्यां जनयिष्यति। कृष्णं गौरप्रभं शम्भुं तथा भूरिश्रुतं जयम्। कन्यां कीर्तिमतीं षष्ठीं योगिनीं योगमातरम्। ब्रह्मदत्तस्य जननीं महिषी मणुहस्य च (भार.13-45 - 47) इति। यद्यपि शुकः [23]जातमायावविमुक्तसंज्ञो निर्गतस्तथाऽपि विरहातुरं व्यासमनुयान्तं दृष्ट्वा छायाशुकं निर्माय

1 A.B G J स योगी , M Ma योगेशो 2 TW 'मगात्सु' 3 A B G J 'स्व' 4 M Ma 'व 5 A B G J 'तस्स्मृत 6 A B G J र्यस्य , M Ma 'र्यस्मात् 7 M Ma 'न्त' 8 A B G J M Ma 'तिर्हि 9 M Ma द्वि' 10 TW प्राप्य 11- -11 A B G J नीपो ह्युग्रायुधस्तत , M Ma नीपो ह्यौग्रायुधस्तत 12 TW क्ष 13 H V पुर' 14 M Ma 'तिथो 15 A B G J 'स्सुतस्तत 16 M Ma पुराजा , TW पुरुज्रो 17 M Ma ह' 18 A B G J 'स्तनय' 19 A.B G J M Ma स्स 20 M Ma 'स्तत ' 21 M Ma ह' 22 H V omit कृत्व्या 23 A B J उप्पत्त्यैव

गतवान्। तदभिप्रायेणैव अयं[1] गार्हस्थ्यादिव्यवहार इत्यविरोधः। स ब्रह्मदत्तो योगी। गवि वाचि सरस्वत्याम् ॥२५॥

**जैगीषव्येति**। स एवं योगतन्त्रं चकार। बार्हदीषवो बृहदिषोर्वंश्या इमे, दीर्घत्वमार्षम् ॥२६॥

**यवीनरेति**। सुपार्श्वकृत् सुपार्श्वस्य पिता ॥२७॥

**संहिता** इति। प्राच्यसाम्नां षट् संहिता जगौ विभज्याऽध्यापितवान् ॥२८,२९॥

**तत** इति। अजमीढस्य वंश्या प्रियमेधादयः। केचिद्ब्राह्मणा बभूवुः, बृहदिषुप्रभृतयः क्षत्रियाश्चेति वंशद्वयमुक्तम्। तस्यैव वंशान्तरमाह - नलिन्यामिति यावत्समाप्ति ॥३०,३१॥

**यवीनर** इति। मुद्गल एको यवीनरादयश्चत्वार इत्येवं पञ्च ॥३२॥

**वीर०** स नीप एव शुककन्यायां श्रीशुकस्य कन्यायां दुहितरि कृतिसंज्ञायां ब्रह्मदत्ताख्यं सुतमजीजनत् जनयामास। अत्र 'तस्य पुत्रशतन्त्वभू' दित्यास्यानन्तरं क्वचित् - अणुहो नाम यस्तेषां ज्येष्ठः सत्यरथोनृप! इति पठ्यते। तत्र हे नृप! तेषां पुत्राणां शते यो ज्येष्ठः सोऽणुहः, स एव सत्यरथापरनामधेय इत्यर्थः। शुककन्यायामित्यनेन शुकस्याऽप्यत्रसन्तान उक्तः। तथा चोक्तं हरिवंशादिष्वपि - "पाराशरस्सुतो त्पन्न. शुको नाम महायशा.। व्यासादरण्यां सम्भूतो विधूमाग्निरिव ज्वलन्" स तस्यां पितृकन्यायामिरिण्यां जनयिष्यति । कृष्णं गौरं प्रभुं शम्भुं तथाभूतश्रुतं जयम् ॥ कन्यां कीर्तिमतीं षष्ठीं योगीनीं योगमातरम् ॥ ब्रह्मदत्तस्य जननीं मानुषीम् (भारते.13-45-47)इत्यादि॥ यद्यपि शुक उत्पत्तेरारभ्य विमुक्तसङ्गो निर्गतः, तथाऽपि विरहातुरं व्यासमनुयान्तं दृष्ट्वा छायाशुकं निर्माय गतवान्। तदभिप्रायेणैव अयं गार्हस्थ्यादिव्यवहार इत्यविरोध इत्याचक्षते। स च ब्रह्मदत्तः गवि सरस्वत्यां भार्यायां विष्वक्सेनाख्यं सुतमगात् प्राप्तवान्, अजीजनदिति यावत् ॥२५॥

स एव जैगीषव्यस्योपदेशेन योगतन्त्रं योगशास्त्रं चकार। ततो विष्वक्सेनाक्सेनः, तस्मात् उदक्सेनात् भल्लादः बार्हदीषवः- इमे उक्तास्सर्वे बृहदिषोरजमीढसुतस्य वंशजा इत्यर्थः। दीर्घत्वमार्षम् ॥२६॥

अथ द्विमीढस्य वंशमाह - द्विमीढस्य सुतो यवीनरः, तत्सुतो यवीनरसुत. धृतिमान्, ततो धृतिमतः सत्यधृतिः तस्मात् सत्यधृतेः दृढनेमिः, स च सुपार्श्वकृतः सुपार्श्वस्य पितेत्यर्थः। तत्पुत्रः सुपार्श्व इति यावत् ॥२७॥

सुपार्श्वात् सुमतिः, तस्य सुमतेः पुत्रः सन्नतिमान्, ततः सन्नतिमतः कृतिः। तं विशिनष्टि - यः कृतिः हिरण्यनाभाद्योगं साम्नां षट् संहिताश्च प्राप्य जगौ अध्यापितवान्। तस्य कृतेः सुतः उग्रायुधः, तस्य उग्रायुधस्य सुतः क्षम्यः। अथ क्षम्यात् सुवीरः, तस्य सुतो रिपुञ्जयः ॥२८,२९॥

ततो रिपुञ्जयात् बहुरथो नाम जज्ञे । एवं अजमीढद्विमीढयोर्वंशावभिधाय पुरुमीढस्त्वपुत्रोऽभवदित्याह -

---

1 A.B J omit अय

पुरुमीढोऽप्रजोऽभवदिति। अजमीढस्य वंश्या· प्रियमेधादयः केचित् ब्राह्मणा बभूवुः, बृहदिषुप्रभृतयः क्षत्रियाश्चेति वंशद्वय मुक्तम्। तस्यैवेदानीं वंशान्तरमाह - नलीन्यामिति यावत्समाप्ति। अजमीढस्य नलिन्यां भार्यायां नीलः, तत्सुतो नीलसुतस्तु ॥३०॥

शान्तपुत्रः सुशान्तिः, तत्पुत्र· पुरुज· , पुरुज्ञादर्क·, तत्सुतोऽर्कसुतो भर्म्याश्व·, तस्य भर्म्याश्वस्य पुत्र· मुद्गल एकः ॥३१॥

यवीनरादयश्चत्वारश्चेति पञ्चाऽऽसन् जज्ञिरे। तेषां पञ्चालसंज्ञितत्वं वक्तुं तन्निमित्तं पितृवचोरूपमाह - भर्म्याश्व इति। भर्म्याश्व प्राह, पुत्रानिति शेषः ॥३२॥

**विज०** प्राच्यसाम्नां द्वादशसंहिता जगौ ॥२५-३२॥

**विषयाणामलमिमे इति पञ्चालसञ्ज्ञिताः[1][2]।**
**मुद्गलात् ब्रह्म निर्वृत्तं गोत्रं मौद्गल्यसंज्ञितम् ॥३३॥**
**मिथुनं मुद्गलाद्भार्म्याद्दिवोदासः पुमानभूत्[3] ।**
**अहल्या कन्यका यस्यां शतानन्दस्तु गौतमात् ॥३४॥**
**तस्य सत्यधृतिः[4] पुत्रो धनुर्वेदविशारदः।**
**शरद्वांस्तत्सुतो यस्मादुर्वशीदर्शनात् किल॥३५॥**
**शरस्तम्बेऽपतद्रेतो मिथुनं तदभूच्छुभम् ।**
**तद्दृष्ट्वा[5] कृपयाऽगृह्णाच्छन्तनुर्मृगयां चरन् ॥**
**कृपः कुमारः कन्या च द्रोणपत्न्यभवत् कृपी ॥३६॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
नवमस्कन्धे एकविंशोऽध्याय· ॥२१॥

**श्रीध० मिथुनमिति।** भार्म्याद्भर्म्याश्वपुत्रात् मिथुनञ्चाऽभूत्। तदेवाह दिवोदासः पुमान्, अहल्या च कन्यकेति ॥३३-३६॥

इति श्रीमद्भागवते महापुराणे
श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां नवमस्कन्धे एकविंशोऽध्यायः॥२१॥

---

1 HV पा॰ 2 HV ॰का 3 M Ma ॰लाचार्या॰ 4 M Ma शतधृति 5 M Ma तच्छ्रुत्व

**वीर०** किमिति? हे पुत्रा·मे मम पञ्चानां विषयाणां शब्दादीनां देशानां वा रक्षणाय इमे यूयमलं प्रभव इति, यत एवं पित्रोक्ताः, अतस्ते पञ्चालसंज्ञिता· पञ्चालेति संज्ञा एषां सञ्जातेति तथा। तारकादित्वादितच्। तत्र मुद्गलात् ब्रह्मगोत्रं ब्राह्मणकुलं निर्वृत्तमुत्पन्नम्। तद्विशिनष्टि मौद्गल्यसंज्ञितमिति ॥३३॥

तदेव सङ्ग्रहेण दर्शयति - **मिथुनमिति**। भार्म्यात् भर्म्याश्वसुतात् मुद्गलात् मिथुनं स्त्रीपुंसमभूत्। तत्र पुमान् दिवो - दास·, कन्यका त्वहल्या। तां विशिनष्टि- यस्यामहल्यायां गौतमात् भर्तु· शतानन्दो जज्ञे ॥३४॥

तस्य शतानन्दस्य पुत्र सत्यधृतिः। स च धनुर्वेदविशारद·। तत्सुत· सत्यधृतिसुतः शरद्वान्। तं विशिंषन्[1] तन्नाम्नि[2] निमित्तं तद्वंशश्चाऽऽह - यस्मादित्यादिना यावत्समाप्ति। उर्वश्या अप्सरसो दर्शनाद्धेतो यस्मात् शरद्वतो रेतः शरस्तम्बे अश्ववालस्तम्बेन्यपतत्, अतस्स शरद्वान्नाम बभूवेति भाव। तच्च पतितं रेतः शिवं शुभाचारं मिथुनं स्त्रीपुंसमभूत्। शन्तनुः राजा यदृच्छया मृगयां चरन् तन्मिथुनं दृष्ट्वा कृपया अगृह्णात् गृहीत्वा ररक्षेत्यर्थ·। तत्र मिथुने कुमारः कृपः कृपाचार्यः, कन्या तु कृपी सा च द्रोणाचार्यस्य पत्नी ॥३५,३६॥

इति श्रीमद्भागवते नवमस्कन्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां एकविंशोऽध्याय· ॥२१॥

**विज०** - ॥३३-३६॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
नवमस्कन्धे एकविंशोऽध्यायः ॥२१॥

---

1 AB 'म' 2 A 'त'

# द्वाविंशोऽध्यायः

## श्रीशुक उवाच

मित्रायुश्च[1] दिवोदासाच्च्यवनस्तत्सुतो नृप! ।
सुदासस्सहदेवोऽथ सोमकोजन्तुजन्मकृत् ॥१॥

तस्य पुत्रशतं तेषां यवीयान्[2] पृषदस्ततः ।
द्रुपदो द्रौपदी तस्य धृष्टद्युम्नादयस्सुताः ॥२॥

धृष्टद्युम्नात् धृष्टकेतु भार्म्याः[3] पञ्चालका[4] इमे ।
योऽजमीढसुतो [5-]ह्यस्य त्वृक्षस्सं[-5]वरणस्ततः ॥३॥

[6-]तपत्यां सूर्यकन्यायां कुरुक्षेत्रपतिः[-6] कुरुः ।
परीक्षित् सुधनुर्जह्नु[7] र्निषधश्च कुरोस्सुताः ॥४॥

सुहोत्रोऽभूत् सुधनुषश्च्यवनो[8]ऽथ ततः कृती[9] ।
वसुस्तस्योपरिचरो बृहद्रथमुखास्ततः ॥५॥

[10]कुसुम्भमत्स्यप्रत्यग्र[11]चेदिपाद्याश्च चेदिपाः ।
बृहद्रथात्कुशाग्रोऽभूत् ऋषभस्तस्य चात्मजः[12] ॥६॥

जज्ञे[13] सत्यहितोऽपत्यं पुष्पवांस्तत्सुतो जहुः ।
अन्यस्या[14]मपि भार्यायां शकले द्वे बृहद्रथात् ॥७॥

ते मात्रा बहिरुत्सृष्टे जरया चाभिसन्धिते ।
जीव जीवेति क्रीडन्त्या जरासन्धस्ततो[15]ऽभवत् ॥८॥

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

द्वाविंशे तु दिवोदासवंशमुक्त्वाऽथ वर्णिताः । ऋक्षवंशे जरासन्ध पार्थदुर्योधनादयः

---

1 A.G J 'त्रे' 2 ABGJ 'तस्सुत ' MMa 'तस्तत 3 MMa हर्म्या 4 H V पा' 5- -5 A.B G J ह्यन्य ऋक्षः संव' , MMa ह्यन्य ऋक्षात्संव' 6- -6 H V omit 7 ABGJMMa 'धाश्च. 8 H M Ma V 'वनस्ततत्सुत. 9 TW कृति 10 ABGJ कुशाम्ब , MMa कुशाम्बु 11. M.Ma वेदिपा' 12 ABGJMMa तत्सुत । 13 TW तस्य 14 A.B G J 'स्याश्चाऽपि 15 ABGJMMa 'न्धोऽभवत्सुत.

यद्वा- दिवोदासात्तु पाञ्चालवंशो द्वाविंश उच्यते ।

वंशान्तरादाजमीढ चैद्यमागध कौरवाः ॥

तस्येति। तस्य सोमकस्य पुत्राणां शतं बभूव। तेषां जन्तुर्ज्येष्ठो यवीयान्पृषद[1] ॥१,२॥

अजमीढस्यैव[2] वंशान्तरमाह - **य इति**। ततस्संवरणात्कुरु· ॥३,४॥

**सुहोत्र** इति। तस्य कृतिनः उपरिचरो वसुः। ततो वसोः बृहद्रथो मुखमादिर्येषाम् ॥५॥

तानेवाऽऽह - **कुसुम्भेति**। तत्सुतः पुष्पवान् जज्ञे। तस्यापत्यं सत्यहित इति योज्यम् ॥६,७॥

**त** इति। जरया राक्षस्या ॥८॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

एवं मुद्गलस्य दुहितृसन्तानमभिधाय, अथ पुत्रसन्तानमाह - **मित्रायुश्चेति**। दिवोदासात्, मौद्गल्यात् मित्रायुर्जज्ञे। तत्सुता· मित्रायुसुताः हे नृप! च्यवनादयश्चत्वारः। तत्र सोमक· कनीयान् स च जन्तो· जन्मकृतवानिति, तथा सोमकस्य सुतो जन्तु रित्यर्थः ॥१॥

न केवलं जन्तुरेव तस्य पुत्रः, अपि तु जन्तुज्येष्ठं शतमित्याह - **तस्येति**। तस्य सोमकस्य पुत्रशतमभूत्। तेषां पृषदः कनीयान्। जन्तुस्तु ज्येष्ठ इति शेषः। पृषदात्तु द्रुपद·, यस्य द्रुपदस्य सुता· धृष्टद्युम्नादयः ॥२॥

इमे धृष्टद्युम्नादयः पञ्चालकाः पञ्चालसंज्ञिकमुद्गलवंशप्रसूतत्वात्पाञ्चालकाः। अजमीढस्य पुनर्वंशान्तरमाह - **य इति**। अजमीढस्याऽन्यो यः सुतः ऋक्षाख्यः, ततः ऋक्षात्संवरणः ॥३॥

संवरणाच्च तपत्याख्यायां सूर्यकन्यायां कुरुर्जज्ञे, स च कुरुक्षेत्रस्य पतिः। कुरोस्सुतास्तु परीक्षिदादयः चत्वारः[3] ॥४॥

तत्र सुधनुषः सुतः सुहोत्रोऽभूत् । अथ सुहोत्राच्च्यवनः, ततश्च्यवनात्कृतिः, तस्य कृतेरुपरिचरो वसुः, उपरिचरवसुः कृतीति पाठान्तरम्। तदा तस्य कृतिनः, ततः उपरिचरवसोः बृहद्रथो मुखमादिर्येषान्ते जज्ञिरे ॥५॥

तानाह[4] - **कुसुम्भेति**। एते चेदिपाः चेदिजनपदाधिपाः तत्र बृहद्रथात् कृशाश्वो बभूव। 'कुशाग्रोऽभू' दिति पाठान्तरम्। तत्सुतः कुशाग्रसुतः ऋषभः स्मृतः प्रसिद्धः। तत्सुतः ऋषभसुतः पुष्पवान्। तस्य हितः हिताख्योऽपत्यं पुत्रो जज्ञ इत्यन्वयः।

---

1 A B J 'त 2 H V omit एव 3 A B omit चत्वार । 4 A B कुशाम्बेति ।

तत्सुतो हितसुतः जहुः। जगुरिति पाठान्तरम्। एवं बृहद्रथस्यैको वंश उक्तः। अथाऽन्यस्यामपि भार्यायां बृहद्रथात् द्वे शकले जज्ञाते ॥६,७॥

ते च मात्रा बहिरुत्सृष्टे त्यक्ते। तत्र क्रीडन्त्या जरया राक्षस्या जीव जीवेति भाषमाणया अभिसन्धिते, जरया सन्धितत्वात् जरासन्ध स्सुतोऽभवत् ॥८॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

अहल्यासन्ततिं प्रोच्य दिवोदाससन्ततिं कथयति - **मित्रायुरिति** ॥१,२॥

अजमीढसुतो योऽन्यो, बृहदिषोरिति शेषः अन्यस्यां भार्यायां जातः नाम्ना ऋक्षः, ऋक्षाज्जातः संवरणो नाम ॥३,७॥

जरया राक्षस्या ॥८॥

**ततश्च सहदेवोऽभूत् सोमापिर्यच्छ्रुतश्रवाः।**
**परीक्षिदनपत्योऽभूत्सुरथो नाम जाह्नवः ॥९॥**

**ततो विदूरथस्तस्मात् सार्वभौमस्ततोऽभवत् ।**
**[1]जयत्सेनस्तत्तनयो [2]राधिकोऽतो द्युमानभूत्[-2] ॥१०॥**

**ततश्च [3]क्रोधनस्तस्मात् देवातिथिरमुष्य च ।**
**[4]ऋक्ष[5]स्तस्य दिलीपोऽभूत्[-5] प्रतीपस्तस्य चाऽऽत्मजः ॥११॥**

**देवापि[6]शन्तनु[7]स्तस्य बाह्लीक इति[-7]चात्मजाः ।**
**[8]पितृराज्यं [9]समुत्सृज्य देवापिस्तु वनङ्गतः ॥१२॥**

**अभवच्छन्तनू राजा प्राङ्म[10]हाभिषसंज्ञितः।**
**यं यं कराभ्यां स्पृशति जीर्णं यौवनमेति सः ॥१३॥**

**शान्तिमाप्नोति चैवाग्र्यां कर्मणा तेन शन्तनुः ।**
**समा द्वादश त[11]द्राष्ट्रे न ववर्ष यदा विभुः ॥१४॥**

1 A B G J MMa जयसेन' 2- -2 A B G J राधिकोऽतोऽयुता ह्यभूत् , H V राथिकोऽतोऽयुतायुष , MMa राचीकोऽतो द्युमानभूत्। 3 MMa 'श्चाक्रधन' 4 ABGJ ऋष्य' 5- -5 H V 'क्षोऽस्माद्भीमसेनोऽभूत् 6 H V 'श्चैव 7- -7 H V बाह्लिकस्तत्सुता स्त्रय । 8 H V 'त्र्य' 9 ABGJ परित्यज्य 10 H V भीष सञ्ज्ञक 11 ABGJ 'द्राज्ये

शन्तनुर्ब्राह्मणैरुक्तः[1] परिवेत्ता त्वमग्रभुक् ।
राज्यं देह्यग्रजायाऽऽशु पुरराष्ट्रविवृद्धये ॥१५॥

एवमुक्तो द्विजैर्ज्येष्ठं छन्दयामास सोऽब्रवीत् ।
तन्मन्त्रिप्रहितैर्विप्रैर्वेदाद्विभ्रंशितो गिरा ॥१६॥

**श्रीध० तत इति** । यद्यस्मात्, सोमापेः शुतश्रवाः, कुरोः पुत्रः परीक्षिदनपत्य· । जाह्नवो जह्नो· पुत्रः ॥९॥

**तत इति** । अतो [2]रथिकात् [3]अयुतायुः इत्यर्थ· ॥१०,११॥

**देवापिरिति** । तस्य [4]प्रतिपस्य देवापिशन्तनुबाह्लीका· ॥१२॥

**अभवदिति** । प्राक् पूर्वजन्मनि महा[5]भीष इति संज्ञा यस्य स ॥१३॥

**शान्तिरिति** । यदा देवो न ववर्ष तदा शन्तनुस्तत्र कारणं ब्राह्मणान् पप्रच्छ ॥१४॥

**शन्तनुरिति** । ब्राह्मणै[6]श्चैवमुक्त· - "दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते । परिवेत्ता स विज्ञेय परिवित्तिस्तु पूर्वजः" (मनु. स्मृ 3-171) इति स्मृतेर्योऽग्रभुक् भुवमग्रतो भुनक्ति । [7-]अयं त्वादृशोऽपि परिवेत्तैव भवति[-7] । अत स्तद्दोषपरिहाराय राज्य मग्रजाय देहि, ततो वृष्टिर्भविष्यति इत्येवमुक्त , शन्तनुर्वनं गत्वा ज्येष्ठं छन्दयामास । राज्ञ [8]प्रजापालनादि [9]परो धर्मः, अतस्त्वं राज्यं स्वीकुर्विति प्रार्थितवान् । ततः पूर्वमेव तस्य मन्त्रिणा [10]अश्वरावसंज्ञेन देवापिं पाषण्डीकृत्य राज्यानर्हं कर्तुं ये प्रहिता विप्रास्तैः पाषण्डमताश्रयया गिरा वेदाद्विभ्रंशितस्सन् वेदवादस्यातिवादान्निन्दावचनानि सोऽब्रवीत् । ततस्तस्य पातित्येन राज्यानर्हत्वे जाते शन्तनोर्दोषाभावाद्देवो ववर्षेत्यर्थः ॥१५,१६॥

**वीर०** ततो जरासन्धात् सहदेवः, यत् यस्मात् सहदेवात्सोमापि·, श्रुतश्रवाश्च जातौ, स सहदेव इत्यन्वय· । कुरोः पुत्र. परीक्षिदनपत्यः । अथ जह्नोः कुरुसुतस्य सुतो जाह्नवः स च नाम्ना सुरथ इति प्रसिद्ध ॥९॥

ततस्सुरथाद्विदूरथः, तस्मात्सार्वभौमः, ततो जयसेन·, तत्तनयो जयसेनतनयो राधिक. । अतो राधिकात् द्युमानभूत् । अतोऽयुतोऽभवत् इति पाठान्तरम् ॥१०॥

ततश्च द्युमतः क्रोधनः । तस्मात्क्रोधनात् देवातिथि । अमुष्य देवातिथे ऋक्ष·, तस्मादृक्षाद्दिलीपः । तस्य दिलीपस्याऽऽत्मजः प्रतीपः । "ऋक्षोऽस्य भीमसेनोऽभूत् प्रतीप स्तस्य चाऽऽत्मज." इति पाठान्तरम् ॥११॥

---

1 AGJMMa 'ताऽयमग्रभुक् 2 ABJ राधिकात् 3 A B J अयुतोऽभूत् 4 ABJ प्रती' 5 ABJ 'भि' 6 H V 'स्त्वे' 7--7 H V स त्व परिवेत्तैव भवसि। 8 H V add परि 9 H V परमो 10 A J अश्मराव , B अश्मरात

तस्य प्रतीपस्य देवापिश्शन्तनुर्बाह्लीकश्चेति त्रयस्सुताः। तत्र देवापि· पितृराज्यं त्यक्त्वा वनं गतः, अधुना अपुत्रश्चेति भाव· ॥१२॥

शन्तनुस्तु राजा अधिकृतराज्यः[1] स च प्राक् पूर्वजन्मनि महाभिषसंज्ञितः, महाभिषसंज्ञा[2]ऽस्य सञ्जातेति तथाभूतः तस्य एतस्मिन् जन्मनि शन्तनुनामप्रवृत्तौ निमित्तमाह - यं यमिति। सोऽस्मिन् जन्मनि कराभ्यां यं यं जीर्णं जरठं स्पृशति, स सर्वोऽपि यौवनमेति प्राप्नोति। अग्र्यां मुख्यां शान्तिश्चाऽऽप्नोति यतस्ततोऽनेन कर्मणा यौवनशान्त्या पादनरूपेण कर्मणा निमित्तेन शन्तनुरिति प्रसिद्धिः। शं सुखं तनुते यौवनशान्त्यो· आपादनेनेति शन्तनुरिति निरुक्तिरभिप्रेता। तस्य शन्तनो राष्ट्रे यदा द्वादश समाः वर्षाणि विभु· पर्जन्यो न ववर्ष॥ १३,१४॥

तदा शन्तनु· तत्र निमित्तं ब्राह्मणान् पप्रच्छ। ब्राह्मणैस्त्वे वमुक्तः :- "दाराऽग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते। परिवेत्ता स विज्ञेय· परिवित्तिस्तु पूर्वज " (मनु. स्मृ. 3-171) इति स्मृतेः, योऽग्रभुक् भुवमग्रतो भुनक्ति अयं त्वादृशोऽपि परिवेत्तैव भवति। अतस्तद्दोषपरिहाराय राज्यमग्रजाय देहि; ततो वृष्टिर्भविष्यति" - इत्येव मुक्तः पुरराष्ट्रयोर्विवृद्धिर्यस्मात् वष तस्मै वर्षार्थमित्यर्थः ॥१५॥

ततश्शन्तनुर्वनं गत्वा ज्येष्ठं छन्दयामास। राज्ञः प्रजापालनादिः परमोधर्मस्ततस्त्वं राज्यं स्वीकुर्विति प्रार्थयाञ्चक्रे। ततः पूर्वमेव तस्य मन्त्रिणा अश्मरातसंज्ञि[3]केन देवार्पि पाषण्डीकृत्य राज्यानर्हं कर्तुं ये प्रहिता विप्राः, तैः पाषण्डमताश्रयया गिरा वेदाद्विभ्रंशितस्सन् ॥१६॥

**विज०** जाह्नव· जह्नो· पुत्र ॥१-१२॥

"अप्यक्षरसाम्यान्निर्ब्रूयात् न वा एकेनाऽक्षरेण छन्दांसि वियन्ति" इत्यतः शन्तनुशब्दं निर्वक्ति - यं यमिति। यस्य संस्पर्शं तनोति, कराभ्यामिति शेष·। शन्तनुं सुतनुं युवानं नयतीति। शन्तनुं शन्तं शान्तं नयति प्रापयतीति वा ॥१३,१४॥

दाराग्निहोत्रादियोगं य कुरुतेऽग्रजे स्थिते सति स परिवेत्ता। तदुक्तम् - "दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते। परिवेत्ता स इत्युक्त· परिवित्तिस्तु पूर्वज " (मनु· स्मृ 3-171) इति। अयं शन्तनुरग्रभुक् अग्रजस्य देवापेरग्रतो राज्यं भुङ्क्ते इति दोषेण अवर्षणमिति विज्ञायाऽग्रजायाऽऽशु राज्यं देहीत्युक्तम् ॥१५॥

छन्दयामास प्रसादयामास। शन्तनोः कश्चिन्मन्त्री अश्मक· विप्रान् न्ययुङ्क्त अयं देवापिर्यथा वेदमार्गाद्विभ्रंशितो भवति तथा कर्तव्यमिति तन्मन्त्रि प्रहितै र्विप्रै र्वेदा द्विभ्रंशित· स देवापिः वेदवादातिवादान् वेदार्थनिन्दालक्षणान् दोषान् गिराऽब्रवीदित्यन्वय· ॥१६॥

---

1 A B राज्यासन 2 A B add इति 3 A B 'ज्ञ'

वेदवादातिवादान्[1]वै ततो[2] देवो ववर्ष ह ।
देवापिर्योगमास्थाय कलापग्राममास्थितः[3] ॥१७॥

सोमवंशे कलौ नष्टे कृतादौ स्थापयिष्यति ।
[4]बाह्लीकात्सोमदत्तोऽभूत् भूरिर्भूरिश्रवास्ततः ॥१८॥

शलश्च शन्तनोरासीद्गङ्गायां भीष्म आत्मवान् ।
[5]सर्वधर्मविदां श्रेष्ठो महाभागवतः कविः ॥१९॥

वीरयूथाग्रणीर्येन रामोऽपि युधि तोषितः ।
शन्तनोर्दाशकन्यायां जज्ञे चित्राङ्गदस्सुतः ॥२०॥

विचित्रवीर्यो[6]ऽवरजो नाम्ना चित्राङ्गदो हतः ।
यस्यां पराशरात्साक्षादवतीर्णो हरेः कला ॥२१॥

[7]वेदगुप्तो मुनिः कृष्णो यतोऽहमिदमध्यगाम्[8] ।
हित्वा स्वशिष्यान् पैलादीन् भगवान् बादरायणः ॥२२॥

मह्यं पुत्राय शान्ताय[9] परं गुह्यमिदं जगौ ।
विचित्रवीर्योऽथोवाह काशि[10]राजसुते बलात् ॥२३॥

स्वयंवरादुपानीते अम्बिकाम्बालिके च[11] सः ।
तयोरासक्तहृदयो गृहीतो यक्ष्मणा मृतः ॥२४॥

**श्रीध० सोमवंशेति**। तत· सोमदत्तात् भूरिर्भूरिश्रवाश्शलश्चेति त्रय ॥१८,१९॥

**वीरेति**। रामोऽपि[12] जामदग्न्य·। दाशकन्यायामिति। उपरिचरस्य वसो वीर्येण मत्स्यगर्भादुत्पन्ना क[13]न्या दाशैः कैवर्तैः पालिता, अतो दाशकन्येति प्रसिद्धायां सत्यवत्याम् ॥२०॥

**विचित्रेति**। नाम्ना तत्समाननाम्ना चित्राङ्गदेन गन्धर्वेण युद्धे [14]चित्राङ्गद· हतः। यस्यां सत्यवत्यां शन्तनुपरिग्रहात्पूर्व मेव ॥२१॥

---

1 HV दान्यै 2 ABGJ तदा 3 ABGJMMa °माश्रित 4 HV बह्नि° 5 HTVW स च ध° 6 ABGJ वीर्यश्चाव 7 MMa देवगुप्तौ 8 TW °गात् 9 TW दान्ताय 10 HV काशी 11 ABGJMMa उभे 12 ABJ omit अपि 13 ABJ omit कन्या 14 ABJ omit चित्राङ्गद

**वेदेति** । वेदा गुप्ता येन । यतोऽहं जात इदं श्रीभागवतश्चाऽध्यगामधिगतवानस्मि ॥२२,२३॥

**स्वयंवरादिति।** स्वयंवराद्भीष्मेण बलादुपानीते ॥२४॥

**वीर०** वेदवादस्य अतिवादान् निन्दावचनानि स देवापिरब्रवीत्। ततस्तस्य पातित्येन राज्यानर्हत्वे जाते शन्तनो दोषाभावात्[1] देवो ववर्ष। देवापिर्योगमाश्रित्य कलापग्राममाश्रितस्सन् ॥१७॥

कलौ सोमवंशे नष्टे सति पुन कृतयुगस्याऽऽदौ स्थापयिष्यति [2-]प्रतिवर्तयिष्यति सोमवंशं इति शेषः[-2]। बाह्लीकात् प्रतीपात्मजात् सोमदत्तो जज्ञे। ततस्सोमदत्तात् भूरिर्भूरिश्रवाश्शलश्चेति त्रयस्सुता जज्ञिरे। शन्तनोस्तु ब्रह्मशापान्मानुषीत्वं प्राप्य स्वयंवरेणाऽऽगतायां गङ्गायां भार्यायां भीष्मो जात , तं विशिनष्टि - आत्मवान् ब्रह्मवित् सर्वेषां धर्मविदां श्रेष्ठः महाभागवतः कविर्विद्वान् ॥१८,१९॥

वीराणां सैन्यस्य नायक , येन भीष्मेण रामो जामदग्न्योऽपि युधि सङ्ग्रामे तोषितः। ततो गङ्गायामन्तर्हितायां शन्तनो दाशकन्यायां दाशै कैवर्तै॰ पालितायामुपरिचरवसो वीर्यं भक्षितवत्या मत्स्या॰ उदरादुद्धृतायां तैः पालितायां मत्स्यगन्धि योजनगन्धि सत्यवत्याद्याख्यायामित्यर्थ । चित्राङ्गद स्सुत॰, तस्य कनीयान् विचित्रवीर्यश्चेति द्वौ सुतौ जज्ञाते इत्यर्थः। तत्र चित्राङ्गदो नाम्ना तत्समाननाम्ना चित्राङ्गदाख्येन गन्धर्वेण युद्धे हत॰। दाशकन्यां विशिनष्टि - यस्यामिति। यस्यां दाशकन्यायां शन्तनोः परिग्रहात्पूर्वमेव पराशराद्भगवत॰ कला अवतारः, श्रीव्यासरूपेणेति शेष॰। तस्यां दाशकन्यायां शन्तनोः चित्राङ्गदो जज्ञे इति पूर्वेणाऽन्वय ॥२०,२१॥

हरे॰ कलावतारं विशिनष्टि वेदगुप्त इति। वेदा गुप्ता येन स॰ वेदगुप्तः कृष्णः कृष्णद्वैपायनाख्यो मुनि॰ यस्मादहं शुको जातस्सन्निदं श्रीभागवतमध्यगाम्, अहमेव इदं श्रीभागवतं तस्मादधीतवानस्मीत्यर्थः। तदेवोपपादयति - हित्वेति। भगवान् बादरायण॰ पाराशर्य॰ सत्यवतीसुत पैलादीन् स्वशिष्यान् हित्वा तेभ्य अनुपदिश्येत्यर्थः ॥२२॥

प्रशान्तायेति हेतुगर्भं, प्रशान्तत्वात् मह्यमेवेदं परं गुह्यं पुराणं श्रीभागवतं जगावुपदिदेशेत्यर्थः। विचित्रवीर्यश्शान्तनवः काशिराजस्य सुते बलाद्भीष्मेण स्वयंवरादुपानीते[3] अम्बिकाम्बालिकाख्ये द्वे उवाह उपयेमे। ततस्तयोरम्बिकाम्बालिकयोरासक्तं हृदयं यस्य स विचित्रवीर्यः यक्ष्मणा क्षयरोगेण मृत॰ ॥२३,२४॥

**विज०** ततो देवापौ विभ्रष्टे सति अनन्तरमिन्द्रदेवो वृष्टवान्, योगं भगवद्ध्यानम् ॥१७-१९॥

---

1 TW add इत्यर्थ 2- -2 AB सोमवश प्रतिवर्तयिष्यति । 3 AB 'प'

रामः परशुरामः। दाशकन्यायां सत्यवत्याम् ॥२०॥

नाम्ना निमित्तेन हतः। गन्धर्वेणेति शेषः। यस्यां दाशकन्यायाम् ॥२१॥

कृष्णो व्यास·, यत· कृष्णादिदं श्रीभागवतमध्यगामधीतवानस्मि, श्रीभागवतं स्तौति - हित्वेति ॥२२॥

काशिराजसुते अम्बिकाम्बालिके बलाद्भीष्मेणानीते ॥२३॥

यक्ष्मणा क्षयरोगेण अप्रजस्य भ्रातुर्विचित्रवीर्यस्य। विदुरं भुजिष्यायां जनयामास ॥२४॥

[1-] क्षेत्रेऽप्रजस्य वै [-1] भ्रातुर्मात्रोक्तो बादरायणः ।
धृतराष्ट्रञ्च पाण्डुञ्च विदुरञ्चाऽप्यजीजनत् ॥२५॥

गान्धार्यां धृतराष्ट्रस्य जज्ञे पुत्रशतं[2] नृप! ।
[3] तत्र दुर्योधनो ज्येष्ठो दुश्शला चाऽपि कन्यका ॥२६॥

शापान्मैथुनरुद्धस्य पाण्डोः कुन्त्यां महारथाः ।
जाताः धर्मानिलेन्द्रेभ्यो युधिष्ठिर मुखास्त्रयः ॥२७॥

नकुलस्सहदेवश्च माद्र्यां नासत्यदस्रयोः ।
द्रौपद्यां पञ्च पञ्चभ्यः पुत्रास्तेऽपितरोऽभवन् ॥२८॥

युधिष्ठिरात्प्रति[4]विन्ध्यः श्रुतसेनो वृकोदरात् ।
अर्जुनाच्छ्रुतकीर्तिस्तु शतानीकस्तु नाकुलिः ॥२९॥

सहदेवसुतो राजन् श्रुतकर्मा तथाऽपरे ।
[5] युधिष्ठिरात्तु पौरव्यां देवकोऽथ घटोत्कचः ॥३०॥

भीमसेनाद्धिडम्बायां [6-] काल्यां सर्वगतस्ततः [-6]।
सहदेवात्सुहोत्रन्तु विजयाऽसूत पार्वती ॥३१॥

करेणुमत्यां नकुलो निरमित्रं तथाऽर्जुनः ।
इरावन्तमुलूप्यां वै सुतायां बभ्रुवाहनम् ॥
[7] मणलूरुपतेस्सोऽपि तत्पुत्रः पुत्रिकासुतः ॥३२॥

---

1- -1 HV °त्रे ह्यप्रजसो 2 MMa °सुत 3 MMa तेषां 4 HV त्प्रती° 5 HTVW °रात् पौरवत्या 6- -6 MMa काली शर्वगत तत । 7 ABGJMMa मणिपूर°

**श्रीध० क्षेत्रेति**। मात्रा सत्यवत्योक्त इति निषेधाभावमाह - "अपतिरपत्यालिप्सुर्देवराद्गुरुप्रयुक्तात्[1] ऋतुमती[2] यायात्" इत्यादिवचनात् ॥२५॥

**गांधार्यामिति**। दुश्शला नाम कन्यका च जज्ञे ॥२६॥

**शापादिति**। अरण्ये मृगशापान्मैथुनेन रुद्धस्य प्रतिबद्धस्य ॥२७॥

**नकुल इति**। नासत्यदस्राभ्यामश्विनीकुमाराभ्याम्। पञ्चभ्यो युधिष्ठिराधिभ्यः पञ्चाऽभवन् ॥२८,२९॥

**सहदेवेति**। तथाऽपरे भार्यान्तरेषु ॥३०॥

**भीमसेनादिति**। काली चाऽन्या भीमस्य भार्या तस्यां ततो भीमसेनात्सर्वगतो नाम पुत्रोऽभवदित्यर्थः ॥३१॥

**करेणुमत्यमिति**। उलूप्यां नागकन्यायाम्। [3]मणलूरु° पतेः सुतायां पुत्रिकाधर्मेण दत्तायां बभ्रुवाहनमसूत। अत स्तत्पुत्रस्सन्नपि स पुत्रिकासुत मातामहसुत इत्यर्थ· ॥३२॥

**वीर०** ततो मात्रा सत्यवत्या उक्त आदिष्टो भगवान् बादरायणः अप्रजस्यापुत्रस्य भ्रातुर्विचित्रवीर्यस्य क्षेत्रे अम्बिकाम्बालिकारूपे कलत्रद्वये, तद्दास्याञ्च धृतराष्ट्रं ज्येष्ठं, तस्य कनीयांसं पाण्डुं विदुरञ्चाऽजीजनत् जनयामास। तत्राम्बिकायां धृतराष्ट्रं, अम्बलिकायां पाण्डुं, दास्यान्तु विदुरमिति विवेकः ॥२५॥

तत्र धृतराष्ट्रस्य गान्धार्यां पुत्रशतं जज्ञे।हे नृप' तेषां शतसंख्याकानां धार्तराष्ट्राणां दुर्योधनो ज्येष्ठः, दुश्शला नाम कन्या च धृतराष्ट्राद्गान्धार्यां जज्ञे इत्यर्थ ॥२६॥

अरण्ये मृगरूपिणो रममाणयो ऋष्योश्शापाद्धेतो· मैथुने कर्मणि प्रतिरुद्धस्य पाण्डो भार्यायां कुन्त्यां धर्मानिलेन्द्रेभ्यो युधिष्ठिर मुखमादि येषां ते युधिष्ठिरभीमार्जुना· त्रयोजाता· ॥२७॥

तथाऽन्यस्यां [4]पाण्डो· भार्यायां माद्र्यां नासत्यदस्रयोरश्विनोस्सकाशात् नकुलस्सहदेवश्चेति द्वौ सुतौ जातौ। पञ्चभ्यो युधिष्ठिरादिभ्यो द्रौपद्यामेकभार्यायां पञ्चपुत्रा अभवन् ते च अपितरः न केषाञ्चित्पितरः अपुत्रा एव सन्तो द्रौणिना हता इत्यर्थ ॥२८॥

अथ युधिष्ठिरात्प्रातिस्विकभार्यायां प्रतिविन्ध्यो जातः। वृकोदराद्भीमात् श्रुतसेनः, अर्जुनात्तु श्रुतकीर्तिः नाकुलिः नकुलसुतस्तु शतानीक ॥२९॥

हे राजन्! सहदेवसुत श्रुतकर्मा, तथा अपरे च भार्यान्तरे युधिष्ठिरादिभ्यो जाता इत्यर्थः। तानेव दर्शयति - युधिष्ठिरात्तु

---

1 B J add न तु 2 B J °तीयात् 3 A B J मणिपूरपते 4 T W omit पाडो

**पौरव्यां देवको जातः, भीमसेनात्तु हिडम्बायां घटोत्कचो जातः, काली चान्या भीमस्य भार्या तस्यां ततो भीमा त्सर्वगतो नाम पुत्रोऽभवत्। पार्वती पर्वतस्य पुत्री विजया नाम सहदेवात् सुहोत्रमसूत ॥३०,३१॥**

**नकुलः करेणुमत्यां वीरमित्रं जनयामास निरमित्रमिति पाठान्तरम्। तथाऽर्जुनोऽपि इरावत्यामिरावन्तं मणलूरुपते स्सुतायामुलूप्याम् - "अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलङ्कृताम्। अस्यां यो जायते पुत्रस्स मे पुत्रो भविष्यति" (मनु· स्मृ· 9-3) इत्युक्तविधभाषाबन्धनरूपपुत्रिकाधर्मेण दत्तायां बभ्रुवाहनश्चाऽसूत। अतस्तत्पुत्रोऽर्जुनपुत्रस्सन्नपि स बभ्रुवाहनः पुत्रिकासूत मातामहसुत इत्यर्थ· ॥३२॥**

**विज०** मुनिशापान्मैथुनरुद्धस्य मैथुने[1] मरणलक्षणविघ्नवत ॥२७॥

पञ्च पुत्रा· पूर्वजन्मनि पितर ॥२८॥

विविच्याऽऽह - युधिष्ठिरादिति। नाकुलिर्नकुलपुत्र ॥२९,३०॥

शर्वगतं शर्वत्रातम् ॥३१॥

मणिपूरपते· सुतायां सोऽपि बभ्रुवाहनोऽपि पुत्रिकासुतात्तस्य मणिपूरपते पुत्रोऽभूदिति शेष ॥३२॥

**तव तातः सुभद्रायामभिमन्युरजायत ।**
**सर्वातिरथजिद्वीर उत्तरायां ततो भवान् ॥३३॥**

**[2]परिक्षीणेषु कुरुषु द्रौणेर्ब्रह्मास्त्रतेजसा ।**
**[3]त्वन्तु कृष्णानुभावेन सजीवो मोचितोऽन्तकात् ॥३४॥**

**तवेमे तनयास्तात जनमेजयपूर्वकाः ।**
**श्रुतसेनो भीमसेन उग्रसेनश्च वीर्यवान् ॥३५॥**

**जनमेजयस्त्वां ज्ञात्वा[4] तक्षकान्निधनं गतम् ।**
**सर्पान्वै सर्पयागाग्नौ स होष्यति रुषाऽन्वितः ॥३६॥**

**कावषेयं पुरोधाय तुरं तुरगमेधयाट्[5] ।**
**समन्तामत्पृथिवीं सर्वां जित्वा यक्ष्यति चाऽध्वरैः ॥३७॥**

---

1 M °नम° 2 TW परी° 3 ABGJ त्वश्च 4 ABGJMMa विधित्वा 5 H V °धसा , MMa °धया।

**तस्य पुत्रश्शतानीको याज्ञवल्क्यात्त्रयीं पठन् ।**
**अस्त्रज्ञानं [1]क्रियाज्ञानं शौनकात्परमेष्यति ॥३८॥**

**सहस्रानीकस्तत्पुत्रस्ततश्चैवाऽश्वमेधजः ।**
**[2]असीमकृष्ण[3]स्तस्यासीत् [4]नेमिचक्रस्तु तत्सुतः[4] ॥३९॥**

**गजाह्वये हृते नद्या कौशाम्ब्यां साधु वत्स्यति ।**
**उक्तस्ततश्चित्ररथस्त[5]स्मा च्छुचिरथः सुतः ॥४०॥**

**श्रीध० कावषेयमिति**। तुरसंज्ञं पुरोहितं कृत्वा ॥३३-३७॥

भविष्यानाह - **तस्य पुत्र** इति यावत्समाप्ति। याज्ञवल्क्यात्क्रियाज्ञानं, परश्चाऽऽत्मानं शौनकात्प्राप्स्यति, अस्त्रज्ञानञ्च कृपाचार्यादिति द्रष्टव्यम्। "याज्ञवल्क्यात्त्रयी मधीत्य कृपादस्त्राण्यवा[6]प"

इति वैष्णवोक्तेः। क्वचित्तु अस्त्रज्ञानं कृपाचार्यादित्येव पाठः ॥३८-४०॥

**वीर०** तव परीक्षितः तातः पिता अभिमन्युरर्जुनात्सुभद्रायामजायतेति राजानं प्रति शुकोक्तित्वात्तवेत्युक्तम्। अभिमन्युं विशिनष्टि - सर्वानतिरथाञ्जितवानिति, तथा वीरः। तत अभिमन्योरुत्तरायां भवान् त्वं जातोऽसि ॥३३॥

कुरुषु दुर्योधनादिषु विनष्टेषु सत्सु क्रुद्धस्य द्रौणेरश्वत्थाम्नो ब्रह्मास्त्रतेजसा तत्प्रयुक्तब्रह्मास्त्रतेजसा, दग्धोऽपीति शेषः, त्वं कृष्णस्य भगवतोऽनुभावेन सजीव सप्राणः अन्तकान्मृत्योः मोचितोऽसि ॥३४॥

हे तात! राजन्! तव तनयास्तु इमे जनमेजयः पूर्वो ज्येष्ठो येषान्ते; श्रुतसेनो भीमसेनः उग्रसेनश्चेति चत्वारः ॥३५॥

तत्र जनमेजयादीनां भाविनं वृत्तान्तं वंशश्चाऽऽह - जनमेजयस्त्विद्यादिना यावत्समाप्ति। त्वां तक्षकान्निधनं प्राप्तं विदित्वा स त्वत्पुत्रो जनमेजयः रुषा युक्तः सर्पयागसम्बन्धिनि अग्नौ सर्पान् होष्यति ॥३६॥

किङ्कृत्वा? कावषेयं तुरं तुरसंज्ञं पुरोधाय पुरोहितं कृत्वा तु तथा तुरगमेधैरश्वमेधैः यक्ष्यतीति तथा भविता। कथं यष्टा? इत्यत्राऽऽह - सर्वतः पृथिवीं सर्वान् नृपान् जित्वा अश्वमेधैर्यक्ष्यति ॥३७॥

तस्य जनमेजयस्य पुत्रः शतानीको भविता । स च याज्ञवल्क्यात् त्रयीं वेदान् पठन् अधीयानः, कृपात् कृपाचार्यात्

---

1 TW पर॰ 2 MMa विस्रम्भ 3 ABGJMMa ॰स्तस्यापि 4-4 B निमिचक्रस्तु तत्सुत , HV निचकस्तत्सुतस्तत , TW निश्चक्रुस्तत्सुतस्स्मृत
5 ABGJ ॰स्मात् कविरथ 6 A B J प्य

अस्त्रज्ञानं, शौनकात्तु परं ज्ञानम् आत्मपरमात्मज्ञानम् एष्यति प्राप्स्यति। क्रियाज्ञानमिति पाठे शौनकादस्त्रज्ञानदित्रयं लप्स्यत इत्यर्थः। तत्र क्रियाज्ञानं यज्ञादिकर्मानुष्टानोपयुक्तं ज्ञानम् ॥३८॥

तत्पुत्रश्शतनीकपुत्रः सहस्रानीकः, तस्मात्तु अश्वमेधजः, तस्याप्यश्वमेधजस्याऽपि असीमकृष्णो भविता। तत्सुत· असीमकृष्णसुतः निश्चक्रुः ॥३९॥

तस्य तन्नाम्नि निमित्तमाह - गजाह्वये हस्तिनापुरे नद्या गङ्गया हृते नाशिते सति ततो निष्क्रम्य कौशाम्ब्यां साधु यथा तथा वत्स्यति वासं करिष्यति। ततो निश्चक्रोः उक्तः, तत उक्ताच्चित्ररथः, तस्माच्छुचिरथ· "उक्तस्ततो रथस्तस्मात्तस्मा च्चित्ररथस्सुतः" इति पाठान्तरम् ॥४०॥

**विज०** तवतातः तव पिता ॥३३-३५॥

निधनं मरणलक्षणं। सर्पयागविषयाग्नौ होष्यति होमं करिष्यति ॥३६॥

तुरगमेधया अश्वमेधया अश्वमेधयज्ञेन ॥३७॥

परम् पूर्णम् ।३८,३९॥

कौशाम्ब्यां पुर्यां वत्स्यति वासं करिष्यति ॥४०॥

**तस्माच्च [1] वृष्टिमांस्तस्य सुषेणोऽथ महीपतिः ।**
**[2] सुनीथस्तस्य भविता नृचक्षुर्यत् [3] सुखीनलः ॥४१॥**

**[4] परिप्लवस्सुतस्तस्मान्मेधावी सुनयात्मजः ।**
**नृपञ्जयस्ततो [5-] दूर्वो [-5] निमिस्तस्माज्जानिष्यति ॥४२॥**

**[6] निमेर्बृहद्रथस्तस्माच्छतानीकस्सुदासजः ।**
**शतानीकाद्दुर्दमनस्तस्यापत्यं [7] विहीनरः ॥४३॥**

**[8] दण्डपाणिर्निमिस्तस्य क्षेमको भविता नृपः ।**
**ब्रह्मक्षत्रस्य वै [9] योनिः वंशो देवर्षिसत्कृतः ॥४४॥**

---

1 MMa धृष्टि 2 HV सुपीत , TW सुनीत 3 HV सुखानिल 4 MMa 'पारि' 5--5 ABGJ दूर्वस्तिमि , MMa दुर्वस्तिमि 6 ABGJ तिमो' , MMa ततो 7 A.BGJ बहीनर , MMa प्रहीतर 8 HV 'र्मित , TW 'र्निधि 9 ABGJ प्रोक्तो

क्षेमकं प्राप्य राजानं संस्थां प्राप्स्यति वै कलौ । *

अथ मागधराजानो भाविनो[1] ये वदामि ते ॥४५॥

भविता सहदेवस्य मार्जारिर्यच्छ्रुतश्रवाः[2] ।

ततोऽयुतायुस्तस्याऽपि निरमित्रोऽथ तत्सुतः ॥४६॥

**श्रीध० तस्मादिति**। यद्यस्मात् सुखीनलः[3] पुत्रः ॥४१॥

**परिप्लव इति** । तस्मात्परिप्लवात्सुनयः, तस्याऽत्मजो मेधावीत्यर्थः ॥४२॥

**निमेरिति**। तस्मात्सुदास , ततश्शतानीक इत्यर्थ ॥४३-४५॥

**भवितेति**। बृहद्रथस्य जरासन्ध· तस्य सहदेवः, तस्य मार्जारि·, यत्[4] यस्मान्माजरिः श्रुतश्रवा· ॥४६॥

**वीर०** तस्माच्चित्ररथात् दृष्टिमान्, तस्मा द्दृष्टिमत· सुषेणो मह्याःपतिः सुतो भविता। तस्य सुषेणस्य सुनीथो भविता, तस्य च नृचक्षु·। यत् यस्मात् नृचक्षो· सुखीनलो भविता ॥४१॥

स च पारिप्लवस्सुतः, तस्य तथाःभूतः, तस्मात्पारिप्लवात् मेधावी स च सुनय आत्मजो यस्य तथाभूत·। यद्वा, पारिप्लवात्सुनय·, तस्याऽत्मजो मेधावीत्यर्थ·। तस्मान्नृपुञ्जयः तस्माच्च दूर्व· ततश्च निमिर्जनिष्यति ॥४२॥

निमेर्बृहद्रथः, तस्मात् बृहद्रथात् शतानीक· सुदासज· बृहद्रथात्सुदास· तस्मात् शतानीको जनिष्यत इत्यर्थ·। शतानीकात् दुर्दमन·, तस्य दुर्दमनस्य अपत्यं पुत्रस्तु विहीनरः ।।४३॥

तस्य दण्डपाणिः, तस्य तु निधि·, तस्य निधे क्षेमको नृपो भविता। तदेवं ब्रह्मक्षत्रस्य ब्रह्मक्षत्रकुलयायाानः कारणभूता वंश· सोमवंशः देवैः ऋषिभिश्च सत्कृत· अनुगृहीत· ॥४४॥

कलौ युगे क्षेमकं राजानं प्राप्य क्षेमकपर्यन्तमनुप्रवृत्त इत्यर्थ·। तत· संस्थां समाप्तिं प्राप्स्यति। अजमीढपौत्रस्य संवरणस्य सुत· कुरुः, तस्य परीक्षिदादय· चत्वारः। तत्र परीक्षिदनपत्य उक्तः। सुधनुर्जह्न्वोः वंशावुक्तौ। निषधस्य त्वनुक्त एव तत्रैव सुधनुर्वंशस्य बृहद्रथस्यैको वंशो जगुः अन्ते उक्त·। अन्यस्तु श्रुतश्रवपर्यन्त· इदानीं श्रुतश्रवः पितामहात् सहदेवात् मगधाधिपते र्भविष्यतो वंशान् वक्तुं प्रतिजानीते अथेति। मगधराजान·, मगधदेशाधिपतीन् भाविनः, ते तुभ्यं वदामि ॥४५॥

---

* The following extra half verse is found in M Ma Editions - पापानि कीर्तनादेषा विलय यान्ति कृत्स्नश 1 ABGJ भवितारो 2 MMa सोमापिर्यत्सुत' , TW मार्जाले यश्रुत' 3 H V सुखानिल 4 A B J Omit यत्

सहदेवस्य जरासन्धसुतस्य मार्जालेयः भाविता भविष्यति ततो मार्जालेयाच्छ्रुतश्रवाः। तत श्रुतश्रवसः अयुतायुः तस्याऽपि निरमित्रः। तत्सुत· निरमित्रसुतः सुनक्षत्रः, ततः सुनक्षत्रात्तुबृहत्सेनो भविता। अथ बृहत्सेनात्कर्मजित्, ततः कर्मजितः श्रुतञ्जय·, तस्य शुचिर्नाम विप्रो भविष्यति ॥४६,४७॥

**विज०** संस्थामवसानम् ॥४१-४६॥

**सुनक्षत्रः सुनक्षत्राद्[1] बृहत्सेनोऽथ कर्मजित् ।**
**ततस्सृतञ्जयो[2] विप्रः शुचिस्तस्य भविष्यति ॥४७॥**

**क्षेमोऽथ सुव्रतस्तस्मात् [3-]धर्मनेत्रश्श्रुतस्ततः[-3] ।**
**[4]दृढसेनोऽथ सुमतिः सुबलो जनिता ततः । ४८॥**

**सुनीथ[5]स्सत्यजिदथ विश्वजिच्च[6] पुरञ्जयः।**
**[7-]एते बार्हद्रथा भूपा[-7] भाव्याः साहस्रवत्सराः[8] ॥४९॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
नवमस्कन्धे द्वाविंशोऽध्याय· ॥२२॥

**श्रीध० सुनीथ** इति। सहस्रं[9] संवत्सरमेते भाव्या भूपाला·। तत परं भाव्यान् द्वादशस्कन्धे वक्ष्यति ॥४७-४९॥

इति श्रीमद्भागवते महापुराणे
श्रीश्रीधरस्वामिविरचिताया भावार्थदीपिकायां
व्यख्यायां नवमस्कन्धे द्वाविंशोऽध्याय ॥२२॥

**वीर०** तस्य शुचेः क्षेमो नाम राजन्यः, अथ क्षेमात्सुव्रत·, तस्मात्सुव्रतात् धर्मनेत्र· श्रुत· प्रख्यातः। ततो धर्मनेत्रात् दृढसेन·। अथ दृढसेनात्सुमतिः, ततः[10] सुमतेस्सुबलो[11] जनिता जनिष्यते ॥४७,४८॥

ततस्सुनीपः। अथ सुनीपात् सत्यजित्, तस्माद्विश्वजित्, तस्माच्च पुरञ्जयः। त एते सर्वे बार्हद्रथाः बृहद्रथवंश्याः सहस्रवत्सरान्तं भाव्या भाविनः। ततः पश्चाद्बार्हद्रथो वंश. संस्थामेष्यतीति भाव ॥४९॥

---

1 HV बृहत्क्षत्रोऽथ 2 ABGJ °तश्चयाद्विप्र 3--3 ABGJ धर्मसूत्र शम° , MMa धर्मसत्र श्रम° 4 ABGJ द्युमत्से° 5 HV °त , TW °प 6 ABGJMMa °द्यद्रिपुञ्जय 7--7 ABGJMMa बार्हद्रथाश्चभूपाला 8 ABGJMMa ०रम्। 9 ABGJ स्र 10 AT omit तत 11 W °ति

इति श्रीमद्भागवते महापुराणे
श्रीवीरराघवविदुषालिखितायां भागवतचन्द्रचन्द्रिकायां
व्यख्यायां नवमस्कन्धे द्वाविंशोऽध्यायः॥२२॥

**विज०** यत् यस्मात् रिपुञ्जयो भविता ॥४७-४९॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
नवमस्कन्धे द्वाविंशोऽध्याय· ॥२२॥

श्रीविजयध्जतीर्थरीत्या एकोनविंशोऽध्यायः ॥१९॥

# त्रयोविंशोऽध्यायः

श्रीशुक उवाच

अनोस्सभानरश्चक्षुः [1]परोक्षश्च त्रयस्सुताः ।
सभानरात्काल[2]नरः [3]सृञ्जय[4]स्तत्सुतस्ततः ॥१॥

जनमेजयस्तस्य पुत्रो [5]महाशालो महामनाः ।
उशीनरस्तितिक्षुश्च महामनस आत्मजौ ॥२॥

शिबि[6]र्वनः [7]क्रिमिर्दर्पश्चत्वारोशीनरात्मजाः ।
[8]वृषदर्भस्सुवीरश्च मद्रः [9]केकय आत्मजाः ॥३॥

शिवेश्चत्वार एवाऽऽसंस्तितिक्षोश्च [10]रुशद्रथः ।
ततो हेमोऽथ सुतपा बलिस्सुतपसोऽभवत् ॥४॥

अङ्गवङ्गकलिङ्गाद्याः [11]सिंह पुण्ड्रा[12]न्ध्रसंज्ञिकाः ।
जज्ञिरे दीर्घ[13]तपसो बलेः क्षेत्रे महीक्षितः ॥५॥

चक्रुः स्वनाम्ना विषयान् षडिमान् [14]प्राच्यकांश्च ते ।
[15]खनपानोऽङ्गतो जज्ञे तस्मा[16]द्धि विरथस्ततः ॥६॥

सुतो धर्मरथो यस्य जज्ञे [17]चित्ररथोऽप्रजाः ।
रोमपाद इति ख्यातस्तस्मै दशरथस्सखा ॥७॥

शान्तां सुकन्यां प्रायच्छदृश्यशृङ्ग उवाह ताम् ।
देवेऽवर्षति यं रामा आनिन्युर्हरिणीसुतम् ॥८॥

---

1 MMa परेक्षुश्च 2 H V °नाद , T W °नाभ 3 MMa स° 4 H V °स्तत्पुरञ्जय 5 ABGJMMa °शीलो 6 MMa °र्वे° 7 ABGJ शमिर्दक्ष° , MMa कृमिर्दक्ष° 8 A B G J वृषादर्भ° , H V वृषदर्प° 9 ABGJMMa कैकेय 10 MMa पृषद्रथ , T W वृषद्रथ 11 ABGJMMa सुह्म° 12 ABGJMMa °ता 13 ABGJ तमसो , T W तपसा 14 H V प्राप्यगा स्म ते , MMa प्राच्यकानिह 15 H V अनुमान गतो 16 ABGJMMa द्विवि° 17 Mma मित्र°

## श्रीश्रीधरस्वामि विरचिता भावार्थदीपिका

त्रयोविंशेत्वनो द्रुह्योस्तुर्वसोश्चान्वयः क्रमात्[1] । यदोश्च वंशोऽनुक्रांतो यावज्ज्यामघसम्भवः ॥

यद्वा : त्रयोविंशेऽन्वयानुक्त्वा शुकोनुप्रमुखैःकृतान् । ह्यामखावधिमाचक्तौ यदोर्वंशं महत्तरम् ॥

तदेवं ययातेः, पुत्त्रणां पञ्चमस्य पुरोर्वंशोऽनुक्रान्तः इदानीं चतुर्थस्य वंशमनुक्रामति - **अनोरित्यारभ्य**[2] - कर्णस्य जगतीपतेरित्यन्तेन ॥१॥

**जनमेजय** इति । तस्य जनमेजयस्य महाशालः[3]तस्य महामनाः ॥२॥

**शिबिरिति** । चत्वार उशीनरस्य आत्मजाः[4] । सन्धिरार्षः ॥३-८॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

तदेवं ययातेः पुत्राणां पञ्चमस्य पुरोर्वंशोऽध्यायत्रयेणानुक्रान्त· । इदानीं चतुर्थस्य वंशमनुक्रामति - **अनोरिति,** कर्णस्य जगतीपतेरित्यन्तेन । अनोर्ययातिपुत्रस्य चतुर्थस्य सभानरादयः त्रयस्सुता जज्ञिरे । तत्र सभानरात् कालनाभः, तत्सुतः कालनाभसुतः
[5] सृञ्जयस्तत· ।

जनमेजयः, तत्पुत्रो जनमेजयपुत्रो महाशाल·, तस्य महामनाः तस्य तु उशीनर· तितिक्षुश्चेति द्वावात्मजौ ॥१,२॥

तत्रोशीनरस्याऽऽत्मजाः शिबिप्रभृतयःचत्वार·, तत्र शिबेः वृषदर्भादयः चत्वार एवाऽऽत्मजा बभूवुः ॥३॥

तितिक्षोरुशीनरा[8]ऽनुजस्य तु वृषद्रथः ततो वृषद्रथात् हेमः, अथ हेमात् सुतपाः, सुतपसस्तु बलिः ॥४॥

तस्य बलेः क्षेत्रे कलत्रे दीर्घतपसा हेतुना अङ्गादिसंज्ञिकाः[9] सिंहादिसंज्ञकाश्च महीक्षितो भूपा जज्ञिरे ॥५॥

तत्राङ्गतः अङ्गात् खनपानो जज्ञे, तस्माद्धविरथः ॥६॥

तस्य सुतो धर्मरतो जज्ञे, यस्य धर्मरतस्य चित्ररथो जातः । स चाप्रजोऽनपत्यस्स एव चित्ररथो रोमपाद इति ख्यातः प्रसिद्ध· तस्मै रोमपादायाऽप्रजाय तस्य सखा दशरथः शान्तां नाम स्वस्य कन्यां प्रायच्छत् ददौ । **ताश्च कन्यां ऋश्यशृङ्ग** उवाह उपयेमे । कोऽसावृश्यशृङ्गः ? - इत्यपेक्षायां तं विशिनष्टि - यं हरिण्याः सुतं विभाण्डकादुत्पन्नं, **देवे पर्जन्ये अवर्षति सति वृष्ट्यर्थं** रामा गणिकाः नाट्यादिभिरुपायैरानिन्युः स ऋश्यशृङ्ग इत्यर्थः ॥७,८॥

---

1 Hv 'ख 2 ABJ रिति । 3 ABJ शील 4 ABJ 'नरात्म' 5 A B स' 6 A B 'यस्य पु' 7 A B 'शील' 8 A B 'यस्य पु' 9 A B 'ज्ञ'

**श्रीविजयध्वजतीर्थकृता पदरत्नावली**

ययातिपुत्रस्यानोर्वंशं विशिनष्टि अनोरिति ॥१-४॥

अङ्गादयो बलेः पुत्राः अङ्गादिविषयसमाना इति ज्ञायन्ते। क्षेत्रे भार्यायां, महीक्षित इत्यनेन ब्राह्मणकुलं व्यावर्तयति ॥५॥

प्राच्यकान् प्राचीविषयान् इह भुवि खनपानो नाम ॥६,७॥

अवर्षेति सति यमृश्यशृङ्गं. हरिणीसुतमिति। अनेन ऋश्यस्य सारङ्गस्य शृङ्गमिव शृङ्गं यस्य स तथा तमिति विग्रहं सूचयति ॥८॥

**नाट्यसङ्गीतवादित्रै[1]र्विभ्रमालिङ्ग[2]नादिभिः ।**
**स तु राज्ञोऽनपत्यस्य निरूप्येष्टिं[3] मरुत्वतः ॥९॥**

**प्रजामदाद्दशरथो येन लेभे[4]ऽप्रजाः[5] प्रजाः ।**
**चतुरङ्गो रोमपादात् पृथुलाक्षस्तु तत्सुतः ॥१०॥**

**बृहद्रथो बृहत्कर्मा बृहद्भानुश्च तत्सुताः ।**
**[6]ततो बृहन्मनास्तस्माज्जयद्रथ उदाहृतः ॥११॥**

**विजयस्तस्य सम्भूत्यां [7-]धृतिस्तस्य धृतव्रतः[-7] ।**
**[8-]सत्यकर्माभवत्तस्य[-8] [9-]सत्कर्माऽधिरथस्ततः ॥१२॥**

**योऽसौ गङ्गातटे क्रीडन् मञ्जूषान्तर्गतं शिशुम् ।**
**कुन्त्याऽपविद्धं कानीनमनपत्योऽकरोत्सुतम् ॥१३॥**

**वृषसेनस्सुतस्तस्य कर्णस्य जगतीपतेः ।**
**द्रुह्योऽ[10]स्तु तनयो बभ्रुः सेतुस्तस्याऽऽत्मजस्ततः ॥१४॥**

**आरब्धस्तस्य गान्धारस्तस्य [11-]धर्मस्ततो धृ[-11]तः ।**
**[12]धृतस्य [13]दुर्मदस्तस्मात् [14]प्रचेताः तत्सुताः शतम् ॥१५॥**

---

1 ABGJ MMa वाद्य 2 ABGJMMa नार्हणै । 3 H V 'त्पते 4 MMa 'ज 5 TW प्रजाम्। 6 ABGJ आद्याद्र' 7- -7 ABGJMMa ततो धृतिरजायत 8- -8 ABGJMMa ततो धृतव्रतस्तस्य 9- -9 H V पुत्रश्चातिरथस्तत , MMa सधर्माधिरथस्तत , TW प्रत्रश्चाऽथरथस्तत 10 MMa 'श्च 11- -11 ABGJMMa धर्मस्ततो धृत 12 ABGJMMa धृ' 13 ABGJ दुर्मना' , MMa कर्दम' 14 ABGJMMa प्राचेतस

**म्लेच्छाधिपतयोऽभूवन्नुदीचीं दिशमाश्रिताः ।**
**तुर्वसोस्तु[1] सुतो वह्निर्वह्नेर्भर्गो[2]ऽथ भानुमान् ॥१६॥**

**श्रीध०** ९-१६ श्लोकानां श्रीधरीयव्याख्या नाऽस्ति

**वीर०** कथं दशरथः स्वकन्यां अदादित्यत्राऽऽह - **सत्विति**। स तु दशरथः मरुत्वतः। इष्टिं मरुत्वद्देवताकामिष्टिं निरूप्य अनपत्यस्य राज्ञो रोमपादस्य सख्याद्धेतो स्वां कन्यां शान्ताख्यामदात्, येन दशरथदत्तेन शान्तारूपेणापत्येन अप्रजोऽपि रोमपादः प्रजां लेभे; सुप्रजा बभूवेत्यर्थः। रोमपादात्तु चतुरङ्गः, तत्सुत श्चतुरङ्गसुतः पृथुलाक्षः ॥९,१०॥

तत्सुताः पृथुलाक्षसुता बृहद्रथादयस्त्रय । तत्र आद्यात् बृहद्रथात् बृहन्मनाः, तस्मात् बृहन्मनसः जयद्रथ उदाहृतः ॥११॥

तस्य [3-]जयद्रथस्य[-3] सम्भूत्यां भार्यायां विजय ततो विजयाद्धृतिः, अजायत। ततो धृतेर्धृतव्रतः, तस्य धृतव्रतस्य सत्यकर्मा, ततस्सत्यकर्मणो रथः ॥१२॥

तं विशिनष्टि - योऽसौ रथ कुन्त्या पाण्डोर्भार्यया कानीनं कन्यावस्थावस्थितायाः स्वस्याः जातमपविद्धं , त्यक्तं मञ्जूषायां निक्षिप्येति शेषः। शिशुं मञ्जूषान्तर्गतं पेटिकायां स्थितं कर्णाख्यं गङ्गातटे क्रीडन् अनपत्यस्सन् सुतमकरोत्स रथ इत्यर्थ ॥१३॥

तस्य रथेन स्वीकृतस्य कर्णाख्यस्य जगतीपतेर्भूपालस्य सुतो वृषसेनः। अथ ययातेस्तृतीयपुत्रस्य[4] द्रुह्योर्वंशमनुक्रामति द्रुह्योश्चेति द्वाभ्याम्। द्रुह्योर्बभ्रु तस्य बभ्रोरात्मजस्सेतुः ॥१४॥

ततः सेतोरारब्धः, तस्य तु [5-]गान्धार[-5] , तस्य गान्धारस्य घर्मस्सुतः[6], ततो घर्मात्[7] घृतो[8] जज्ञे, घृतस्य[9] सुतो दुर्मदः, तस्माद्दुर्मदात् प्रचेता जज्ञे, प्रचेतस्सुतास्तु शतम्। ते च उदीचीं दिशमाश्रितास्सन्तो म्लेच्छानामधिपतयो बभूवुः। अथ ययातिसुतस्य द्वितीयस्यान्वयमनुक्रामति - तुर्वसोस्त्विति द्वाभ्याम्। तुर्वसोस्सुतो वह्निः वह्नेस्तु भागः, अथ भागा द्वह्निमान् ॥१५.१६॥

**विज०** निरूप्य विचित्ये[10] मरुत्वतः इष्टिं इन्द्रविषयामिष्टिम् ॥९॥

येन इष्टिविशेषेण ॥१०,११॥

---

1 ABGJ °श्च 2 ABGHJV भर्गोऽथ 3-3 AB omit 4 A B °यस्य सुतस्य 5-5 A B omit 6 AB ध° 7 AB ध° 8 A B धृ° 9 A B धृ
10 A.B Ma न्त्य

अपविद्धम् अज्ञातवद्विसृष्टं, कानीनं कन्यायां जातम् ॥१२॥

ययातिपुत्रस्य द्रुह्योर्वंशं निरूपयति - **द्रुह्योश्चेति** ॥१४,१५॥

ययातिपुत्रस्य तुर्वसोर्वंशं कथयति - **तुर्वसोरिति** ॥१६॥

**त्रिभानुस्तत्सुतोऽस्यापि[1] करन्धम उदारधीः ।**
**मरुत्त[2]स्तत्सुतो[3]ऽपुत्रः पुत्रं पौरवमन्वभूत्[4] ॥१७॥**

**दुष्यन्तं[5] स पुनर्भेजे [6-]स्वं वंशं राज्य[-6]कामुकः ।**
**ययातेर्ज्येष्ठपुत्रस्य यदोर्वंशं नरर्षभ! ॥१८॥**

**वर्णयामि महापुण्यं सर्वपापहरं नृणाम्[7] ।**
**यदोर्वंशं नरःश्रुत्वा सर्वपापैः[8] प्रमुच्यते ॥१९॥**

**यत्राऽवतीर्णो भगवान् परमात्मा नराकृतिः ।**
**यदोस्सहस्रजित्क्रोष्टुः[9] नलो रिपुरिति श्रुताः ॥२०॥**

**चत्वारस्सूनवस्तत्र[10] शतजित्प्रथमात्मजः ।**
**महाहयो वेणुहयो [11]हेहयश्चेति तत्सुताः ॥२१॥**

**धर्मस्तु [12]हेहयसुतो नेत्रः कुन्तेः पिता ततः ।**
**सो[13]हञ्जिरभवत्कुन्तेः महिष्मान्[14] भद्रसेनकः ॥२२॥**

**दुर्मदो भद्रसेनस्य धनकः[15] कृतवीर्यसूः[16] ।**
**[17]कृताग्निः कृतवर्मा च कृतौजा [18]धनकात्मजाः ॥२३।**

**अर्जुनः कृतवीर्यस्य सप्तद्वीपेश्वरोऽभवत् ।**
**दत्तात्रेयाद्धरेरंशात् प्राप्तयोगमहागुणः ॥२४॥**

---

1 H V त्रिसानु॰ , MMa नृभानु॰ , TW सुभानु॰ 2 ABGJMMa ॰त॰ 3 MMa त्सुत पुत्र 4 H V ॰गात् 5 ABGJ ॰न्तस्स॰ 6--6 ABGJ स्वं वश राज्य , MMa स्वय साम्राज्य 7 MMa नृप । 8 M Ma पापैर्वि॰ 9 ABGJMMa ॰ष्टा 10 MMa ॰स्तस्य 11 ABGJMMa है॰ 12.ABGJM Ma है 13 H V ॰भ॰ 14 MMa महिष्या॰ 15 H V धनिक 16 MMa ॰का 17 MMa कृत्याग्नि 18 H V धनि॰

**श्रीध० दुष्यन्तमिति** । स दुष्यन्तः । स्ववंशं[1] पौरववंशम्[2] ॥१७-२०॥

**चत्वारः इति** । प्रथमस्य सहस्रजित आत्मजः ॥२१॥

**धर्म इति** । कुन्तेः सोभञ्जि[3], सोभञ्जेर्माहिष्मान्[4] महिष्मतो भद्रसेनकः ॥२२॥

**दुर्मद इति** । भद्रसेनस्य[5] दुर्मदो, धनिकश्चेति[6] द्वौ पुत्रौ । कृतवीर्यसूः कृतवीर्यस्य जनकः । कृतवीर्यादयश्चत्वारो धनिक[7] स्याऽऽत्मजा इत्यर्थ ॥२३,२४॥

**वीर०** तत्सुतो वह्निमत्सुत सुभानुः । अस्याऽपि सुभानोरपि करन्धम, स च उदारा धीर्यस्य तथाभूत । तत्सुत[8] करन्धमसुतः मरुत्त स चाऽपुत्रस्सन् पौरवं पूरोर्वंशे जातं दुष्यन्तं पुत्रमन्वभूत् प्राप्तवान् तं स्वीकृतवान् इत्यर्थः ॥१७॥

स च दुष्यन्त राज्यकामुकस्सन् स्ववंशं जनकवंशमेव भेजेऽन्ववर्तत । अथ यदोर्वंशं वक्तुं प्रतिजानन् तत्र शुश्रूषा मुत्पादयति - **ययातेरिति** द्वाभ्याम् । हे नरर्षभ! ययातेर्योज्येष्ठ पुत्रस्तस्य यदोर्वंशं वर्णयामि अनुक्रमिष्यामि । कथम्भूतम्? महापुण्यं वदतां शृण्वताञ्च नृणां पुण्यावहं पापहरञ्च । तस्य पापहरत्वमेव सहेतुकमुपपादयति - यदोर्वंशं श्रुत्वा नरः सर्वैः पापै प्रमुच्यते निर्मुक्तो भवति, यत्र यदोर्वंशे भगवान् षाड्गुण्यपूर्ण परमात्मा नरस्याकृऽऽतिरिवाऽकृतिराकारो यस्य तथाभूतोऽवतीर्णः, श्रीकृष्णरूपेणेति भावः । यदो सूनवस्सुता सहस्रजिदादयश्चत्वार श्रुताः विश्रुता ॥१८-२०॥

तत्र चतुर्णां मध्ये प्रथमात्मज, प्रथमस्य सहस्रजित आत्मज शतजित् । तत्सुताः शतजित्सुताः महाहयादयः त्रयः, तत्र हैहयस्य सुतो धर्म, ततो धर्मान्नेत्रो जज्ञे, स च कुन्ते पिता, सोऽपि कुन्तिरिति प्रसिद्ध इति भाव । कुन्ते नेत्रापरनामधेयात् सोहञ्जिरभूत् । ततो महिष्मान् ततश्च भद्रसेनक ॥२१,२२॥

भद्रसेनकस्य तु दुर्मदो धनकश्चेति द्वौ पुत्रौ । तत्र धनक कृतवीर्यसू. कृतवीर्यं सुषुवे इति । तथा[9] कृतवीर्यस्य पितेत्यर्थ । न केवलं कृतवीर्यसूरेव, किन्तु कृताग्न्यादयोऽपि त्रयस्तदात्मजा धनकस्याऽऽत्मजाः कृतवीर्यादयश्चत्वारो धनकस्याऽत्मजा इत्यर्थ. । तत्र कृतवीर्यसुतोऽर्जन कार्तवीर्य इति प्रसिद्ध स च सप्तानां दीपानामीश्वरोऽधिपतिर्बभूव, तं विशिनष्टि - हरे रंशावताररूपाद्दत्तात्रेयात्प्राप्तो योग, गुणा अणिमादयश्च येन स ॥२३,२४॥

**विजि०** सूचीकटाहन्यायेन द्रुह्यादीनां पुत्राणां वंशं कथयित्वा बहुलत्वाद्विशेषपुण्यहेतुत्वाच्च ज्येष्ठपुत्रस्य यदोर्वंशं कथयति - **ययातेरिति** ॥१७-२४॥

---

1 ABJ स्व वश 2 ABJ 'रव' 3 ABJ 'ह' 4 ABJ 'ह' 5 H V तस्य 6 ABJ 'न' 7 ABJ 'न' 8 TW omit तत्सुत 9 AB omit तथा

न नूनं कार्तवीर्यस्य गतिं यास्यन्ति पार्थिवाः ।
यज्ञदानतपोयोगैः[1] श्रुतवीर्यजयादिभिः ॥२५॥

पञ्चाशीतिसहस्राणि ह्यव्याहतबलस्समाः ।
[2-]अकरोदर्जुनो राज्यं हरिं चैवान्वहं स्मरन्[2]
अनष्टवित्तस्मरणो बुभुजेऽक्षय्यषड्वसु ॥२६॥

तस्य पुत्रसहस्रस्य[3] पञ्चैवोर्वरिता[4] मृधे ।
जयध्वज श्शूरसेनो वृषणो[5] मधुरूर्जितः ॥२७॥

जयध्वजात्तालजङ्घः तस्य पुत्रशतन्त्वभूत् ।
क्षत्रं यत्तालजङ्घाख्यमौर्वतेजोपसंहृतम् ॥२८॥

तेषां ज्येष्ठो वीतिहोत्रो वृष्णिः पुत्रो मधोः स्मृतः ।
तस्य पुत्रशतन्त्वासीत् वृष्णिज्येष्ठं यतः कुलम् ॥२९॥

माधवा वृष्णयो राजन्! यादवाश्चेति संज्ञिताः[6] ।
यदुपुत्रस्य च क्रोष्टोः पुत्रो वृजिनवांस्ततः ॥३०॥

[7]श्वाहिस्ततो रुशेकुर्वै[-7] तस्य चित्ररथस्ततः
[8]शशिबिन्दुर्महायोगी महाभागो[9] महानभूत् ॥३१॥

चतुर्दशमहारत्नश्चक्रवर्त्यपराजितः ।
तस्य पत्नीसहस्राणि[10] दशाऽऽसन्[11] स महायशाः ॥३२॥

**श्रीध० पञ्चेति।** अनष्टमविनाशं वित्तं येन तथाविधं स्मरणं यस्य स·। अक्षय्यं षड्वसु षडिन्द्रियविषयं बुभुजे ॥२५,२७॥

**जयेति।** और्वस्य तेजसा सगरेणोपसंहृतमित्यर्थः ॥२८॥

---

1 ABGJ योग 2--2 ABGJ omit 3 ABGJ °हस्रेषु , MMa °हस्राणा 4 Hv पञ्चैवप्रथिता 5 ABGJ वृषभो , MMa ऋषभो 6 H MMaTVW °तम् 7--7 HV श्वाहितो भेरुशेकुर्वै, MMa वाहिस्ततो रुशेकुर्वै , TW श्वाहितोऽतोरुशङ्कुर्वै 8 ABGJMMa शश° 9 ABGJMMa °भो 10 ABGJMMa °स्राणा° 11 ABGJ दशानां सु° , MMa दशासन् सु°

**तेषामिति**। तेषां तालजङ्घपुत्राणां ज्येष्ठः। तस्य मधोः पुत्रशतम्। वृष्णिर्ज्येष्ठो यस्मिन्। [1-] यतो मधोः वृष्णेर्यदोश्च हेतोः इदं कुलम् [-1] ॥२९-३१॥

**चतुर्दशेति**। चतुर्दशमहारत्नानि तत्तज्जातिश्रेष्ठानि यस्य सः। तानि च मार्कण्डेयपुराणे वर्णितानि - "गजवाजिरथास्त्रेषुनिधिमाल्याम्बरद्रुमाः। शक्तिपाशमणिच्छत्रविमानानि चतुर्दश"॥ इति दशानां पत्नीसहस्राणां भार्यायुतस्य प्रत्येकं लक्षं लक्षमित्येवं तासु पुत्राणां दशलक्षसहस्राणि जनयामास ॥३२॥

**वीर०** किं बहुना। सर्वे पार्थिवाः सम्भूयाऽपि यज्ञादिभिः श्रुतादिभिश्च कार्तवीर्यस्य गतिं प्रकारं साम्यं नूनं ध्रुवं न यास्यन्ति। किञ्च। अव्याहतं बलं यस्य सोऽर्जुनः पञ्चाशीतिसहस्राणि समा वर्षाणि राज्यमकरोत्। कथम्भूतः? हरिं दत्तात्रेय मनुस्मरन्। किञ्च अनष्टमविनाशं वित्तं येन तथाविधं स्मरणं यस्य तथा, यस्य स्मरणाद्विनष्टमपि वित्तं पुनर्लभ्यते तथाभूत इत्यर्थः। अक्षय्यषड्वसु षडिन्द्रियविषयसुखम् ॥२५,२६॥

तस्य कार्तवीर्यस्य यत्पुत्राणां सहस्रं तस्य तत्र जयध्वजादयः पञ्चैव मृधे युधि उर्वरिता अवशेषिताः, इतरे तु भार्गवरामेण हता इत्यर्थः। तत्र जयध्वजात्तालजङ्घः, तस्य तालजङ्घस्य तु पुत्रशतमभूत्। यच्छतसंख्याकं तालजङ्घाख्यं क्षत्रं क्षत्रियाः और्वस्य ऋषेः तेजसा [2] और्वतेज उपबृंहितेन सगरेणेत्यर्थः। उपसंहृतं विनाशितम् ॥२७,२८॥

तेषां तालजङ्घपुत्राणां ज्येष्ठो वीतिहोत्रः, तस्य सुतो मधुः स्मृतः प्रख्यातः। मधोस्सुतस्तु वृष्णिः प्रख्यातः, न केवलं वृष्णिरेव अपि तु वृष्णिर्ज्येष्ठो यस्मिन्, तत्पुत्राणां शतं तस्य मधोरासीदित्यर्थः। 'वृष्णिः पुत्रो मधोः सुतः' इति पाठान्तरम्। तदा तेषां तालजङ्घपुत्राणां ज्येष्ठस्सुतो वीतिहोत्रः। तस्य तु मधुः तस्य च वृष्णिरित्यन्वयः, इतरत्पूर्ववत्। यतो मधोः कुलं माधवाख्यं क्षत्रकुलं प्रवृत्तं, यस्य मधोः वृष्णिज्येष्ठं पुत्रशतमभूदित्यर्थः। वृष्णिज्येष्ठमित्यनेन पुत्रशतस्यापि वृष्ण्याख्यत्वमभिप्रेतम् यदुवंशजत्वा द्यादवाख्यत्वञ्च ॥२९॥

[3] तदेतदाऽऽह - **माधवा** इति। मधोः पुत्रास्सर्वे माधवाः माधवनामानः, मधोः प्रसूतत्वादिति भावः। वृष्णयः वृष्णिज्येष्ठत्वादिति भावः। हे राजन्! यादवाश्च यदुवंशजत्वादिति भावः। एवं यदो ज्येष्ठपुत्रस्य वंश उक्तः। अथ द्वितीयस्य वंश [4] मनुक्रामति-यदुपुत्रस्येत्यादिना। यदुपुत्रस्य क्रोष्टोः पुत्रो वृजिनवान् ॥३०॥

ततः वृजिनवतः श्वाहितः, अतः श्वाहितात् उरुशङ्कुः अभिभूस्तत्कुशेकुर्वा इति पाठान्तरम्। तदा तत्तस्मादभिभुवः कुशेकुरित्यर्थः। तस्य तु चित्ररथः, ततश्चित्ररथात् शशिबिन्दुरभूत्। तं विशिनष्टि - महायोगी, महान् [5] भागो यस्य सः, महान्, गुणै रिति शेषः ॥३१॥

---

1- -1 HV omit 2 AB omit और्वतेज 3 AB 'देवाऽऽह 4 AB अन्वयम' 5 AB भोगो

चतुर्दशमहारत्नानि तत्तज्जातिश्रेष्ठानि यस्य स· तानि च मार्कण्टडेयपुराणे दर्शितानि "गजवाजिरथास्त्रेषुनिधिमालाम्बरद्रुमाः।[1] शक्तिपाशमणिच्छत्रविमानानि चतुर्दश"॥ इति। चक्रवर्ती सप्तद्वीपाधिपति· अपराजितः जयी। तस्य शशिबिन्दोस्सम्बन्धिनां[2] पत्नीसहस्राणां दशानां भार्यायुतस्येत्यर्थ·। तेषां प्रत्येकं लक्षलक्षमित्येवं तासु महायशा· शशिबिन्दु· ॥३२॥

**विज०** अनष्टं अविच्छिन्नं विष्णुस्मरणं यस्य स तथा। सन्ततविष्णुस्मरणोपेत· षष्ठांशं वसु षड्वसु, षड्भ्यो गुणेभ्यो लब्धं यद्वसु तत् षड्वसु वा ॥२५-२८॥

औौर्वमुने· तेजसोपसंहृतम् ॥२९-३२॥

**दशलक्षसहस्राणि पुत्राणां तास्वजीजनत् ।**
**तेषान्तु षट्प्रधानानां पृथुश्रवस आत्मजा[3]: ॥३३॥**

**धर्मो नामोशना तस्य हयमेधशतस्य याट् ।**
**तत्सुतो रुचकस्तस्य पञ्चाऽऽसन्नात्मजाः शृणु ॥३४॥**

**पुरुचि द्रुक्[4]मरुक्मेषु पृथुज्यामघसंज्ञिताः ।**
**ज्यामघस्त्वप्रजा[5]ऽप्यन्यां भार्यां शैब्यापतिर्भयात् ॥३५॥**

**नाविन्दच्छत्रुभवनात् भोज्यां कन्यामहारषीत् ।**
**रथस्थां तां निरीक्ष्याऽऽह शैब्यापतिममर्षिता ॥३६॥**

**केयं कुहकमत्स्थानं रथामारोपितेति वै।**
**स्नुषा तवेत्यभिहिते स्मयन्ती पतिमब्रवीत् ॥३७॥**

**अहं वन्ध्या सपत्नी च स्नुषा[7] युज्येत मे कथम् ।**
**जनयिष्यसि[8] यं राज्ञि तस्येयमुपपत्स्यते ॥३८॥**

**अन्वमो[9]दन्त तद्विश्वे देवाः पितर एव च ।**
**शैब्या गर्भमधात्काले कुमारं सुषुवे शुभम् ॥**
**स विदर्भ इति प्रोक्त उपयेमे स्नुषां सतीम् ॥३९॥**

---

1 AB शश॰ 2 AB शश॰ 3 ABGJMMa ॰ज 4 HV द्रुम॰ 5 HV प्रजा ह्य॰, TW प्रजो ह्य॰ 6-6 HV भ्रष्ठां कन्यां समाहरत्, MMa कन्या भ्रष्ठा महार्षीत्, TW भोज्या कन्यामहार्षित्। 7 ABGJ मे युज्यते 8 ABGJ युज्यते, HV लप्स्यते 9 TW ॰दत सा विश्वे

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
**नवमस्कन्धे त्रयोविंशोऽध्याय· ॥२३॥**

**श्रीध० दशेति।** [1-]शतकोटिसंख्याकान् पुत्रान् इत्यर्थः[-1]। जनयामास। पृथुश्रवाः पृथुकीर्तिः पृथुयश इत्यादयः षट् प्रधानाः श्रेष्ठाः येषां तेषां मध्ये ॥३३॥

**धर्म इति।** पञ्च आत्मजा आसन् [2]तान् शृणु ॥३४॥

तानेवाऽह - **पुरुजिदिति॥** भार्याभयादेवैकभार्यस्य वन्ध्यापतेर्ज्याम[3]घस्याऽपुत्रस्य, **तद्द्वयमेव** पुत्रपदमभवदिति दर्शयन्नाऽऽह - ज्याम[4]खस्त्विति ॥३५-३७॥

**अहमिति।** यदि मे सपत्नी स्यात्तर्हि स्नुषेयं युज्येताऽपि न त्वेददस्तीत्याह - असपत्नी चेति। अतिभयव्याकुल आह - जनयिष्यसीति ॥३८॥

**अन्वमोदन्त इति।** भार्याभयप्रकम्पमान[5]स्विन्नसर्वाङ्गस्य राज्ञः प्राणसङ्कटमालेक्य अनुकम्पितास्तेन पूर्वं बहुकालमाराधिताश्च विश्वेदेवाः पितरश्च तथेत्यन्वमोदन्त। ततश्च देवताप्रसादेन जनयिष्यसीति प्रतिवचनमुहूर्तगुणेन च निवृत्तरजस्काऽपि शैब्या गर्भमधात्। तस्य च महिमा पराशरादिभिरुक्तः। यथोक्तम्- "भार्यावश्यास्तु ये केचित् भविष्यन्त्यथवा मृताः। तेषान्तु ज्याम[6]खः श्रेष्ठः शैब्यापतिरभून्नृप' विष्णु पु: 4-12-13 इति ॥३९॥

इति श्रीमद्भागवते महापुराणे
श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्यख्यायां नवमस्कन्धे त्रयोविंशोऽध्याय ॥२३॥

**वीर०** पुत्राणां दशलक्षसहस्राणि जनयामास, पृथुश्रवा· पृथुकीर्ति·। पृथुयशाः इत्यादयः षट् प्रधानाः श्रेष्ठाः येषां तेषां मध्ये यो धर्मो नाम तस्य धर्मस्य उशना सुत । स च हयमेधशतस्य याट् यष्टा। तत्सुतः उशनस्सुतो रुचक·, तस्य पञ्चाऽऽत्मजा आसन् तान् शृणु ॥३३,३४॥

तानेवाऽऽह - पुरुजिच्च रुक्मश्च रुक्मेषुश्च पृथुश्च ज्याम[7]घश्चेति संज्ञिनः। तत्र ज्यामघः शैब्यायाः पति· अप्रजः अपुत्रस्सन् भार्याभयात् अन्यां भार्याम् ॥३५॥

नाविन्दत् न लेभे। एवं स्थिते स कदाचित् शत्रून् विजित्य तेषां भवनात् काञ्चित्कन्यां भोज्यां भुजिष्यामुपभार्यार्थ

1- -1 A.B J omit 2 H V omit तान् 3 ABJ 'ख' 4 A.B J 'घ' 5 ABJ खि' 6 ABJ 'घ 7 AB 'ख'

मिति यावत्। अहार्षीत् आनिन्ये। तां रथे स्थितां कन्यामालोक्य शैब्याऽमर्षिता सती पतिं ज्यामघमाह - किमिति? हे कुहक वञ्चक! मत्स्थानं मदुपवेशयोग्यं[1] स्थानमियं कथमारोपिता इति। ततस्तस्या भयात् ज्यामघ·तव स्नुषेयमानीतेत्युक्ते सति पतिं स्मयन्ती सती शैब्योवाच ॥३६,३७॥

किमिति? अहं वन्ध्या असपत्नी अविद्यमाना सपत्नी यस्यास्तथाभूता च। अतो मे मम स्नुषा कथं युज्येत उपपद्येत? इति। ततस्तां ज्यामघ आह - हे राज्ञि! त्वं यं पुत्रं जनयिष्यसि तस्येयं भार्या सती उपपत्स्यते, तव स्नुषा भविष्यतीति । तत सा शैब्या अन्वमोदत तथैवेत्यङ्गीचकार। तदा भार्या भयप्रकम्पमानस्विन्नसर्वाङ्गस्य राज्ञः प्राणसंङ्कटमालोक्याऽनुकम्पिताः, तेन पूर्वं बहुकालमाराधिताः विश्वे देवाः पितरश्च तथाऽस्त्वित्यन्वमोदन्त। ततश्च देवताप्रसादेन, जनयिष्यसीति वचनमुहूर्तगुणेन निवृत्तरजस्काऽपि शैब्या गर्भमधात् धृतवती। ततस्सा प्राप्तकाले शुभलक्षणं कुमारं सुषुवे। स च कुमारो विदर्भ इति प्रोक्त. प्रख्यात । ततः शैब्या स्नुषां उपयेमे उपयमयामास । ज्यामघस्य महिमा तु पराशरादिभिरुक्तः; यथोक्तम् - "भार्या वश्यास्तु ये केचित् भविष्यन्ति तथा मृता.। तेषां वै ज्यामघ श्रेष्ठ. शैब्यापतिरभून्नृप (विष्णु पु. 4-12-13) इति ॥ ३७,३९॥

इति श्रीमद्भागवते नवमस्कन्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां त्रयोविंशोऽध्याय ॥२३॥

**विज०** युद्धे भ्रष्टाम् ॥३३-३७॥

असपत्नी सपत्नीरहिता ॥३८॥

स्नुषां पूर्वं स्नुषेत्यभिहिताम् ॥३९॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
नवमस्कन्धे त्रयोविंशोऽध्याय ॥२३॥

(विजयध्वजरीत्या विंशोऽध्याय ॥२३॥)

1 TW omit योग्य

# चतुर्विंशोऽध्यायः

श्रीशुक उवाच

तस्यां विदर्भोऽजनयत् पुत्रौ नाम्ना कुश[1] क्रथौ ।
तृतीयं रोमपादश्च वैदर्भ[2]कुलनन्दनम् ॥१॥

रोमपादसुतो बभ्रुर्बभ्रोः [3] कृतिरजायत ।
[4] उशिकस्तत्सुतस्तस्माच्चेदिश्चैद्यादयो [5] नृपाः ॥२॥

[6] क्रथस्य कुन्तिः पुत्रोऽभूत् [7] धृष्टिस्तस्याऽथ निर्वृतिः ।
ततो द[8]शार्हो नाम्नाऽभूत्तस्य व्योमस्सुतस्ततः ॥३॥

जीमूतो विकृतिस्तस्य यस्य [9] भीमरथस्सुतः ।
ततो नवरथः पुत्रो जातो दशरथस्ततः ॥४॥

[10-] करम्भिश्शकुनेः पुत्रो[-10] देवरातस्तदात्मजः ।
देवक्षत्र[11]स्ततस्तस्य मधुः [12] कुरुवशादनुः ॥५॥

[13-] पुरुहोत्रस्त्वनोः पुत्रः[13] [14] तस्यायुःसात्वतस्ततः[14] ।
भजमानो भजि[15]र्दिव्यो वृष्णिर्देवा [16] पृथोऽन्धकः ॥६॥

[17] सात्वतस्य सुतास्सप्त महाभोजश्च मारिष ।
भजमानस्य [18] निम्रोचिः [19] कङ्कणो [20] वृष्णिरेव च ॥७॥

एकस्यामात्मजाः पत्न्यामन्यस्यां च त्रयस्सुताः ।
[21] शतजिच्च [22] सहस्रजि [23-] दयुतजिदिति प्र[-23]भो ॥८॥

---

1 HV क्रुथौ 2 ABGJ विदर्भ , MMa वैदर्भे 3 TW क्रतु॰ 4 TW कु॰ 5 ABGJ नृप , MMa यत 6 HV क्रु॰ 7 MMa ॰भूद्वलिस्त॰ , TW ॰भूद्वृष्णिस्त॰ 8 MMa ॰शार्हनामाऽथ , HV ॰शार्हो नाम्नाऽस्य 9 TW तीव्र॰ 10--10 HV शकुनि तत्सुत कुन्ति , TW करम्भ श्शकुने पुत्रो 11 MMa ॰स्त्वस्य॰ 12 HV कुरुवशस्त्वनु , MMa कुकूरकस्तत , TW कुकुरकस्तत 13--13 HV पुरुहूतस्त्वनो पुत्र , TW पुरुहोत्रोऽभवत्पुत्र 14--14 HV तस्याशु , MMa तस्यायु सत्त्वतस्तत । , TW तस्याभूत्सात्वतस्तत 15 TW दीप्तो 16 ABGJMMa ॰वृ॰ 17 MMa स॰ 18 ABGJMMa निम्लोचि 19 ABGJ किङ्किणो धृष्टि॰ 20 MMa किङ्कणो धृष्टि॰ 21 ABGJMMa ॰ता॰ 22 ABGJMMa ॰स्रा॰ 23 ABGJMMa दयुताजिदिति प्रभो , HV तथायुतजिदेव च

## श्रीश्रीधरस्वमिविरचिता भावर्थदीपिका

चतुर्विंशे विदर्भस्य पुत्रत्रयसमुद्भवा· । वंशा नानामुखा प्रोक्ता रामकृष्णोद्भवावधि ॥

यद्वा - चतुर्विंशे विदर्भादि वर्ण्यते यदुजान्वय । यत्रासीद्भगवान् ख्याते वृष्ण्यन्धकमुखैर्नृपैः ॥

**रोमपादेति।** चैद्यादयो दमघोषादय ॥१-३॥

**जीमूत इति।** ततो दशरथाच्छकुनिः [1] तस्य सुत कुन्ति· [-1] पुराणान्तरादेवमादिविशेषो द्रष्टव्य· ॥४॥

**करम्भिरिति।** ततः कुरुवशादनुः ॥५॥

**पुरुहोत्र इति।** अनोः पुत्र· पुरुहोत्रः ॥६॥

**सात्वतस्येति।** महाभोजश्चेत्येवं सप्त। मारिष हे आर्य ॥७,८॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

तस्यां शैब्यया विवाहितायां कन्यायां विदर्भो नाम्ना कुश· क्रथश्चेति द्वौ पुत्रावजनयत् ततस्तृतीयं रोमपादाख्यञ्च। तस्यामेवाऽजनयत्। कथम्भूतम्? वैदर्भकुलं नन्दयतीति तथाभूतम् ॥१॥

रोमपादस्य सुतो बभ्रु·, तस्मा तु क्रतुराजायत, तत्सुत· [2] क्रतुसुत कुशिकः तस्मात्कुशिकाच्चेदिः, ततश्चेदेः चैद्यादयो दमघोषादयो नृपा जज्ञिरे ॥२॥

क्रथस्य विदर्भसुतस्य तु पुत्र· कुन्तिरभूत्, तस्य कुन्तेर्वृष्णि·। अथ तस्मान् निर्वृतिः विदृतिरिति पाठान्तरम्। ततो निर्वृतेर्दशार्हाख्यः, तस्य दशार्हस्य तु सुतो व्योम·, ततो व्योमाज्जीमूतः, तस्य जीमूतस्य विकृतिः, यस्य विकृतेस्सुतस्तीव्ररथः, तत स्तीव्ररथात् नवरथः पुत्रो जात·, ततो नवरथाद्दशरथः ॥३,४॥

ततो दशरथाच्छकुनिः ततः करम्भ इत्यर्थः। तदात्मज· करम्भात्मजः देवरात·, तस्य देवरातस्य सुतो देवक्षत्रः, ततो मधुः, ततश्च कुकुरकः ॥५॥

---

1--1 ABJ omit 2 AB omit

ततः कुकुरकात् पुरुहोत्र·, तस्य सात्वतः पुत्रो बभूव। सात्वतस्य तु भजमानश्च भजिश्च दीप्तश्च वृष्णीशश्च देवापृथश्च[1] अन्धकश्च महाभोजिश्चेति सप्त सुता । हे मारिष! परीक्षित एव मारिष इति नामान्तरम्। तत्र भजमानस्यैकस्याश्च पत्न्यां निम्लोच्यादय स्त्रय·, अन्यस्याश्च पत्न्यां शत[2]जिदादयस्त्रय एव सुताः, हे प्रभो ॥६-८॥

### विजयध्वजतीर्थकृता पदरत्नावली

यतश्चेदेः ॥१-८॥

बभ्रुर्दे[3]वापृथसुतस्तयोः श्लोकौ[4] पठन्त्यमू[5] ॥
यथैव शृणुमो दूरात् सम्पश्यामस्तथान्तिकात् ॥९॥

बभ्रुः श्रेष्ठो मनुष्याणां देवैर्दे[6]वापृथस्समः ।
पुरुषाः पञ्चषष्टिश्च षट् सहस्राणि चाष्ट च ॥१०॥

येऽमृतत्वमनुप्राप्ता बभ्रोर्देवापृथा[7]दपि ।
महाभोजो[8]ऽतिधर्मात्मा भोजा आसंस्तदन्वये ॥११॥

वृष्णेस्सुमित्रः पुत्रोऽभूत् युधाजिच्च परन्तप !
शिनिस्तस्यानमित्रश्च निम्नोऽभूदनमित्रतः ॥१२॥

सत्राजितः प्रसेनश्च निम्नस्या[9]थंसतुः सुतौ।
अनमित्रसुतो[10] ह्यन्यः शिनिस्त[11]स्य च सत्यकः ॥१३॥

युयुधानस्सात्यकिर्वै जयस्तस्य कुणिस्ततः ।
युगन्धरोऽनमित्रस्य पृश्निः[12] पुत्रोऽपरस्ततः ॥१४॥

श्वफल्कश्चि[13]त्रकश्चैव गान्दिन्यां[14] तु[15] श्वफल्कतः ।
अक्रूरप्रमुखा आसन् पुत्रा द्वादश विश्रुताः ॥१५॥

1 AB वृध° 2 AB °ता° 3 ABGJMMa °वृ° 4 H M Ma V °क 5 H M MaV °मुम् 6 ABGJMMa °वृ° 7 ABGJMMa °वृ° 8 ABĞJ °ऽपि 9 ABGJMMa स्याप्या 10 ABGJMMa योऽन्य 11 ABGJ याऽथ 12 ABGJ वृष्णि 13 ABGJ रथश्च , MMa रथश्चैव 14 H V गादि 15 ABGJ च

**असङ्गस्सारमेयश्च[1] मृदुको[2-] मृदुपच्छिवः[2] ।**
**वर्मदृक्[3-] धृष्टवर्मश्च[-3] क्षेत्रोपेक्षोऽरिमर्दनः ॥१६॥**

**श्रीध० बभ्रुरिति ।** तत्तदुपदेशभेदेन[4] ये[-4] पञ्चषष्ट्यादिसंख्या पुरुषास्ते अमृतत्वं मोक्षं प्राप्ता· ॥९-११॥

**वृष्णेरिति ।** तस्य युधाजितः शिनिरनमित्रश्च ॥१२,१३॥

**युयुधान इति ।** सत्यकस्य पुत्रो युयुधान·, सात्यकिः[5] तस्य जयः, तस्य कुणि·, तत· कुणेः युगन्धर· । अनमित्रस्यैवाऽपरो पृश्निर्नाम[6] पुत्र· ॥१४॥

**श्वफल्क इति ।** गादिन्या[7-] श्वफलकात् अक्रूरप्रमुखाः[7]अक्रूर· प्रमुखो येषामिति अतद्गुणसंविज्ञानो[8] बहुव्रीहिः ॥१५॥

अतोऽक्रूराऽतिरिक्तान् द्वादश दर्शयति - **असङ्ग** इति ॥१६॥

**वीर०** देवापृथस्य[9] सात्वतेः सुतस्तु बभ्रुः, तयो· पितृपुत्रयो· देवा पृथबभ्र्वो[10] श्लोकौ माहात्म्यसूचकौ इमौ श्लोकौ, पठन्त्यार्या· इति शेषः । श्लोकावेव दर्शयति यथैवेति । यथैव दूरात् शृणुम· यादृशगुणविशिष्टौ देवा पृथबभ्रू[11] दूरात् शृणुम· श्रुतवन्तो वयमन्तिकात्समीपेऽपि तादृशावेव तौ पश्याम इत्यार्याणामुक्ति· ॥९॥

कीदृशवित्याहु· - **बभ्रुरिति ।** मनुष्याणां मध्ये बभ्रु· श्रेष्ठ·, देवापृथस्तु[12] देवैस्तुल्यः । श्रैष्ठ्यमेव दर्शयति पुरुषा[13] इति । बभ्रोर्देवापृथादपि[14] अनु पश्चात् ये तद्वंशजा· पुरुषाः पञ्चषष्ट्यधिकचतुर्दशसहस्रसंख्याकास्ते सर्वे तयोः प्रभावादमृतत्वं मुक्तिं प्राप्ता इत्यर्थ । महाभोजस्सात्वतिस्तु अतिधर्मात्मा तस्य महाभोजस्याऽन्वये वंशे भोजा भोजाख्या नृपा· आसन् जज्ञिरे ॥१०,११॥

वृष्णेस्तु पुत्र· सुमित्रोऽभूत्, युधाजिच्च वृष्णे पुत्रो बभूव । हे परन्तप! तस्य युधाजित· शिनि·, अनमित्रश्चेति द्वौ पुत्रौ[15] जातौ । तत्राऽनमित्रात् निम्नोऽभवत् ॥१२॥

अथ निम्नस्य सत्राजित· प्रसेनश्चेति द्वौ सुतावासतु·[16-] सम्बभूवतुः[-16] तथाऽन्यस्यां भार्यायां अनमित्रस्यैव योऽन्यस्सुत· शिबिर्नाम तस्य सुत· सत्यक· ॥१३॥

---

1 ABGJMMa आ° 2--2 ABGJMMa मृदुरो मृदुविङ्गिरि । 3--3 ABGJ धर्मवृद्ध सुकर्मा चक्षे° , MMa धर्मोविधृष्ट कर्मा च क्षे° 4--4 ABJ ततस्तदुपदेशेन 5 ABJ omit सात्यकि 6 ABJ वृष्णि 7--7 ABJ omit 8 HV °ज्ञान ब° 9 AB °वृध° 10 AB °वृध° 11 AB °वृध° 12 AB °वृध° 13 AB °न्ति 14 ABT °वृधा° 15 TW omit पुत्रौ 16--16 TW omit

सात्यकिः सत्यकसुतस्तु युयुधानः तस्य युयुधानस्य जय· ततो जयात्कुणिः, ततो युगन्धरः तथा अनमित्रस्यैवअन्यस्यां पुत्र· पृश्नि· वृजिनवान् तत· इति पाठान्तरम्। ततः पृश्नेः श्वफल्क· चित्रकश्चेति द्वौ सुतौ, ततः श्वफल्कात् गान्दिन्यां भार्यायां द्वादश सुताः अक्रूरादयो विश्रुताः प्रख्याता बभुवुः अक्रूरप्रमुखा येषामिति अतद्गुणसंविज्ञानबहुव्रीहिः ॥१४,१५॥

ततोऽक्रूरातिरिक्ता द्वादश, तान् दर्शयति -**असङ्ग**[1] इति ॥१६॥

**विज०** नाम्ना युयुधानः, सात्यकिरिति गुणनाम ॥९-१६॥

**शत्रुघ्नो गन्ध[2]मादह्यः प्रतिबाहुश्च द्वादश।**
**तेषां स्वसा [3]सुचीराख्या द्वावक्रूरसुतावपि ॥१७॥**

**देव[4]वानुपदेवश्च तथा चित्ररथात्म[5]जाः ।**
**पृथु[6]र्विदूरथाद्याश्च बहवो वृष्णिनन्दनाः ॥१८॥**

**कुकुरो भजमानश्च शुचिः कम्बलबर्हिषः ।**
**कुकुरस्य सुतो [7]वृष्णिः वि[8]लोमा तनयस्ततः ॥१९॥**

**कपोतरोमा त[9]स्याऽनुः सखा यस्य च तु[10]म्बुरुः।**
**[11]अनोश्च दु[12]न्दुभिस्तस्य दरिद्योतः पुनर्वसुः ॥२०॥**

**तस्याऽऽहुकश्चाहुकी च कन्या [13]द्वावाहुकात्मजौ ।**
**देवकश्चोग्रसेनश्च चत्वारो देवकात्मजाः ॥२१॥**

**[15]देववानुपदेव श्च सुदेवो देववर्धनः।**
**तेषां स्वसारस्सप्ता[16]ऽऽसन् धृतदेवादयो नृप! ॥२२॥**

**[17]शान्तिदेवोपदेवा च श्रीदेवा देवरक्षिता ।**
**सहदेवा देवकी च वसुदेव उवाह ताः ॥२३॥**

---

1 A B आ॰ 2 ABGJ ॰मादाश्च , MMa ॰मोदाह्न 3 H V सुचार्वाख्या , MMa सुचाराष्या , TW ससाराख्या 4 H V ॰लोनु॰ 5 MMa ॰जः 6 MMa ॰पृथुधाताद्या 7 ABGJ वह्नि , TW वृष्णे 8 H V ॰म त॰ , MMa ॰मास्त॰ 9 TW ॰स्याभूत् 10 MMa ॰म्ब॰ 11 अन्धको दु॰ , TW अन्धकाहु॰ 12 ABGJ तस्मादरिद्यो॰ , H V तस्य दविद्यो , MMa तस्य दरिद्रयो॰ 13 ABGJ चैवा॰ 14 H V लोनु॰ 15 MMa शान्ति 16 MMa ॰पालाब्द सृष्टिश्च 17 MMa शान्तिर्दे

**कंसस्सुनामा न्यग्रोधः कङ्कश्शङ्कुस्सुभूस्तथा।**
**राष्ट्रपालो[3] विसृष्टश्च तुष्टिमानौग्रसेनयः ॥२४॥**

**श्रीध० देववानिति।** पृथुरेक· विदूरथाद्या अन्ये च बहव । 'विपृथु धामाद्या[4]' इति पाठे आद्यशब्देन विदूरथोऽप्युक्त·, ततश्च 'शूरो विदूरथादासीदिति वक्ष्यमाणनिर्देशोपपत्ति· । कुकुरादयश्चत्वारोऽन्धकस्य सुता[5] इति ज्ञेयम्। तथा च पराशर·- "कुकुर भजमानशुचिकम्बलबर्हिषाऽऽख्यास्तथाऽन्धकस्य पुत्रा " इति विष्णु पु 4-14-12 ॥१७-१९॥

**कपोतेति।** अनोरन्धकः, अन्धकादुन्दभिरित्यपि तद्वचनादेव ज्ञेयम् ॥२०,२१॥

**देववानिति** धृतदेवा आदिर्यासां शान्तिदेवादीनां षण्णां तास्सप्त ॥२२॥

**शान्तीति।** ताः सप्त ॥२३॥

**कंस** इति। औग्रसेनय· उग्रसेनस्य सुता ॥२४॥

**वीर०** - तेषामसङ्गादीनां[6] स्वसा भगिनी सुसारेत्याख्या यस्यास्सा। तत्राऽक्रूरस्य पुत्रौ[7] देववानुपदेवश्चेति द्वावेव । एवं चित्ररथस्य शशिबिन्दोरारभ्य एकोऽन्वय उक्त· । अथ अन्वयान्तरमाह-तथा **चित्ररथात्मजा** इति। यथा शशिबिन्दु श्चित्ररथस्याऽत्मजः, तथाऽन्येपि चित्ररथस्याऽऽत्मजा· पृथुश्च विदूरथ आद्यो येषां ते च बहवो बभूवुः सात्वतसुतस्य वृष्णेर्वंश मनुक्रामति - वृष्णिनन्दना इत्यादि ॥१७,१८॥

कुकुरादयो वृष्णेः[8] नन्दना· तत्र वृष्णेस्सुतस्येति शेष· । कुकुरस्य तनयो विलोमा ॥१९॥

ततो विलोम्नः कपोतरोमा अभूत्। यस्य च कपोतरोम्ण· तुम्बुरुस्सखा बभूव स कपोतरोमाऽभवदित्यर्थः। अथान्धकस्य सात्वतसुतस्याऽन्वयमाह - अन्धकादिति। अन्धकादुन्दुभिः अन्धका इति प्रथमान्तपाठस्तूचित· । तत्र तथा चित्ररथात्मजा इत्यस्य शशिबिन्दोरारभ्यैते उक्तास्सर्वे चित्ररथवंशजा इत्यर्थः। पृथ्वादयस्तु वृष्णिनन्दनाः, तत्र पृथुर्विपृथुधन्याद्या इति पाठे,आदिशब्देन विदूरथोऽप्युक्तः, अत एव 'ततश्शूरो विदूरथात्' इति वक्ष्यमाणनिर्देशोपपत्ति । कुकुरादयश्चत्वारः सान्वया अन्धकसुता इत्यर्थः। तथा चाऽऽह पराशर - "कुकुरभजमानरुचिकम्बलबर्हिषाद्यास्तथाऽन्धकस्य पुत्राः चत्वारः" इति विष्णु पु 4-14-12 तस्य कपोतरोम्णो दुन्दुभिरित्यर्थ· । तस्य दरिद्योतः, तस्मात्पुनर्वसु·, तस्य पुनर्वसोराहुकः, आहुकी नाम कन्या च। आहुकस्यात्मजौ तु देवकश्चोग्रसेनश्चेति द्वौ, तत्र देवकस्यात्मजा· देववदादयश्चत्वार ॥२०,२१॥

---

1 ABGJ कङ्क°, MMa कह्व 2 ABGJ °हू° 3 ABGJ पालोऽथ सृष्टिश्च , MMa °पालोऽब्द सृष्टिश्च 4 HV °यानाद्या 5 HV पुत्रा 6 AB आ° 7 TW सुतौ 8 AB वृष्णिन°

तेषां चतुर्णां स्वसारो भगिन्य· धृतदेवा आदिर्यासां ताः शान्तिदेवादयः धृतदेवया सह सप्त बभूवुः। ताश्च कन्याः वसुदेव उपयेमे ॥२२,२३॥

औग्रसेनय. उग्रसेनस्य सुता कंसादयो नव ॥२४॥

**विज॰** औग्रसेनय· उग्रसेनपुत्रा ॥१७-२४॥

कंसा कंसवती कङ्का शूरभू[1] राष्ट्रपालिका ।
औग्रसेना[2] दुहितरो वसुदेवानुजस्त्रियः ॥२५॥

शूरो विदूरथादाऽऽसीत्[3] भजमानस्सुतस्ततः[4]
शिनिस्तस्मात्[5] स्वयम्भोजो हृदीकस्तत्सुतो[6] मतः ॥२६॥

देवबाहुश्शतधनुः[7] कृतवर्मेति तत्सुताः।
देवमीढस्य शूरस्य मारिषा नाम पत्न्यभूत् ॥२७॥

तस्यां स जनयामास दशपुत्रानकल्मषान् ।
वसुदेवं देवभागं देवश्रवसमानकम् ॥२८॥

सृञ्जयं श्यामकं कङ्कमनीकं[8] वत्सकं वृकम् ।
देवदुन्दुभयो नेदुरानका यस्य जन्मनि ॥२९॥

वसुदेवं हरेः स्थानं वदन्त्यानकदुन्दुभिम् ।
पृथा च श्रुतदेवा च श्रुतकीर्तिः श्रुतश्रवाः ॥३०॥

राजाधिदेवी[9] चैतेषां भगिन्यः पञ्चकन्यकाः ।
कुन्तेस्सख्युः पिता शूरो ह्यपुत्रस्य पृथामदात् ॥३१॥

साऽऽप[10] दुर्वाससो विद्यां देवहूतिं[11] प्रतोषितात् ।
तस्या वीर्यपरीक्षार्थमाजुहाव रविं शुचिः[12] ॥३२॥

1 HV सुराभू , MMa सुरभू 2 ABGHJV उग्रसेनदु° 3 TW ध्वज° 4 HMMaV सुतात्तत । 5 TW शिमि° 6 A.HV हृदिक° 7 HV °मीढ° 8 ABGJ कङ्क शमीक , TW कङ्कमनिक 9 MMa °दैवी 10 MMa सा च 11 ABGJ हूती° , MMa हूता 12 ABGJ शुचिम् , TW भुवि

**श्रीध० कंसेति ।** वसुदेवस्य ये अनुजा देवभागादयः, तेषां स्त्रियो भार्याः ॥२५॥

अन्धकस्य[1] सुतानां चतुर्णां प्रथमस्य कुकुरस्य वंश उक्तः। द्वितीयस्य भजमानस्य वंशमाह - शूरो विदूरथादिति "भजमानाच्च विदूरथः पुत्रोऽभूत् विदूरथाच्च शूरः" (विष्णु पु 4-14-22,23) इति पराशरादिवचनात्॥ यद्वा, पृथुर्विदूरथाद्याश्चेति पूर्वोक्तचित्ररथात्मजाद्विदूरथात् ॥२६॥

**देवेति ।** देवमीढस्य यः शूरो नाम पुत्रस्तस्य। देवमीढो हृदीकस्यैव सुतः। तथाऽऽह पराशर - "तस्याऽपि कृतवर्मशतधनुर्देवमीढुषाद्या[3] पुत्राः[4] बभूवुः। देवमीढुषस्य[5] शूरस्याऽपि मारिषा नाम पत्न्यभवत्, तस्याञ्चासौ दश पुत्रानजनयद्वसुदेवपूर्वान्" (विष्णुः पुः4-14-24,27) इति॥ २७,२८॥

**सृञ्जयमिति ।** आनकाश्च नेदुः ॥२९॥

**वसुदेवमिति ।** हरेः प्रादुर्भावस्य[6] स्थानम् ॥३०॥

**राजाधिदेवीति ।** पृथायाः कन्याकावस्थायां कर्णोत्पत्तिप्रकारमाह कुन्तेरिति पञ्चभिः ॥३१॥

कदाचि[7] दूहमागतं दुर्वाससं पृथा परिचर्यादिना तोषयामासा ततश्च सा तस्माद्देवहूतिं देवाह्वानहेतुं विद्यामवाप; तदाह- साऽऽपेति ॥३२॥

**वीर०** कंसाप्रभृतयश्चतस्रश्च औग्रसेनाः उग्रसेनाज्जाताः दुहितरः, ताश्च वसुदेवानुजानां देवभागादीनां वक्ष्यमाणानां स्त्रियो भार्याः ॥२५॥

विदूरथाच्चित्ररथात्मजात्, वृष्णिसुताद्वा विदूरथात् शूरो जज्ञे तत्सुतः शूरसुतस्तु ध्वजमानः, ततो ध्वजमानात् शिमिः[8] तस्मात् शिमेः[9] स्वयम्भोजः, तत्सुतः, स्वयंम्भोजसुतः हृदीकः, तत्सुताः हृदीकसुताः देवबाह्वादयस्त्रयः, अयमेकः, शूरस्यान्वय उक्तः। अथ वंशान्तरमाह - देवमीढस्येति। देवमीढसुतस्य शूरस्य मारिषा नाम पत्नी बभूव। अत्र देवमीढस्येति विशेषणबलात् शूरो विदूरथादासीदिति प्राक्तनग्रन्थे विदूरथाद्देवमीढः, तस्मात् शूरो जात इति क्रमोऽवगन्तव्यः। "कृतवर्मेति तत्सुत इति" इत्यनन्तरग्रन्थे इतिशब्दः प्रभृत्यर्थकः। ततश्च तत्र देवमीढस्याऽपि सङ्ग्रहः। तस्य देवमीढस्य देवमीढसुतस्य शूरस्येत्यर्थः। अयञ्च शूरो विदूरथधर्मजादन्यः। तथा चाऽऽह भगवान् पराशरः "तस्याऽपि कृतवर्मशतधनु देवमीढाद्या पुत्रा बभूवुः। देवमीढस्य शूरः, शूरस्याऽपि मारिषा नाम पत्न्यभूत्, तस्याञ्चाऽसौ दशपुत्रानजनयत् वसुदेवपूर्वान् (विष्णुः पुः 4-14-24,27) इति। अत्र तस्यापीति वैष्णववचनस्य हृदीकस्यापीत्यर्थः ॥२६,२७॥

---

1 ABJ 'कसु' 2 HV यथा प' 3 HV 'ढाद्या 4 ABJ omit पुत्रा 5 HV 'ढस्य 6 HV 'वस्था' 7 HV 'त्स्वयमागत 8 AB 'नि 9 A.B 'ने

तस्यां मारिषायां देवमीढश्शूरोऽकल्मषान् विशुद्धान् वसुदेवादीन् पुत्रानजनयत्। वसुदेवस्य आनकदुन्दुभिनाम निर्वक्तुं निमित्तमाह - यतो देवदुन्दुभय· आनकाश्च यस्य वसुदेवस्य जन्मनि प्रादुर्भावकाले नेदुः दध्वनुः ततस्तं वसुदेवं आनकदुन्दुभिरिति वदन्ति ॥२७,२९॥

आनकादीनां नादे हेतुं वदन् तं विशिनष्टि - **हरेः** श्रीकृष्णस्य अवतरिष्यमाणस्य स्थानमवतरणस्थानभूतं। पृथेति एतेषां। वसुदेवादीनां पृथाप्रभृतय· पञ्च कन्यकाः भगिन्य· स्वसार । तत्र पृथाया· कन्यावस्थायां कर्णोत्पत्तिप्रकारमाह-कुन्तेरिति पञ्चभि·। अत्राऽयमितिहास । कदाचिद्गृहमागतं दुर्वाससं पृथा परिचर्यादिना तोषयामास। ततश्च सा तस्माद्विद्यां देवाह्वानसमर्था मवाप्य परीक्षार्थं रविमाजुहाव। ततश्चागतं रविमालोक्य विस्मितायां तस्यां गर्भमाधाय रविर्ययौ। ततस्तस्याः कर्णो जज्ञे इति सोऽयमत्रोच्यते। पिता वसुदेवपृथादीनां पिता शूर· पृथां दुहितरं सख्युरपुत्रस्य कुन्ते· कुन्तिभोजस्य अदात् दुहितृत्वेन ददौ। सख्युरपुत्रस्येति विशेषणद्वयं दानहेतुपरम् । यत कुन्तिभोजाय दत्ता, अत एव पृथा कुन्तीति नामान्तरं लेभे ॥३०,३१॥

ततस्सा पृथा कदाचित् प्रतोषितात् दुर्वासस· देवहूतिं देव आहूयते अनयेति तथा, तां विद्याम्, आप तस्या विद्याया· वीर्यपरीक्षार्थं सामर्थ्यपरीक्षार्थं रविं सूर्यं भुव्याऽऽजुहाव ॥३२॥

**विज०** वसुदेवस्यानुजानां देवभागादीनां स्त्रियो भार्याः ॥२५,२६॥

तस्य हृदिकस्य सुता ॥२७,२८॥

यस्य वसुदेवस्य जननसमये दुन्दुभ्यानकवाद्यनदनाद्वसुदेवस्य नामान्तरमस्तीत्याह - **वसुदेव** मिति। स्थान-मवतारस्य ॥२९,३०॥

एतषां वसुदेवादीनां शूरस्य सख्युः पुत्रस्य कुन्ते· ॥३१॥

देवहूतां देवा हूयन्तेऽनयेति देवहूता देवाह्वानकरीत्यर्थ तां विद्यां दुर्वासस·, अलभतेति शेष·। तस्याः विद्याया·, शुचि ऋतुस्नाता ॥३२॥

**तदा[1] प्राहाऽगतं देवं वीक्ष्य विस्मितमानसा ।**
**प्रत्ययार्थं[2] प्रयुक्ता मे याहि देव! क्षमस्व मे[3] ॥३३॥**
**अमोघं[4] देवसन्दर्शमाधास्ये[-4] त्वयि चाऽऽत्मजम् ।**
**योनिर्यथा न दुष्येत कर्ताऽहं ते सुमध्यमे ॥३४॥**

---

1 ABGJ तदैवोपा' , MMa तदैवोप' 2 MMa 'यार्थे 3 H V भो। , TW भो·। 4-4 ABGJ दर्शनदेवि आधित्से , TW देवसन्धर्शं आधित्से

इति तस्यां स[1] आधाय गर्भं सूर्यो दिवं गतः ।
सद्यः कुमारः संजज्ञे द्वितीय इव भास्करः ॥३५॥

तं साऽत्मजन्नदीतोये कृच्छ्राल्लोकस्य बिभ्यती ।
प्रपितामहस्तामुवाह पाण्डुस्ते[2] सत्यविक्रमः ॥३६॥

श्रुतदेवान्तु[3] कारूषो[4] वृद्धशर्मा समग्रहीत् ।
यस्यामभूद्दन्तवक्त्र ऋषिशप्तो[5] दितेस्सुतः ॥३७॥

[6]केकयो धृष्टकेतुश्च श्रुतकीर्तिमविन्दत ।
[7]सन्तर्दनादयस्तस्यां[8] पञ्चाऽऽसन् कैकयास्सुताः[9] ॥३८॥

राजाधिदेव्यामा[10]वन्त्यौ जयत्सेनो[11]ऽजनिष्ट ह ।
दमघोषश्चेदिराजः श्रुतश्रवसमग्रहीत् ॥३९॥

शिशुपालस्सुतस्तस्याः कथितस्तस्य सम्भवः ।
देवभागस्य कंसायां चित्रकेतुबृहद्बलौ ॥४०॥

**श्रीध०**- देवमुपागतं वीक्ष्य सा प्राह - **तदेति** प्रत्ययार्थं परीक्षार्थं मया विद्या प्रयुक्ता, न तु त्वया किञ्चित्कार्यम् इत्यभिसन्धिना, अतो याहीति ॥३३॥

एवमुक्तो रविरुवाच - **अमोघमिति**। कन्याऽहमिति चेत् तत्राऽऽह - यथा योनिर्न दुष्येत, तथाऽहं कर्ता करिष्यामि ॥३३-३८॥

**राजाधिदेव्यामिति** - आवन्त्यौ विन्दानुविन्दौ ॥३९॥

**शिशुपाल इति**। तदेवं वसुदेवस्य भगिनीनां पतीन् पुत्रांश्चोक्त्वा तद्भ्रातॄणां नवानां पत्नीः पुत्रांश्चाऽऽह - **देवभागस्येति** [12]सार्धैः चतुर्भिः[12] ॥४०॥

**वीर०** तदैवोपगतमागतं देवं रविं वीक्ष्य विस्मितं मानसं यस्या सा सूर्यमाह - [13]किमिति ? हे **देव**। मे मया प्रत्ययार्थं प्रत्यभिज्ञानार्थं वीर्यपरीक्षार्थमिति यावत्, इयं विद्या प्रयुक्ता अतस्त्वं याहि, मां क्षमस्व मदपरधं क्षमस्वेति ॥३३॥

---

1 MMa समाधाय 2 ABGJMMa पाण्डुर्वै 3 MMa °वीन्तु 4 TW दृढवर्मा 5 H V इतिशप्तो , MMa इतिशब्दो 6 ABGJ कैकेयो 7 H V प्रतर्द° 8 ABG तस्य , MMa तस्या 9 H V केकयात्मजा 10 TW °न्त्यात् 11 ABGJ जयसेनो 12--12 ABJ नवभि श्लोकार्धै । 13 TW omit किमिति?

ततो रविराह - देवसन्दर्शं देवतुल्यम् अमोघमात्मजं त्वयि आधित्से उत्पादयितुमिच्छामि। आधत्स इति त्वपपाठः, रुपासिद्धेः। यद्वा, देवसन्दर्शं देवस्य मम दर्यनं, क्लीबत्वमार्षम्, अमोघं फलाविनाभूतम्, अतः त्वय्यात्मजमाधित्से इत्यर्थः। कन्याऽहमित्यत्राह - तव योनिर्यथा न दुष्येत तथाऽहं, हे सुमध्यमे! कर्ता करिष्यामि ॥३४॥

इतीत्थमुक्त्वा तस्यां पृथायां गर्भं समाधाय सूर्यो दिवं गतः। ततः सद्य एव कुमारो जज्ञे, स च द्वितीय इव भास्करः भास्करतुल्य· ॥३५॥

सा पृथा लोकस्य लोकात् बिभ्यती सती कृच्छ्रात् दुःखात् नदीतोये तं कुमारमत्यजत्। तां पृथां तव प्रपितामहः सत्यविक्रम· पाण्डुरुवाह उपयेमे ॥३६॥

श्रुतदेवां पृथानुजां करूषसुतो[1] दृढवर्मा समग्रहीदुपयेमे इत्यर्थः[2]। वृद्धशर्मेति पाठान्तरम्। श्रुतकीर्तिस्तु दितेस्सुतः विप्रचितः कैकयश्च धृष्टकेतुश्च अनिन्दत दूषिताङ्कृतवन्त· चौर्येण सञ्जग्मुरित्यर्थः। प्रसेकाभिप्राय मेकवचनम्। तस्या निन्दितायाः श्रुतकीर्तेः सन्तर्दनादयः पञ्च सुता केकयाः[3] कैकयाज्जाता बभूवुः ॥३७,३८॥

**राजाधिदेव्यां** तु आवन्त्यः अवन्तेस्सुत·, तस्मादवन्तेस्सकाशादित्यर्थ·। जयत्सेनाख्यः सुतोऽजनिष्ट जज्ञे। श्रुत श्रवसं तु चेदिराजो दमघोषाख्यः समग्रहीत् उपयेमे इत्यर्थ· ॥३९॥

तस्याः श्रुतश्रवस· सुत **शिशुपालः**, तस्य शिशुपालस्य सम्भव· उत्पत्तिप्रकार· कथितः, सप्तमस्कन्ध इति शेष·। तदेवं वसुदेवस्य भगिनीनां पतीन् पुत्रांश्चोक्त्वा तद्भ्रातृणां नवानां पत्नी· पुत्रांश्चाह - **देवभागस्येति** नवभि· श्लोकार्धैः[4]। देवभागस्य कंसायां भार्यायां चित्रकेतुश्च बृहद्बलश्चेत्येतौ सुतौ जातौ। तथा देवश्रवस·कङ्कवत्यां भार्यायां सुवीर इषुमांश्चेति द्वौ सुतौ जज्ञाते। कङ्कात्तु तद्भार्यायां कङ्कायां बकः, सत्यजित्, पुरुजित् - त्रयो जाता· ॥४०॥

**विज०** प्रत्ययार्थं विश्वासार्थं प्रयुक्ताया विद्याया माहात्म्यञ्च। भो! देव **क्षमस्व** याहिति ॥३३॥

कुन्त्याऽभिहितो रवि· कुन्तीमाह - **अमोघमिति**। देवसन्दर्शनममोघं सफलं, जानीहीति शेषः। स्वकर्तव्यमाह - आधास्य इति। मैथुनयोग्यतारुण्यादर्शनाच्छिन्नयोनिर्दुष्टा स्यादिति पृथाया मनोगतशङ्कापरिहारार्थमाह - योनिरिति। तथा कर्ता, लोकस्यापवादादिति शेषः ॥३४,३५॥

तव प्रपितामहः पाण्डु· ॥३६॥

---

1 AB °षजो 2 A.b omit इत्यर्थ । 3 A b omit केकया 4 TW श्लोकै सार्धै

वसुदेवभगिनीनां श्रुतदेव्यादीनां विवाहं कथयति श्रुतदेवीमित्यादिना। इतिशब्दो दितेः सुतः पूर्वं दितेः सुत इति शब्दो यस्य विजयस्य स दितेःसुतः इति शब्दः सनकादिभिरेवं शप्तो विजयः प्रागदिते· सुतोऽभूत्। पश्चाद्धिरण्यक इति स एवाऽधुना दन्तवक्त्र इति जात इति भावः ॥३७॥

नाम्ना धृष्टकेतुः केकय विषयाधिपतित्वात् कैकय शब्दश्चशब्द पूर्वेण समुच्चीयते ॥३८॥

आवन्त्यौ विन्दानुविन्दौ अजनिष्ट जनयामास ॥३९॥

वसुदेवभ्रातृणां वंशं कथयति - देवभागस्येत्यादिना ॥४०॥

**कंसवत्यां देवश्रवसः सुवीर इषुमांस्तथा।**
**[1]बकः कङ्कात्तु [1]कङ्कायां सत्यजित्पुरुजित्तथा ॥४१॥**

**सृञ्जयो राष्ट्र[2]पाल्यान्तु वृषदुर्मर्षणादिकान्।**
**हरिकेशहिरण्याक्षौ [3]शूर[4]भूम्यान्तु श्यामकः ॥४२॥**

**[5]मिश्रकेश्यामप्सरसि [6]वृकादीन् [7]वत्सनामकः।**
**तक्षपुष्कर[8]साल्वादीन् [9]दूर्वाक्ष्यां वृक आदधे ॥४३॥**

**सु[10]मित्रानीक[11]पालादीन् [12]अनीलातु [13]सुदामनी।**
**[14]आनकः कर्णिकायां [15]वा ऋतधामजयावपि ॥४४॥**

**पौरवी रौहिणी भद्रा मदिरा रोचना इला ।**
**देवकीप्रमुखा आसन् पत्न्य आनकदुन्दुभेः ॥४५॥**

**बलं गदं सारणञ्च दुर्मदं विपुलंध्रुवम् ।**
**वसुदेवस्तु रोहिण्यां [16]कृतादीनुदपादयत् ॥४६॥**

**सुभद्रो भद्र[17]बाहुश्च दुर्मदो भद्र एव च ।**
**पौरव्यास्तनया ह्येते भूताद्या द्वादशाभवन् ॥४७॥**

---

1--1 ABGJMMa कङ्काया मानकाज्जात 2 ABGJ °ल्याश्च 3 H V सुर 4 ABGJ °म्याश्च 5 MMa °त्र° 6 TW बका° 7 ABGJMMa वत्सकस्तथा 8 ABGJ शाला° , MMa साला° 9 ABGJ दुर्वाक्ष्यां , MMa उर्वश्या 10 ABGJ °त्रार्जुन 11 H M Ma V बाणादीन् 12 ABGJ शमीकात्तु , TW अनीकस्तु 13 ABGJ सुदामिनी , TW सुधामनि 14 ABGJ कङ्कश्च , MMa गाण्डूष 15 ABGJMMa वै 16 MMa कृतधीरुद° , TW कृपादीनुद° 17 ABGJ °वाहश्च

**नन्दोपनदकृतकशूराद्या मदिरात्मजाः ।**

**कौसल्या केशिनन्त्वेकमसूत कुलनन्दनम् ॥४८॥**

**श्रीध०** वसुदेवस्य पत्नीः पुत्रांश्चाह - **पौरवीत्येकादशभिः** ॥४२-४७॥

**नन्देति**। कौशल्या भद्रा ॥४८॥

**वीर०** राष्ट्रपाल्या भार्यायां सृञ्जयो बृषादीन् जनयामास। शामकस्तु शूरभूम्यां भार्यायाम्। शूरभूत्यामिति पाठान्तरम्। हरिकेशहिरण्याक्षौ जनयामास ॥४१,४२॥

तथा वत्सकोऽपि मिश्रकेश्यामप्सरसि बकादीन्सुतान् नवाजीजनत्। वृकस्तु दूर्वाक्ष्यां भार्यायां पुष्करसाल्वादीन् सुतानादधे उत्पादयामास ॥४३॥

शमीकस्तु सुधामनि भार्यायां सुमित्रादीन् सुतानादधे आनकस्तु कर्णिकायां पत्न्यां ऋतधामजयौ सुतावादधे ॥४४॥

अथ वसुदेवस्य पत्नी पुत्रांश्चाह - पौरवीत्येकादशभिः। देवकी प्रमुखं प्रधानं[1] यासां ताः पूर्वोक्ताः पौरव्यादयश्च आनकदुन्दुभेर्वसुदेवस्य पत्न्यः आसन् बभूवु ॥४५॥

तत्र रोहिण्यां पत्न्यां बलादीन् कृपादीन् सुतानुपपादयत् जनयामास। तत्र बलो बलरामः कृप आदिर्ज्येष्ठो येषां तान् बलादीनित्यर्थ । बलादीन् कृपादींश्चेति वा। आदिशब्देन अनुक्ता अन्ये ग्राह्याः; एवमग्रेऽपि ॥४६॥

भूत आदिर्येषां ते एते सुभद्रादयो द्वादश पौरव्यास्तनयाः। आदिशब्दग्राह्यैरुक्तसंख्यापूर्तिः ॥४७॥

तथा शूराद्यानन्दादयो मदिराया आत्मजा । कौसल्या भद्रा तु केशिनमेकमेव सुतमसूत। कथम्भूतम्? कुलं नन्दयतीति तथा ॥४८॥

**विज०** उदपादयत् उत्पादयामास ॥४१-४८॥

**रोचनायान्ततो[2] जाता हस्तहेमाङ्गदादयः ।**

**इलायामुरुवल्कादीन्[3] यदुमुख्यानजीजनत् ॥४९॥**

**त्रिपृष्ठो[4] धृतदेवायामेक[5] आनकदुन्दुभेः ।**

**शन्तिदेवात्मजा राजन् प्रश्रमप्रश्रितादयः[6] ॥५०॥**

---

1 A B omit प्रधान 2 ABGJ °मतो 3 MMa °या पु° 4 ABGJ विपृष्ठो 5 MMa या जात 6 ABGJ श्रम प्रतिश्रुतादय

**राजानः [1]कल्पवर्षाद्या [2]उपदेवासुता दश।**
**[3]वसुहंससुधन्वाद्याः[4]श्रीदेवायास्तु षट्सुताः ॥५१॥**

**देवरक्षितया लब्धा नव चाऽत्र गदादयः ।**
**वसुदेवः सुतानष्टा[5]वाददे सहदेवया ॥५२॥**

**[6]पुरुविश्रुतमुख्यांस्तु साक्षाद्धर्मो वसू[7]निव।**
**वसुदेवस्तु देवक्या[8]मष्ट पुत्रानजीजनत् ॥५३॥**

**कीर्तिमन्तं सुषेणञ्च भद्रसेनमुदारधीः ।**
**ऋजुं [9]समदनं भद्रं सङ्कर्षणमहीश्वरम् ॥५४॥**

**अष्टमस्तु तयोरासीत् स्वयमेव हरिः किल ।**
**सुभद्रा च [10]महाभागा तव राजन् पितामही ॥५५॥**

**यदा [11]यदेह धर्मस्य क्षयो [12]वृद्धिश्च पाप्मनः।**
**तदा तु भगवानीश आत्मानं सृजते हरिः ॥५६॥**

**श्रीध० अष्टमेति।** अष्टमस्तु स्वयमेवाऽऽसीत् न तु कर्मादिना हेतुना, ताभ्यां च जनितो वा। यतोऽसौ श्रीहरिः ॥४९-५५॥

तदेवोपपादयति - **यदेति** त्रिभि ॥५६॥

**वीर०** ततो वसुदेवाद्रोचनायां हस्तहेमाङ्गदादयो जाता । इलायान्तु उरुवल्कादीन् यदुमुख्यान् यादवश्रेष्ठान् सुतानजीजनत्, वसुदेव इति शेषः ॥४९॥

देवकीप्रमुखा आसन् पत्न्य इत्यनेनोक्ताभ्य अन्या अपि पत्न्य आनकदुन्दुभेरासन्निति सूचितम्। देवकोग्रसेनयो. स्वसॄ र्वसुदेव उपयेमे इतिचोक्तं पुरस्तात्। इदानीं तास्तत्पुत्रांश्चाह-त्रिपृष्ठ इत्यादिना। आनकदुन्दुभेर्वसुदेवस्य धृतदेवायां भार्यायां त्रिपृष्ठ एक एव जज्ञे। प्रशमप्रश्रितादयस्तु शान्तिदेवाया आत्मजा ॥५०॥

---

1 HV वृष्ट्याद्या 2 MMa °व्या 3 ABGJ वशाद्या 4 MMa °याश्च 5 ABGJMMa °दधे 6 HV पुरूढश्रुतमुख्यांश्च , MMa पुरुवत्समृदुमुख्यान् , TW पौरव श्रुतमुख्याश्च 7 TW °निच 8 TW मष्टौ 9 ABGJMMa सम्मर्दन 10 HV भाग। 11 MMa यदाहि 12 TW भवति

कल्पवर्ष आदिर्येषां ते राजानस्तु दश उपदेवायास्सुताः। वसुः हंसश्च सुधन्वायास्सुतौ। श्रीदेवायास्सुतास्तु षट्, देवरक्षितया[1] वसुदेवस्य भार्यया[2] गदादयो नव सुता[3] लब्धाः प्रसूता इत्यर्थः। वसुदेवस्सहदेवया भार्याया साधनभूतया अष्टौ सुतान्, पौरवः श्रुतश्च मुख्यौ येषां तानाददे अजीजनत्, धर्मो यथा साक्षाद्वसूनष्टावादधे, तद्वत्। देवक्यामपि वसुदेवोऽष्टौ कीर्तिमदादीन् पुत्रानजीजनत् ॥५१-५३॥

अहीश्वरं नागेन्द्रमिति सङ्कर्षण विशेषणम्। उदारधीरिति वसुदेवविशेषणम्। एवञ्चैते कीर्तिमदादयस्सप्त ॥५४॥

अष्टमं सुतमाह - **अष्टमस्तु** इति। तयो वरसुदेवदेवक्योरष्टमस्सुतस्तु स्वयं हरिरेव श्रीकृष्णरूपेणाऽऽसीत् अवततार। तथा सुभद्रा नामैका कन्या तयोर्जज्ञे। सा च महाभागा महाभाग्यशालिनी हे राजन्! तव पितामही पितामहस्यार्जुनस्य भार्या ॥५५॥

अष्टमस्तु सुतो हरिरेवाऽऽसीदित्युक्तम्। तयो तत्र को वा हरेरवतारकालः? किं तस्य जन्मनिमित्तम्? किंवाऽस्य जन्म प्रयोजनम् - इत्यादिप्रश्नान् सङ्ग्रहेण तच्चरित्रञ्चाऽह - **यदेत्यादिन** यावत्समाप्ति। यदा हि यस्मिन् काले हि धर्मस्य क्षयः पाप्मनोऽधर्मस्य, अभ्युत्थानमिति शेषः, भवति तदा तु तस्मिन् काले तु भगवानीशो हरिरात्मानं सृजते अवतारयति। यदाहीत्यादिना तदात्वित्यन्तेन अवतारकाल उक्तः। हरिरित्यनेन आश्रितार्तिहरत्वमुक्तं, तदेवावतारस्य मुख्यं प्रयोजनमिति सूचितम्। भगवानात्मानं सृजते इत्यनेन अवतारदशायामपि षाड्गुण्यपूर्तिरुक्ता ईशा इत्यनेन अकर्मवश्यत्वरूपं स्वातन्त्र्यमुक्तम् ॥५६॥

**विज०** *अष्टमस्त्विति। हरति आकर्षति वशीकरोति सर्वमिति हरिः पूर्णभगवान्। स एव स्वयमासीत् नत्वाविर्भावान्तरेण किलेति "एते चांऽशकलाः पुंस कृष्णस्तु भगवान् स्वयम्" (भाग1-3-28) प्रसिद्धं निश्चिनोति ॥४९-५५॥

तत्र भगवदवतारमात्रस्य सामान्यतः कारणमाह - **यदेति**। श्रीगीतासु चैवं "यदा यदा हि धर्मस्य ग्लानिर्भवति भारत!" (भ.गी. 4-7) इत्यादि ॥५६॥

**न ह्यस्य जन्मनो हेतुः कर्मणो वा महीपते ।**
**आत्ममायां विनेशस्य परस्य द्रष्टुरात्मनः ॥५७॥**

**यन्मायाचेष्टितं पुंसः स्थित्युत्पत्त्यप्ययाय हि ।**
**अनुग्रहस्तन्निवृत्तेरात्मलाभाय चेष्यते ॥५८॥**

---

* 'अष्टमस्त्विति' आरब्ध "इत्यदि पर्यन्त ग्रन्थभाग M Ma प्रकाशयो नोपलभ्यते। 1 TW 'ता' 2 TW 'र्या' 3 TW पुत्रा 4 HV जनने

**अक्षौहिणीनां पतिभिरसुरैर्नृपलाञ्छनैः ।**
**भुव आक्रम्यमाणाया[1] ह्यभाराय[2] कृतोद्यमः ॥५९॥**

**कर्माण्यपरिमेयानि[3] मनसाऽपि सुरेश्वरैः ।**
**सहसङ्कर्षणश्चक्रे भगवान्मधुसूदनः ॥६०॥**

**कलौ जनिष्यमाणानां दुःखशोकतमोनुदम् ।**
**अनुग्रहाय भक्तानां[4] सुपुण्यं व्यतनोद्यशः ॥६१॥**

**यस्मिन् सत्कर्णपीयूषे यशस्तीर्थवरे सकृत् ।**
**श्रोत्राञ्जलिरुपस्पृश्य धुनुते कर्मवासनाम्[5] ॥६२॥**

**भोजवृष्ण्यन्धकमधुशूरसेनदशार्हकैः ।**
**श्लाघनीयेहितः शश्वत् कुरुसञ्जयपाण्डुभिः ॥६३॥**

**स्निग्धस्मितेक्षणोदारैः[6] वाक्यैर्विभ्रमलीलया[8] ।**
**नृलोकं रमयामास मूर्त्या सर्वाङ्गरम्यया ॥६४॥**

**श्रीध०** नहीति। ईशस्य मायानियन्तुः। परस्याऽसङ्गस्य द्रष्टुः साक्षिणः। आत्मनः सर्वगस्य। न ह्येवम्भूतस्य मायाविनोदं विना जन्मनः कर्मणो वा हेतुस्सम्भवतीत्यर्थः ॥५७॥

**यदिति।** किञ्च यस्य मायाचेष्टितं पुंसो जीवस्याऽनुग्रहस्तस्य सर्वजीवानुग्राहकस्य कुतः कर्मादिपारतन्त्र्येण जन्मादिसम्भवः? अनुग्रहमेवाऽऽह। हि यस्मात्तदेव स्थित्यादये इष्यते। प्रलये लीनोपाधेर्जीवस्य धर्माद्यसम्भवात् उपाधिसृष्ट्यादिना धर्मादिसम्पादनेनाऽनुग्रह·। तथाऽऽत्मलाभाय मोक्षाय चेष्यते। तत्र हेतुः तेनैव श्रूयमाणेन तस्य स्थित्यादेः निवृत्तेः ॥५८॥

तस्य चेष्टितं भूमेरपि[9] अनुग्रह इत्याह - **अक्षौहिणीनां** इति द्वाभ्याम्। अभाराय भारपरिहाराय ॥५९॥

**कर्माणीति।** सुरेश्वरैरपि मनसाप्यपरिमेयानि[10] अवितर्क्याणि सङ्कर्षणेन[11] सहितश्चक्रे ॥६०॥

**सङ्कल्पमात्रेण** भूभारहरणसमर्थस्याऽपि कर्मकरणं यशोविस्तारद्वारा भक्तानुग्रहार्थमित्याह-**कलाविति** द्वाभ्याम्। दुःखशोकतमांसि नुदतीति तथा, तद्यशो व्यतनोत् ॥६१॥

---

1 MMa माणाना 2 ABGJ अभाराय , MMa अभावाय 3 ABGJ °याणि 4 MMa °भूताना 5 MMa °ना । 6 ABGJMMa °क्षितो° 7 ABGJMMa °क्रम 8 ABGJ omit सर्व 9 ABGJ °रनु° 10 ABJ °णि 11 ABJ °णस°

**यस्मिन्निति**। यस्मिन् सतां कर्णपीयूषे यशोरूपे तीर्थवरे श्रोत्रमेवाऽञ्जलिः पानसाधनं यस्य स पुरुषः सकृदप्युपस्पृश्य आचमनमात्रं कृत्वा तत्सौन्दर्याकृष्टचित्त· कर्मवासनां धुनुते ॥६२॥

तदेवाऽऽह द्वभ्याम् - **भोजेति**। भोजादिभि श्लाघानीयमीहितं यस्या ॥६३॥

**स्निग्धेति**। सर्वैरङ्गै रम्यया मूर्त्या च ॥६४॥

**वीर०** तदेव व्यनक्ति - **नहीति**। अस्य भगवत· जन्मन. कर्मण· देवमनुष्यादिसजातीयचेष्टाया वा आत्ममायां विना स्वसंकल्पं विना अन्यो हेतुः पुण्यापुण्यादिरूपो न विद्यते। हे महीपते! अनेन जन्मकारणं स्वसङ्कल्प एव, नतु जीवस्येव पुण्यापुण्यादिकमित्युक्तम्। तत्र हेतुं वदन् विशिनष्टि - ईशस्य प्रकृति पुरुषयोः नियन्तु·। ननु भृत्यादीन्नियमयन्नपि राजादिः कर्मवश्य एव दृष्ट इत्यतो विशिनष्टि, - द्रष्टुरिति पुण्यापुण्यादिकतृन् क्षेत्रज्ञान् पश्यतः नतु पुण्यापुण्यादिकं कुवर्त इत्यर्थ·। तत्कर्तुर्हि तद्वश्यतेति भावः। कथम्? एक सर्वान् क्षेत्रज्ञान् पश्यति इत्यतो विशिनष्टि परस्याऽऽत्मनः इति परमात्मन इत्यर्थः। चिदचिदात्मकं लोकत्रयमप्यन्त· प्रविश्य व्याप्यगतैर्धर्मैरस्पृष्टस्सन् योऽन्तरात्मतया बिभर्ति स परमात्मा। यथोक्तं[1] भगवता - "परमात्मेत्युदाहृत यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः" (भ.गी 15-17) इति। भरणमत्र धारकत्वेन चिदचिद्वस्तुनोः कर्मानुगुणं प्रेरणम् ॥५७॥

ननु अवतारदशायां देवमनुष्यादिसजातीयचेष्टां कुर्वन्नप्ययं केवलं द्रष्टैव, नतु तत्कर्तेति कथमुच्यते? इत्यत आह - **यन्मायेति**। यस्य भागवतो मायाचेष्टितं स्वसङ्कल्पैकहेतुकं चेष्टितं तत्पुंसो जीवस्य सर्गाद्यर्थमेव कांश्चिदुत्पादयितुं, कांश्चित्पातुं कांश्चिच्च संहर्तुमेव, नतु स्वस्य पुण्यापुण्यत्वादिरूपार्थमिति भाव.। अप्ययो लय·। तर्हि किं जीवसर्गाद्यर्थेन मायाचेष्टितेन प्रयोजनम्? प्रत्युत अन्यानर्थकारिणा चेष्टितेन स्वस्याऽप्यनर्थ आपद्येतेत्यत्राऽऽह - अनुग्रह इति। मायाचेष्टितरूपो व्यापारोऽनुग्रहः अनुग्रह रूप एव, जीवाननुग्रहीतुमेव चेष्टते इति यावत्। चेष्टितस्यानुग्रहरूपतामेव दर्शयति - तन्निवृत्तेरात्मलाभाय चेष्यत इति। स च मायाचेष्टितरूपो व्यापारः तन्निवृत्ते· सर्गादिनिवृत्तेः पश्चात् आत्मलाभाय मोक्षाय। चोऽवधारणार्थ·। आत्मलाभायैवेष्यते रामकृष्णादिरूपेणावतीर्णेन भगवता ये सृष्टा· पालितास्संहृताश्च ते सर्वे तद्दिव्यमङ्गलविग्रहसम्बन्धसहशय्यासनभोजनसन्दर्शनादिभिः देहावसने मुक्ताः भवेयुरित्येवमर्थमेव भगवान् चेष्टत इत्यर्थः। यद्वा तच्चेष्टितमनुग्रहरूप एव निवृत्तेरात्मलाभाय निवृत्तिधर्मपूर्वकात्मलाभायैव इष्यते सृष्ट्यादिसमर्थं मामवलोक्य मत्प्राप्तिसाधनं निवृत्तिधर्मं मद्भक्तिरूपमनुष्टाय मुच्येरन् इत्येवमर्थं चेष्टत इत्यर्थ· ॥५८॥

---

1 A,B तथागीत

अवतारप्रयोजनं हरिशब्देन सूचिनं व्यनक्ति - **अक्षौहिणीना**मिति। नृपाणामिव लाञ्छनानि येषां तैर्नृपवदवभासमानै रित्यर्थः। असुरैरसुरम्पत्त्या जातैरनेकाक्षौहिणीसंख्यानां सेनानां पतिभि· चैद्यादिभिराक्रम्यमाणाया भुव· पृथ्व्या अभाराय भाराभावाय उद्यमोऽवताररूपः कृतः येन स भुवो भारापहरणाय[1]वतीर्ण[2] इति भाव· ॥५९॥

तथैव चाकरो[3]दपीत्याह - **कर्माणी**ति। सुरेश्वरैः ब्रह्मादिभिरपि मनसाप्यपरिमेयानि अवितर्क्याणि कर्माणि सङ्कर्षणसहितो भगवान् मधुसूदनः श्रीकृष्णश्चक्रे पूतनाशकट यमलार्जुनकेशिकुवलयापीडचाणूरमुष्टिकतोसल कंसचैद्यादिसंहाररुपाणि कर्माणीति भाव· ॥६०॥

प्रधानं प्रयोजनं दर्शयति - **कलाव**ति। कलौ युगे जनिष्यमाणानां भक्तानामनुग्रहाय तेषां दु खादिकं नुदत्यपनयतीति तथा तत्सुपुण्यं वदतां शृण्वताञ्च पुण्यावहं यशो व्यतनोत्। भूभारहरणस्य सङ्कल्पमात्रेणाऽपि सिद्धेरिदमेवावतारस्य[4]प्रधानं प्रयोजनमिति भाव· ॥६१॥

यशोवितानस्य भक्तानुग्रहरूपतां दर्शयितुं यशो विशिनष्टि - **यस्मिन्नि**ति। सतां साधूनां कर्णयो· श्रोत्रयो पीयूषे अमृततुल्ये यस्मिन् यशोरूपे तीर्थश्रेष्ठे श्रोत्रमेवाऽञ्जलि· पानसाधनं यस्य स पुरुष· सकृदप्युपस्पृश्य आचम्य कर्मवासना· धुनुते, तत्सौन्दर्यादिगुणाकृष्टचित्तः कर्मवासनाः क्षपयति मुक्तो भवतीत्यर्थ· ॥६२॥

तदेवाह द्वाभ्याम् - **भोजा**दिभि· कुर्वादिभिश्च श्लाघनीयमीहितं चेष्टितं यस्य सः स्निग्धैस्सानुरागैरीक्षितैः अवलोकनै. र्धीरैर्गम्भीरैर्वाक्यैर्वचोभिश्च। विक्रमलीलया विक्रम· पादविक्षेप· तद्रूपया लीलया च सर्वै रङ्गै.रम्यया मूर्त्या च नृलोकं रमयामास ॥६३,६४॥

**विज०** ननु, यदि श्रीनारायणो जीववज्जन्मकर्माणि भजते तर्हि संसारनिवृत्तये तत्सेवा व्यर्थेति तत्राह- **नही**ति। विषमो दृष्टान्तः। तथा हि जीवस्यजन्मादिमत्वे पुण्यपापे कारणं विधिबद्धत्वात्, तदनियतत्वात् ईश्वरस्य नहि ते स्त । नहि कार्यमकारणमिति न्यायात् कारणं वक्तव्यं चेत् लोकानुग्रहोद्बुद्धात्मेच्छैवेति ब्रूम·। अनुग्रहोद्बोधस्यापि धर्मपाप्मनो क्षयवृद्धिदर्शनमित्युक्तम्। अतस्तत्सेवा न व्यर्थेत्यर्थः। हरेरविधिबद्धत्वेऽपि जन्मादिदर्शनात् अतर्कितत्वेन पुण्यादिलेपित्वेन दु·खित्वं स्यादिति, तत्राऽह - ईशस्येति। ईशस्य क्वचिन्न मे दुखित्वं स्यात् इति तन्निवारणसमर्थत्वात्, अन्यस्य तदभावात् जीव एव ईश· किं न स्यात् इति तत्राह - परस्येति। ननु किं तद्वैलक्षण्यम्? येनेशादन्यो जीवः स्यादिति तत्राऽह - द्रष्टुरिति "यस्सर्वज्ञस्सर्ववित्" इति श्रुते । "नहि द्रष्टुर्दृष्टे· विपरिलोपो विद्यते" इत्यादेश्च सार्वज्ञ्यं जीवाद्भिन्नत्वेन मुख्यलक्षणम्। सार्वज्ञ्यं स्वाभाविकं न तु नैमित्तिकमित्याशयेनाऽह -

---

1 TW °हाराय 2 TW इत्यर्थ । 3 A,B °दित्याह 4 A,B मुख्य

आत्मन इति। एवंविध· क इत्यतोवाह - आत्मन इति। "आत्मा देहे धृतौ जीवे स्वभावे परमात्मनि" (वैज. को 6-1-6) इति यादवः ॥५७॥

ननु जीवव्यावर्तकं लक्षणं जगत्कर्तुत्वादिकं तत्प्रकृतेः, अतः सार्वज्ञ्यमात्रेण कथमीश्वरो जीवाव्द्यावर्त्यः? विशेषणस्य "सर्वज्ञस्त्रिपुरान्तकस्त्रिनयन." इत्यादावन्यविषयत्वेन व्यभिचारित्वात्[1] उक्तदोषानिस्तारः इत्यात्राऽऽह- यन्माययेत्यादि। यस्येश्वरस्याधीनाया· मायाया· प्रकृतेश्चेष्टितं परिमाणलक्षणं पुंस इत्युपलक्षणम्। प्रपञ्चस्य स्थित्युत्पत्तिसंहाराय भवति, स्थित्यादेर्हेतुर्भवतीत्यर्थः। तदेकविषयत्वद्योतनाय चतुर्थीयम्। एकवद्भावादेकवचनम्। "प्रकृतिं पुरुषश्चैव प्रविश्य पुरुषोत्तमः" इति स्मृतिं हिशब्देन दर्शयति। यदनुग्रह प्रकृतिचेष्टाया· निवृत्तेर्हेतु·[2] निवृत्तिश्चाऽऽत्मलाभाय सच्चिदानन्द स्वरूपाविर्भावाय। "बलमानन्द ओजश्च" इत्यादिश्रुत्येष्यते निरूप्यते। हरे· प्रपञ्चनिर्माणादिकं तत्तत्पदार्थविशेषज्ञानं विना न युज्यते तद्बलादपोहितुं न पार्यते प्रामाणिकत्वात् अतो निरुपमचिरितं सार्वज्ञ्यं हरेरेव, अन्यस्सयौपचारिकमित्यतो जीव व्यावृत्तिलक्षणसद्भावाद्युक्तेति भाव ॥५८॥

ननु कीदृशोऽनुग्रहो येन तन्निवृत्ति· स्यादिति तत्राऽह - **अक्षौहिणीना**मिति। भुवो भारायमाणानां असुराणामभावाय नाशाय ॥५९॥

अपरिमेयानि परिमातुमशक्यनि ॥६०॥

यशोलक्षण पराक्रमं, दु खशोकतमांसि नुदतीति दु खशोकतमोनुत् ॥६१॥

तत्तत्फलमाह - **यस्मिन्नि**ति। सत्कर्णपीयूषे प्रशस्तजनकर्णामृते यशस्तीर्थवरे यशोलक्षणशास्त्रपावनजलश्रेष्ठे श्रोत्रे एवाऽञ्जलिर्यस्य स तथा। उपस्पृश्य स्नानपानाचमनानि कृत्वा पापकर्मवासनाः पापकर्मकरणश्रद्धालक्षणाः ॥६२॥

श्रलाघनीयेहित पूज्यमानचरित· ॥६३॥

स्निग्धस्मितेक्षितेन उदारैर्मनोहरै· विक्रमलीलया विक्रमविलासेन सर्वाङ्ग सुन्दरया मूर्त्या च नृलोकं मनष्यजनं. न नये इति धातो· नयति भक्तिपूर्वकं तत्त्वं जानातीति नृलोको ज्ञानिसमूह· तमिति वा ॥६४॥

**यस्याननं मकरकुण्डलचारुकर्णभ्राजत्कपोलसुभगं सविलासहासम् ।**
**नित्योत्सवं न ततृपुर्दृशिभिः पिबन्त्यो नार्यो नराश्च मुदिताः कुपिता निमेश्च ॥६५॥**

---

1 A चरितत्वात् 2 M °त्तिहेतु

जातो गतः पितृगृहाद् व्रजमेधितार्थो[1] हत्वा रिपून् सुतशतानि कृतोरुदारः ।
उत्पाद्य तेषु पुरुषः क्रतुभिस्समीजे [2]ह्यात्मानमात्मनिगमं प्रथयञ्जनेषु ॥६६॥

[3]भूम्या स वागुरुभरं क्षपयन् कुरूणामन्तस्समुत्तकलिना युधि [4]भूपचक्रम् ।
[5]दृष्ट्या [6]विधूय विजये [7]जयमुद्घिघुष्य प्रोच्योद्धवाय [8]परमं समगात् स्वधाम ॥६७॥

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
नवमस्कन्धे चतुर्विंशोऽध्यायः ॥२४॥
इति नवम. स्कन्ध· समाप्तः

**श्रीध०** तत्प्रदर्शनार्थं मुखशोभामाह - **यस्येति**। यस्याऽऽननं दृशिभिर्नेत्रैः पिबन्त्यो नार्यो नराश्च न ततृपुः न तृप्ताः, निमेषोन्मेषमात्रव्यवधानमपि असहमानाः तत्कर्तुर्निमेः कुपिताश्च बभूवु । कथम्भूतमाननम् मकरकुण्डलाभ्यां चारूकर्णौ भ्राजन्तौ कपोलौ च तैस्सुभगम्। सविलासो हासो यस्मिन्। नित्यमुत्सवो यस्मिन् ॥६५॥

श्रीकृष्णस्य चरितं समासतो वर्णयति - **जात** इति द्वाभ्यात्। जातो निजेन रूपेण, पश्चात्पुरुषो मनुष्याकारस्सन् [9]व्रजंगतः व्रजवासिनामेधिता अर्था येन। तेषु दारेषु सुतानां शतान्युत्पाद्य, आत्मनिगमं स्वकीयं वेदमार्गम् ॥६६॥

**भूम्या इति**। अन्तस्समुत्थेन कलिना निमित्तेन गुरुभरं क्षपयन् [10]दृष्ट्यैव [11]भूपानां चमूर्विधूय विजये जयमर्जुनेन जित मित्येवमुद्घोषं कृत्वा [12]परमं तत्त्वमुद्धवायोपदिश्य [13]स्वं धाम सम्यक् [14]स्वेनैव रूपेण जगामेति ॥६७॥

इति श्रीमद्भागवते महापुराणे
श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्यख्यायां नवमस्कन्धे चतुर्विंशोऽध्यायः॥२४॥
इति नवमः स्कन्धः समाप्त·

**वीर०** मूर्तेः सर्वाङ्गरम्यत्वं सूचयितुं स्थालीपुलकन्यायेन तावन्मुखशोभामाह - **यस्येति**। यस्य श्रीकृष्णस्याऽऽननं

---

1 MMa °तोत्र 2 ABGJMMa आ° 3 ABGJMMa पृथ्व्या सवै 4 ABGJ चम्व , MMa बन्धम्। 5 H V दृष्ट्वा 6 TW °ऽभिभूय 7 ABGJ °घो° 8 ABGJ च पर , Mma च वर 9 H V व्रजगत 10 H V हष्वैव 11 ABJ भूपचमू 12 ABJ पर 13 ABJ स्वधाम 14 H V तेनैव

दृशिभि र्नेत्रै· पिबन्त्योऽतितृष्णया पश्यन्त्यौ मुदिता नार्यो नराश्च न ततृपु· न तृप्ताः। निमेषोन्मेषमात्रव्यवधानमप्यसहमानाः निमेषोन्मेषकर्तुर्निमेः कुपिताश्च बभूवुः। इक्ष्वाकुतनयस्य निमेः निमेषादिकर्तृत्वं तच्चरित्र एवोक्तं पुरस्तात्। कथम्भूतमाननम्? मकरकुण्डलाभ्यां चारू कर्णौ कपोलौ च तैस्सुभगम्। सविलासो हासो यस्मिन्, नित्यमुत्सवः शोभातिशयो यस्मिन् ॥६५॥

श्रीकृष्णचरितं समासतो वर्णयति - **जात** इति द्वाभ्याम्। जातस्तावन्निजेन रूपेण जातः पुरुषः, पश्चान्मनुष्याकारस्सन् पितृगृहात् कारागृहात् व्रजं गत व्रजवासिनामेधिता वर्धिता अर्था· पुरुषार्थाः येन। रिपून् पूतनाशकटादीन् हत्वा कृताः पाणिना गृहीताः उरव· षोडशसहस्रसंख्याका अष्टौ च रुक्मिण्यादय· दारा· कलत्राणि यस्य स । तेषु दारेषु सुतानां शतानि उत्पाद्य आत्मनिगम मात्मनो नियोगरूपं वेदं जनेषु प्रथयन् प्रथयितुमिति भाव·। क्रतुभिस्सर्वै स्वात्मानमेव समीजे समाराधितवान् ॥६६॥

स वै भगवान् [1-] कुरूणामन्त [-1] परस्परं समुत्थेन कलिना कलहेन निमित्तेन पृथ्व्या उरु अधिकं भरं क्षपयन् युधि सङ्ग्रामे भूपानां चक्रं सैन्यं दृष्ट्यैवाऽभिभूय विजयेऽर्जुने [2] जयमुद्विघुष्य सर्वान् जितोयमर्जुन इत्येवं विधमुद्घोषं कारयित्वा परं तत्त्व मुद्धवाय प्रोच्य उपदिश्य स्वं धाम स्थानं वैकुण्ठाख्यमगात् तेनैव रूपेण ययावित्यर्थः ॥६७॥

इति श्रीमद्भागवते नवमस्कन्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां चतुर्विंशोऽध्याय ॥२४॥
नवम स्कन्ध समाप्त

**विज०** रतिकरणप्रकारं दर्शयति - **यस्येति**। मकराकारकुण्डलाभ्यां चारूकर्णौ ताभ्यां भ्राजत्कपोलाभ्यां सुभगं सुन्दरं विलासेन सहितो हासो यस्य स तथा तम्, नित्यमुत्सवो यस्य स तथा तम्, तत्क्षणानन्दजनकमित्यर्थः। न ततृपुः नाऽलम्बुद्धिं प्राप्ता । निमेर्निमेषस्येति षष्ठी द्वितीयार्थे। निमेषं प्रति कुपिताः विकासविरोधित्वात् ॥६५॥

तेषु दारेषु आत्मनिगममात्मज्ञानं, स्वगुणप्रतिपादकवेदलक्षणशास्त्रं वा प्रथयन् प्रख्यापयन् ॥६६॥

स कृष्णः स्वधाम स्वमूलरूपं समगात् स गतवानेकोऽभूदित्यन्वयः। "पूर्णमदः पूर्णमिदम्" (बृह. उ.5-1-1) इत्या द्युपनिषत् वै इत्यनेन सूचयति (सूच्यते)। पृथ्व्याः गुरुभरमसुरलक्षणं भूपबन्धं भूपसमूहलक्षणं बन्धं विधूय संहृत्य उद्विघुष्य डिण्डिमघोषं कारयित्वा वरं वरणयोग्यं ज्ञानं प्रोच्य विस्तरेण उपदिश्य इति ॥६७॥

---

1--1 TW omit 2 AB

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
नवमस्कन्धे चतुर्विंशोऽध्यायः ॥२४॥

नवम स्कन्ध समाप्त·

*नाम्ना क्षत्रवसुन्धरासुरमहावंशावलीमन्दिरं*
*व्याख्याव्याजविनोदतोऽद्य नवमस्कन्धो मयाऽऽम्रेडितः ।*
*सर्वज्ञो विजयध्वजाय यतये मह्यं महाभूतिदो*
*हारी हारमनोहरो ह्यहरहः प्रीतोऽस्तु विश्वम्भरः ॥१॥*

*पदरत्नावलिर्भूयान्नवमस्कन्ध अर्पिता ।*
*तुलसीव हरेः पादद्वन्द्वे द्वन्द्वापहारिणी ॥२॥*

*(विजयध्वजरीत्या एकविंशोऽध्यायः ॥२१॥)*

# श्रीमद्भागवत नवमस्कन्धस्थ श्लोक पादानुक्रमणिका (1-24 अध्यायाः)

| | अध्यायः | श्लोकः | पादः |
|---|---|---|---|
| प्रत्यगृह्णात्कृताञ्जलि· | 2 | 10 | b |
| प्रत्यगृह्णाज्जरां पितु | 18 | 45 | b |
| प्रत्यनीक भयावहम् | 4 | 28 | d |
| प्रत्यनीकविवक्षितम् | 18 | 26 | b |
| प्रत्ययार्थं प्रयुक्ता मे | 24 | 33 | c |
| प्रत्यर्घ्येद बभाषिरे | 11 | 5 | d |
| प्रत्याख्यातो विरिञ्चेन | 5 | 55 | a |
| प्रत्यागच्छत्सराजर्षि | 6 | 19 | c |
| प्रत्यागमनकाङ्क्षया | 5 | 18 | b |
| प्रत्याचख्युरधर्मज्ञा | 18 | 41 | c |
| प्रयाचष्ट कुरुश्रेष्ठ! | 4 | 41 | c |
| प्रत्युत्थानासनार्हणै | 4 | 36 | b |
| प्रदहद्राजयाच्ञया | 5 | 12 | d |
| प्रदाय समवन्दत | 7 | 21 | b |
| प्रध्वस्तमायागुणभेदमोहै· | 8 | 24 | b |
| प्रपायामिव गच्छताम् | 19 | 27 | b |
| प्रपितामहस्तामुवाह | 24 | 36 | c |
| प्रभावज्ञो मुने सम्यक् | 16 | 6 | c |
| प्रमदानां यथेप्सितम् | 3 | 12 | d |
| प्रयान्तमनुधावताम् | 9 | 11 | b |
| प्ररुदन्त्य उपाद्रवन् | 10 | 24 | d |
| प्रलम्भितो लोकनम स्कृतो मुनि | 3 | 20 | b |
| प्रलीनोडुगणे निशि | 2 | 6 | b |

| | अध्यायः | श्लोकः | पादः |
|---|---|---|---|
| प्रवरान्तरमापन्नम् | 16 | 37 | c |
| प्रविरोऽथ नमस्युर्वै | 20 | 2 | c |
| प्रविश्य राजभवनम् | 10 | 46 | c |
| प्रविष्टो निशि तर्षित· | 6 | 27 | b |
| प्रवृत्तो वारितो गर्भम् | 20 | 36 | c |
| प्रशशंस तमुर्वीशम् | 5 | 13 | c |
| प्रश्नमेनं समाचक्ष्व | 1 | 28 | c |
| प्रश्रयावनता सती | 10 | 56 | b |
| प्रश्रमप्रश्रितादय· | 24 | 50 | d |
| प्रसङ्गं रममाणयो· | 1 | 31 | b |
| प्रसन्ना वरदाऽस्मि ते | 9 | 3 | b |
| प्रसन्नाः प्रभवो यदि | 13 | 8 | b |
| प्रसह्य शिर उत्कृत्य | 16 | 12 | c |
| प्रसाद गोपुरसाभा | 11 | 27 | a |
| प्रसादय महेशानम् | 9 | 8 | a |
| प्रसादाद्विन्दते परम् | 18 | 43 | d |
| प्रसादित सत्यवत्या | 15 | 11 | a |
| प्रसाद्य समभोजयत् | 5 | 18 | d |
| प्रसाद्य हयमानयत् | 8 | 30 | b |
| प्रसूताया भवच्छिदः | 9 | 14 | d |
| प्रस्कण्वाद्या द्विजातयः | 20 | 7 | b |
| प्रहर्तुं कुरुतेऽशिवम् | 4 | 69 | f |
| प्रहसन् श्लक्ष्णया गिरा | 20 | 10 | d |

म

| | अध्यायः | श्लोकः | पादः |
|---|---|---|---|
| युञ्जानः परमाशिषः | 5 | 13 | d |
| युञ्जीततद्वतिषु साधुषु चेत्प्रसङ्गः | 6 | 51 | d |
| युतं जटाभिर्ददृशे पुरीं विशन् | 15 | 29 | d |
| युधाजिच्च परन्तप! | 24 | 12 | b |
| युधिष्ठिरमुखास्त्रयः | 22 | 27 | d |
| युधिष्ठिरात्तु पौरव्याम् | 22 | 30 | c |
| युधिष्ठिरात्प्रतिविन्ध्यः | 22 | 29 | a |
| युयुत्सु· ककुदि स्थित· | 6 | 15 | d |
| युयुधान सात्यकिर्वै | 24 | 14 | a |
| युयोज परमात्मनि | 6 | 54 | d |
| युवनाश्वस्तु तत्सुत· | 6 | 20 | d |
| युवनाश्वस्तु तत्सुत· | 7 | 1 | d |
| युवनाश्वस्य तनय· | 6 | 30 | c |
| युवना श्वोऽपि तत्रैव | 6 | 32 | c |
| युवनाश्वोऽभवत्तस्य | 6 | 25 | c |
| यूयं मन्त्रविदो युक्ता· | 1 | 18 | a |
| ये दारागार पुत्राप्तान् | 4 | 65 | a |
| ये देहभाजस्त्रिगुणप्रधानाः | 8 | 23 | a |
| येन जातम्रस एव सः | 20 | 21 | b |
| येन नीतो दशामिमाम् | 10 | 27 | d |
| येन लेभेऽप्रज· प्रजाः | 23 | 10 | b |
| येनेदं लोष्ठवत् स्मृतम् | 4 | 17 | d |
| ये ब्राह्मणगतिज्ञताः | 21 | 20 | b |
| ये भूता ये भविष्याश्च | 1 | 5 | a |
| ये मानं मेऽनुगृह्णन्त· | 16 | 35 | e |
| ये रसौकांसि भेजिरे | 20 | 31 | b |
| येऽर्जुनस्य सुता राजन् | 16 | 9 | a |
| ये विक्षिप्तेन्द्रियधियो | 9 | 46 | a |
| येषां गतिरहं परा | 4 | 64 | d |
| ये सेवन्ते धृतव्रता | 9 | 13 | d |
| यैरिदं तपसा सृष्टम् | 18 | 12 | a |
| यैस्सङ्गहीतो भगवान् | 5 | 15 | c |
| योगतन्त्रं चकार ह | 21 | 26 | b |
| योगं प्राप्य जगौ स्म षट् | 27 | 28 | d |
| योगं महोदयमृषि | 12 | 4 | c |
| योगाचार्यस्तु जैमिने | 12 | 3 | d |
| योगी योगाद्विचालित | 8 | 16 | d |
| योगीशो गवि भार्यायां | 21 | 25 | c |
| योगेश्वरत्वमैश्वर्यम् | 15 | 19 | a |
| योगेश्वरप्रसादेन | 13 | 27 | c |
| योगैश्वर्येण बालांस्तान् | 8 | 18 | c |
| योऽजमीढसुतो ह्यस्य तु | 22 | 3 | c |
| यो देवैरर्थितो दैत्यान् | 9 | 42 | a |
| योऽनरण्यस्य देहकृत् | 7 | 4 | b |
| योनिर्यथा न दुष्येत | 24 | 34 | c |
| यो मधुच्छन्दसो ज्येष्ठा. | 16 | 33 | a |

**ल**

# व्याख्यानोद्धृतानां प्रमाणवचनानां आकरनिर्देशनी

## नवमः स्कन्धः(1-24 अध्यायाः)

| Sl No | Adhyaya No | Sloka No | Text quoted | In commentary | Particulars of sources etc |
|---|---|---|---|---|---|
| | | | **अ** | | |
| 1 | 14 | 48 | अकारो वै सर्वा वाक् | विज | |
| 2 | 11 | 24 | अग्रहीदासनं भ्रात्रा | वीर | भाग.9-10-51 |
| 3 | 4 | 3-5 | अङ्गिरसो वा इमे | विज | |
| 4 | 7 | 1 | अत इञ् | वीर | अष्टा. 4-1-95 |
| 5 | 7 | 9 | अथैनमुवाच वरुणं | विज | |
| 6 | 6 | 7 | अदस्सर्वेषाम् | वीर | अष्टा.7-3-100 |
| 7 | 20 | 27 | अदात्कर्माणि मष्णारे | श्रीध | |
| 8 | 21 | 18 | अनुभाव· प्रभावे स्यात् | विज | वैज. को.8-1-8 |
| 9 | 7 | 25 | अन्नमय हि सोम्य | श्रीध | छान्दो.उ.6-5-4 |
| 10 | 7 | 25 | अन्नमयं हि सोम्य | विज | छान्दो.उ.6-5-4 |
| 11 | 7 | 27 | अन्नमयं हि सोम्य | वीर | छान्दो.उ.6-5-4 |
| 12 | 10 | 22 | अपकृष्टं पुरीषं स्यात् | विज | |
| 13 | 22 | 25 | अपतिरपत्य लिप्सु | श्रीध | |
| 14 | 7 | 17 | अपपरी वर्जने | विज | अष्टा.1-4-88 |
| 15 | 14 | 45 | अपोनर्य सुजात· | विज | |
| 16 | 4 | 40 | अपोऽश्नाति तन्नैव | श्रीध | |
| 17 | 4 | 40 | अपोऽश्नाति | वीर | |
| 18 | 22 | 13,14 | अप्यक्षरसाम्यात् | विज | |
| 19 | 4 | 64 | अप्यहं जीवितं जह्यां | विज | रामा.3-10-18 |

| Sl No | Adhyaya No | Sloka No | Text quoted | In commentary | Particulars of sources etc |
|---|---|---|---|---|---|
| 20 | 20 | 23 | अप्येते श्लोका अभिगीता | वीर | |
| 21 | 4 | 3 | अभिप्लव· पूर्वमहर्भवति | श्रीध | |
| 22 | 4 | 3 | अभ्यासे च तदभ्यास | वीर | |
| 23 | 14 | 42 | अभ्रातृकां प्रदास्यामि | वीर | मनु. स्मृ.9-3 |
| 24 | 14 | 23,24 | अमृतं वा आज्यम् | श्रीध | |
| 25 | 3 | 9 | अर्थो हि कन्या परकीय एव | वीर | शाकुन्तले.4-21 |
| 26 | 10 | 21 | अर्धचन्द्र· क्षुरप्रस्स्यात् | विज | वैज. को. 3 -7-182 |
| 27 | 16 | 27 | अश्मकान्मूलको जज्ञे | वीर | भाग.9-9-40 |
| 28 | 3 | 10 | अश्विनौ वै देवानाम् | वीर | |
| 29 | 10 | 8 | असङ्गो ह्ययं पुरुषः | विज | बृह. उ.4-3-15 |
| 30 | 6 | 50 | असन्नेव स भवति | वीर | तै त्ति. उ.2-6 |
| 31 | 14 | 36 | अस्तमेयाय | विज | |
| 32 | 5 | 3 | अहमेवाऽऽसमहमेव | वीर | |

## आ

| Sl No | Adhyaya No | Sloka No | Text quoted | In commentary | Particulars of sources etc |
|---|---|---|---|---|---|
| 33 | 11 | 1,3 | आचार्यवान् पुरुषो वेद | विज | छान्दो.उ.6-14-2 |
| 34 | 10 | 17 | आच्छादनं स्याद्वलभी | विज | हला. को. 2-148 |
| 35 | 7 | 27 | आत्मन आकाशस्सम्भूत | विज | तैत्ति. उ.2-1-1 |
| 36 | 8 | 13 | आत्मा जीवे धृतौ देहे | विज | वैज. को.6-1-6 |
| 37 | 24 | 57 | आत्मा जीवे धृतौ देहे | विज | वैज. को.6-1-6 |
| 38 | 20 | 21 | आत्मा वै पुत्रनामासि | श्रीध | कौषी. उ.2-11 |
| 39 | 20 | 21 | आत्मा वै पुत्रनामासि | वीर | कौषी. उ.2-11 |
| 40 | 20 | 21 | आत्मा वै पुत्रनामासि | विज | कौषी.उ.2-11 |

| Sl. No | Adhyaya No | Sloka No | Text quoted | In commentary | Particulars of sources etc |
|---|---|---|---|---|---|
| 41 | 8 | 23 | आत्मैवमहैत्य | विज | |
| 42 | 2 | 15 | आदित्यवर्णं तमस परस्तात् | वीर | श्वेता.उ.3-8 |
| 43 | 20 | 33 | आब्रह्मस्तम्बपर्यन्तम् | विज | |
| 44 | 6 | 5 | आर्यावर्त पुण्यभूमि· | श्रीध | अम.को. 2-8 |
| 45 | 6 | 5,6 | आसमुद्रात्पुरस्तात्तु | विज | |
| | | | इ | | |
| 46 | 14 | 42 | इति त्वा देवा इमे | विज | ऋक्.10-95-18 |
| 47 | 4 | 3 | इदमित्था रात्रम् | वीर | |
| 48 | 4 | 4 | इतमित्था रौद्रम् | श्रीध | |
| | | | उ | | |
| 49 | 10 | 10 | उग्र· कपर्दी श्रीकण्ठ· | विज | अम. को.1-3-2 |
| 50 | 10 | 10 | उग्रो जज्ञे वीर्याय स्वधावान् | विज | |
| 51 | 4 | 8 | उच्छेषण भागो वै रुद्र· | श्रीध | |
| 52 | 4 | 8 | उच्छेषण भागो वै रुद्र. | वीर | |
| 53 | 3 | 1 | उत्तानबर्हिरानर्त्तः | श्रीध | भाग.9-3-27 |
| 54 | 10 | 10 | उत्सर्जनविसर्जने | विज | अम.को.2-428 |
| 55 | 14 | 45 | उर्वश्या आयुरसि | श्रीध | |
| | | | ऋ | | |
| 56 | 4 | 20 | ऋक् पूरब्धूः | वीर | अष्टा.5-4-74 |
| 57 | 2 | 28-30 | ऋभवोऽमाराश्च मरुत· | विज | हला. को.1-4 |

| Sl No | Adhyaya No | Sloka No | Text quoted | In commentary | Particulars of sources etc |
|---|---|---|---|---|---|
| | | | **ए** | | |
| 58 | 16 | 29 | एक एव ऋषिर्यावत् | श्रीध | |
| 59 | 16 | 30 | एक एव ऋषिर्यावत् | वीर | |
| 60 | 1 | 8 | एकमेवाद्वितीयम् | वीर | छान्दो.उ.6-2-1 |
| 61 | 24 | 49-55 | एते चांऽशकलाःपुंसः | विज | भाग.1-3-28 |
| 62 | 5 | 25 | एते वै निरयास्तात | वीर | भार.12-191-6 |
| 63 | 4 | 63 | एवमुक्तिफला नियम. | वीर | ब्र.सू.3-4-52 |
| | | | **ऐ** | | |
| 64 | 5 | 3 | ऐतदात्म्यमिदं सर्वम् | वीर | छान्दो.उ.6-8-7 |
| 65 | 3 | 12 | ऐन्द्रवायवं गृह्णाति | श्रीध | |
| 66 | 3 | 12 | ऐन्द्रवायवं गृह्णाति | वीर | |
| | | | **ओ** | | |
| 67 | 15 | 31 | ओजोऽवष्टम्भबलयो. | विज | वैज. को.6-3-4 |
| 68 | 2 | 13 | ओमित्यात्मानं युञ्जीत | वीर | मना.उ.17-15 |
| | | | **क** | | |
| 69 | 2 | 14 | करणं साधकतमे | विज | |
| 70 | 8 | 22 | कश्छन्दसां योगमावेद | विज | |
| 71 | 16 | 31 | कस्य नूनं कतमस्य | विज | ऋक्.1-24-1 |
| 72 | 16 | 35 | कस्य नूनं कतमस्य | श्रीध | ऋक्.1-24-1 |
| 73 | 16 | 35 | कस्य नूनं कतमस्य | वीर | ऋक्.1-24-1 |
| 74 | 8 | 24 | कार्यते ह्यवशः कर्म | विज | भ.गी.3-5 |

| Sl. No | Adhyaya No | Sloka No | Text quoted | In commentary | Particulars of sources etc |
|---|---|---|---|---|---|
| 75 | 1 | 39 | कालाध्वनोरत्यन्तसंयोगे | विज | अष्टा.1-3-5 |
| 76 | 10 | 22 | कालो मृत्यौ यमे | विज | |
| 77 | 14 | 37 | किं क्रूरं स्त्रीहृदयम् | विज | |
| 78 | 24 | 17-19 | कुकुर भजमान शुचि | श्रीध | विष्णु. पु.4-14-12 |
| 79 | 24 | 20,21 | कुकुर भजमान शुचि | वीर | विष्णु. पु.4-14-12 |
| 80 | 13 | 6,7 | कुम्भे रेतः सिषिचतु | श्रीध | |
| 81 | 4 | 11 | कृष्णशवास्युत्तरत | विज | |
| | | | **क्ष** | | |
| 82 | 4 | 56 | क्षुद्रा रुद्रपितामहप्रभृतयः | वीर | |
| 83 | 13 | 1 | क्षुवतस्तु मनोर्जज्ञे | वीर | भाग.9-6-4 |
| | | | **ग** | | |
| 84 | 23 | 32 | गजवाजिरथास्त्रेषु | श्रीध | मार्कण्डेयपुराणे |
| 85 | 23 | 32 | गजवाजिरथास्त्रेषु | वीर | मार्कण्डेयपुराणे |
| 86 | 10 | 17 | गोपानसी तु वलभी | विज | अम. को.2-33 |
| 87 | 10 | 4 | ग्रन्थकोटिभिराकीर्णं | श्रीध | |
| 88 | 3 | 24 | ग्रहं ग्रहीष्ये सोमस्य | श्रीध | भाग.9-3-12 |
| | | | **घ** | | |
| 89 | 15 | 39 | घातुं न घातुको विप्रः | वीर | |
| | | | **च** | | |
| 90 | 20 | 32 | चक्रमाज्ञा रथाङ्गयोः | विज | |
| 91 | 20 | 32 | चक्रे सैन्ये जलावर्ते | विज | वैज. को.6-3-7 |

| Sl No | Adhyaya No | Sloka No | Text quoted | In commentary | Particulars of sources etc |
|---|---|---|---|---|---|
| 92 | 20 | 27 | चतुर्दशानां लक्षाणां | श्रीध | |
| 93 | 14 | 3 | चन्द्रमा मनसो जात | वीर | पु.सू.12-6 |
| | | | **ज** | | |
| 94 | 16 | 8 | जामदग्न्यो वरं वव्रे | विज | |
| 95 | 20 | 21 | जायायास्तद्धि जायात्वं | विज | मनु. स्मृ.9-8 |
| 96 | 16 | 35,36 | जीवतो वाक्यकरणात् | विज | |
| 97 | 10 | 11,12 | ज्ञानार्थं पुनर्नित्यसम्बन्ध | विज | स्कान्दे |
| 98 | 2 | 11 | ज्ञानी त्वात्मैव मे मतम् | वीर | भ.गी.7-18 |
| | | | **त** | | |
| 99 | 11 | 17 | तत्र साधु | वीर | अष्टा.4-4-89 |
| 100 | 20 | 23 | तदप्येते श्लोका अभिगीता· | श्रीध | |
| 101 | 5 | 3 | तद्धैतत्पश्यन् | वीर | बृह.उ.1-4-10 |
| 102 | 4 | 40 | तन्नैवाऽशितं तन्नैवाऽनशितम् | वीर | |
| 103 | 1 | 18,19 | तस्मादनृतम् | विज | |
| 104 | 1 | 8 | तस्माद्धान्यं न पर· | विज | |
| 105 | 16 | 29 | तस्य ह विश्वामित्रस्य | श्रीध | |
| 106 | 16 | 29 | तस्य ह विश्वामित्रस्य | विज | |
| 107 | 9 | 49 | तस्यान्ते सुषिरं सूक्ष्मम् | विज | महा. ना.9-8 |
| 108 | 24 | 27,28 | तस्यापि कृतवर्मशतधनु· | श्रीध | विष्णु.पु.4-14- 24 to 27 |
| 109 | 24 | 26.27 | तस्यापि कृतवर्मशतधनुः | वीर | विष्णु.पु.4-14- 24 to 27 |
| 110 | 5 | 25 | तस्याऽप्यनुग्रहार्थाय | विज | गारुडे |
| 111 | 7 | 10 | तं होवाचाजनि वै ते | विज | |

| Sl. No | Adhyaya No | Sloka No | Text quoted | In commentary | Particulars of sources etc |
|---|---|---|---|---|---|
| 112 | 19 | 9 | तिर्यक् बिलिबिलाकार | विज | |
| 113 | 19 | 4 | तीर्थं मन्त्राद्युपाध्याये | विज | वैज. को.6-3-13,14 |
| 114 | 4 | 69 | तेजो बले प्रभावेऽन्ने | विज | वैज. को.6-3-14 |
| 115 | 4 | 3,5 | ते स्वर्यन्तो ब्रुवन्न | विज | |
| 116 | 20 | 29 | त्रिदिवो व्योम्नि दिव्यपि | विज | वैज. को.7-1-29 |
| | | | **द** | | |
| 117 | 14 | 36 | ददाति प्रतिगृह्णति | विज | |
| 118 | 10 | 4 | दवो दावो वनारण्यवह्न्यो | विज | वैज. को.6-1-27 |
| 119 | 11 | 18 | दशवर्षसहस्राणि | वीर | रामा.1-1-97 |
| 120 | 22 | 15 | दाराग्निहोत्रसंयोगं | श्रीध | मनु. स्मृ.3-171 |
| 121 | 22 | 15 | दाराग्निहोत्रसंयोगं | वीर | मनु. स्मृ.3-171 |
| 122 | 22 | 15 | दाराग्निहोत्रसंयोगं | विज | मनु. स्मृ.3-171 |
| 123 | 5 | 25 | दुर्वासाश्च स्वयं रुद्र· | विज | |
| | | | **ध** | | |
| 124 | 13 | 9 | धीर्धारणावती मेधा | विज | अम. को.1-141 |
| 125 | 19 | 20 | ध्यायतो विषयान्पुंस | विज | भ.गी.2-62 |
| | | | **न** | | |
| 126 | 18 | 32 | न काञ्चन परिहरेत् तद्व्रतम् | विज | |
| 127 | 5 | 3 | न तत्र सूर्यो भाति | वीर | कठ. उ.5-15 |
| 128 | 3 | 10 | नन्द्यादित्वात् | वीर | अष्टा.3-1-134 |
| 129 | 4 | 28 | नन्द्यादित्वात् | वीर | अष्टा.3-1-134 |

| Sl. No | Adhyaya No | Sloka No | Text quoted | In commentary | Particulars of sources etc |
|---|---|---|---|---|---|
| 130 | 9 | 12 | न ब्रह्मदण्डदग्धस्य | वीर | भाग.3-14-42 |
| 131 | 11 | 17-19 | नाक्षत्रमासगणितं | विज | स्कान्दे |
| 132 | 7 | 8 | नाऽपुत्रस्य लोकोऽस्ति | विज | |
| 133 | 4 | 11 | नाभागे दिष्टं शंसति | श्रीध | |
| 134 | 10 | 11,12 | नित्यपूर्ण सुखज्ञान | विज | स्कान्दे |
| | | | **प** | | |
| 135 | 7 | 7 | पक्ष पार्श्वमरुत्साध्य | विज | वैज. को.6-1-35 |
| 136 | 24 | 57 | परमात्मेत्युदाहृतः | वीर | भ.गी.15-17 |
| 137 | 8 | 22 | पश्यन्तोऽपि न पश्यन्ति | विज | |
| 138 | 21 | 25 | पाराशरकुलोत्पन्न· | श्रीध | भार.13-45 to 47 |
| 139 | 21 | 25 | पाराशरस्सुतोत्पन्नः | वीर | भार13-45 to 47 |
| 140 | 7 | 4 | पितुश्चापरितोषेण | श्रीध | हरिवंशे.10-17 |
| 141 | 20 | 22 | पुन्नाम्नो नरकात् | श्रीध | मनु. स्मृ.9-138 |
| 142 | 20 | 38 | पुरीमवस्कन्द लुनीहि | विज | शिशुपालवधम्.1-51 |
| 143 | 14 | 36 | पुरूरवो मा मृथा मा | विज | ऋक्.10-95-15 |
| 144 | 24 | 67 | पूर्णमद· पूर्णमिदम् | विज | बृह. उ.5-1-1 |
| 145 | 16 | 34 | प्रकाशनस्थेयाख्ययोश्च | विज | अष्टा.1-3-23 |
| 146 | 24 | 58 | प्रकृतिं पुरुषश्चैव | विज | भ गी.13-19 |
| 147 | 4 | 48 | (पातु) प्राणतरक्षायां विलम्बम् | वीर | श्रीरङ्गराज पूर्वशत.12 |
| 148 | 16 | 29 | प्राणभृत उपदधाति | वीर | |
| 149 | 2 | 11 | प्रियो हि ज्ञानिनोऽत्यर्थम् | वीर | भ. गी.7-17 |

| Sl No | Adhyaya No | Sloka No | Text quoted | In commentary | Particulars of sources etc |
|---|---|---|---|---|---|
| | | | **ब** | | |
| 150 | 24 | 58 | बलमानन्द ओजश्च | विज | |
| 151 | 2 | 6 | बभ्रूर्गौ· सौरभेयाश्च | विज | |
| 152 | 1 | 9 | बहुस्यां प्रजायेय | वीर | तैत्ति.उ.2-6 |
| 153 | 4 | 56 | बहुस्यां प्रजायेय | वीर | तैत्ति.उ.2-6 |
| 154 | 9 | 49 | ब्रह्मविदाप्नोति परम् | विज | तैत्ति.उ.2-1-1 |
| 155 | 6 | 50 | ब्रह्म वेदस्तपस्तत्त्वम् | विज | |
| 156 | 6 | 2 | ब्रह्महस्तिभ्यां वर्चस | वीर | अष्टा.5-4-78 |
| 157 | 5 | 25 | ब्रह्मादयश्च तत्कीर्ति | विज | गारुडे |
| 158 | 5 | 25 | ब्रह्मादि भक्तिकोट्यंशात् | विज | गारुडे |
| 159 | 9 | 49 | ब्रह्मेति परमात्मेति | विज | भाग.1-2-11 |
| 160 | 2 | 17 | ब्राह्मेण जैमिनि रूप | वीर | ब्र.सू.4-4-5 |
| | | | **भ** | | |
| 161 | 10 | 2 | भगवान् ब्रह्ममयः | वीर | |
| 162 | 7 | 19 | भगो योन्यां भगो यत्ने | विज | वैज. को.6-5-58 |
| 163 | 24 | 27,28 | भजमानश्च विदूरथ· | श्रीध | विष्णु.पु.4-14-22,23 |
| 164 | 20 | 28 | भद्रो गजो (मन्दो) मृगश्चेति | विज | हला. को.2-60 |
| 165 | 20 | 39 | भरद्वाजो मरुद्भिश्च | विज | पाद्मे |
| 166 | 9 | 14 | भवो भद्रे हरे प्राप्तौ | विज | वैज. को. 6-1-41 |
| 167 | 4 | 8 | भागधेये नैव रुद्रं | श्रीध | |
| 168 | 23 | 39 | भार्या वश्यास्तु ये केचित् | श्रीध | विष्णु. पु.4-12-13 |

| Sl No | Adhyaya No | Sloka No | Text quoted | In commentary | Particulars of sources etc |
|---|---|---|---|---|---|
| 169 | 23 | 38,39 | भार्यावश्यास्तु ये केचित् | वीर | विष्णु. पु. 4-12-13 |
| 170 | 19 | 15 | भाव· पदार्थे सत्तयाम् | विज | वैज. को .6-1-43 |
| | | | म | | |
| 171 | 6 | 52 | मङ्गलानन्तरारम्भ | विज | अम. को .3-402 |
| 172 | 13 | 10 | मन्युशोकौ तु शक् स्त्रियाम् | विज | अम. को .1-207 |
| 173 | 11 | 17-19 | मम योनिर्महद्ब्रह्म | विज | भ.गी.14-3 |
| 174 | 14 | 27 | महानिशा द्वे घटिके | श्रीध | |
| 175 | 14 | 27 | ,, | वीर | |
| 176 | 9 | 31 | माहेयी सौरभेयी च | विज | |
| 177 | 4 | 64 | मित्रभावेन सम्प्राप्तं | विज | रामा.6-18-3 |
| 178 | 4 | 63 | मुच्येत यन्नाग्न्युदितेऽपि | वीर | |
| 179 | 1 | 18,19 | मैत्रावरुणीमिष्टिं कुर्यात् | विज | |
| | | | य | | |
| 180 | 6 | 35 | यज्ञो वै विष्णु | वीर | तैत्ति. ब्रा.1-2-5 |
| 181 | 16 | 13 | (आत्मा...)यत्नेऽर्केऽग्नौ मतौ वाते | विज | वैज. को.6-1-7 |
| 182 | 24 | 56 | यदा यदा हि धर्मस्य | विज | भ.गी.4-7 |
| 183 | 4 | 4 | य यज्ञेन दक्षिणया | श्रीध | |
| 184 | 20 | 22 | यस्मात्पुत्रमनुशिष्टं | विज | |
| 185 | 8 | 5 | यस्य स्यादज्ञया पृथ्वी | विज | |
| 186 | 22 | 38-40 | याज्ञवल्क्यात्त्रयीमधीत्य | श्रीध | |
| 187 | 19 | 6 | यावके बल्कुल्माषौ | विज | वैज. को.3-8-53 |

